तथा च जीवावस्थायामेवैषां तावन्नित्यत्वं प्रतिपादयितुमाह—

**न[1] ह्येवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमितः परम् ॥ १३ ॥**

यं मां वर्तमानं मन्यसे सोऽहं न[2] जातु नासम् । नञ्द्वयेन पूर्वकाल[3]-भावमेव प्रकृतं[4] प्रतिपादयति, नाहमभूत्वा भवामि, किंतु प्रागपि भूत्वा इदानीमपि भवामि । यथाहं तथा त्वमपि संप्रति वर्तमानत्वेन प्रतिभासमानः पूर्वमप्यासीरेव, न त्वभूत्वा भवसि । यथा च त्वम्, एवमिमेऽपि व[5]र्तमानत्वेन प्रतिभासमानाः सर्वे राजानः पूर्वमासन्नेव, न पुनरभूत्वा भाव एषाम् । न[6] च सर्व एव वयमितःपरमस्माच्छरीरादनन्तरं न भविष्यामः, भविष्याम एवेति । अनेन युष्मदस्मत्पँरपरि[परापर]भेदेन[7] व्यवस्थितस्य जीवलोकस्य कालत्रयेऽपि सत्तासम्भवान्नित्यत्वं प्रतिजानीते । आसमित्यादि तु भूतादिक्रियाकर्तृत्वव्यप-देशो विनाशधर्मकशरीरसामानाधिकरण्यभ्रमकृतः, न तु नित्यस्य भूतादिव्यपदेश उपपद्यते इति ॥

ननु देहनिष्ठस्य जीवस्य कर्तृत्वज्ञातृत्वाद्युपलम्भः; तत्कथं तद्विनाशे तस्य नित्यत्वं स्यादिति दुराशङ्कां प्रत्यक्षोपलभ्यनिदर्शनप्रतिपादनेन परि-हर्तुमाह—

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १४ ॥**

---

१. IO, BN[1], BN[2] and BS[2] न एवाहं
२. IO and BN[2] omit न
३. BN[1] पूर्वकालमेव
४. BN[2] प्राकृतं
५. IO omits वर्त...सर्वे
६. IO omits न च...नन्तरम्
७. BN[1] and BN[2] युष्मदस्मदादिपरि

अस्मिन् वर्तमानबुद्ध्या परिगृहीते देहे यथास्य देहिनस्तत्संवेदितुरात्मनः कौमारं कुमारभावो बाल्यम्, तथा यौवनं तारुण्यम्, तथा जरावृद्धभावः इत्यवस्थात्रयमनित्यम्, तेन देहिना भूतादित्वेनानुबन्धीयमानं सम्बध्यते, तथा तेनैव निदर्शनेन इतो देहादन्यस्य देहस्य प्राप्तिः, तस्यात्मनो देहद्वयव्यापकस्य स्थितस्य[1] स्थितैव। तत्र तत्त्वज्ञो मोहं न गच्छति। शरीरविनाशे शरीरिणमविनष्टं मन्यते, नित्यमेव तमवगच्छति[2]। किमनेनोक्तं भवति? यथा बाल्याद्यवस्थाविनाशेन[3] न कश्चिदात्मविनाशं मन्यते, किन्तु सर्वः कश्चित्प्रतिपत्ता बाल्याद्यवस्था[4] अतीतानागतत्वेनानुसन्दधानः[5] [6]प्रतिपत्तारमात्मानमेकं स्थितं मन्यते, तथैव नानादेहसम्बन्धमतीतानागतत्वेनानुसन्दधानः प्रबुद्धो नित्यमात्मानमवगच्छति। एताभिश्च स्थूलाभिः कौमाराद्यवस्थाभिस्तद्गताः सूक्ष्मा जागरादयोऽप्यवस्थाः प्रतिपादिता वेदितव्याः। तथा[7] हि—तास्वन्योन्यभिन्नरूपासु प्रवर्तमानासु उत्पादविनाशवर्तीषु उपलब्धृत्वेनैकेन लक्षणेन युक्तः ताभ्योऽत्यन्तविलक्षणस्वभाव आत्मा सर्वस्यैव स्वसंवेदनसिद्धो व्यापकत्वेन व्यवस्थितः, ततश्च[8] यथैकस्मिन् देहे परस्परविविक्तस्वभावजागराद्यवस्थाविशेषसंवेदितृत्वमात्रैक-

---

१. BN² omits स्थितस्य

२. BN² तमेव गच्छति

३. IO and BN² विनाशे

४. BN² बालाद्यवस्था

५. IO and BN¹ त्वेन संदधानः

६. BN¹, BN² and BS² omit प्रति...दधानः BN¹ reads this in the margin.

७. IO omits तथा हि

८. BS² and BN² omit ततः IO, BS² and BN¹ read तत.........सिद्धः in the margin.

९. BN¹ विविक्तलक्षणस्वभाव BN² and BS² विविक्तलाक्षणिकस्वभाव

लक्षण [1]एक आत्मा सिद्धः, तथा देहान्तरेष्वपि लक्षणविशेषस्य[2] सुसूक्ष्मस्या-प्यभावादेक एव सिद्धः ॥

तदनेन मयैकीकृतदेहदेहिव्यतिरेकोपपत्तिप्रतिपादनद्वारेण पारमार्थिकमात्माद्वैतमुपक्रम्य इदानीं यथाप्रतिपादिते आत्मस्वरूपे येन हेतुना सर्वजन्तवो मुह्यन्ति, अन्यथैव तं प्रतिपद्यन्ते, तत्प्रतिपादनपूर्वं तत्प्रतिषेधोपायमप्युपदेष्टुमाह—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १५ ॥

मीयन्त एताभिरिति कृत्वा देहत्वविशिष्टस्य प्रमातुः प्रमेयार्थपरिच्छेदसाधनं मात्रा इन्द्रियशक्तय उच्यन्ते; स्पृश्यन्ते वेद्यतया परामृश्यन्त इति स्पर्शा इन्द्रियार्थाः; ते च द्विप्रकाराः—श्रोत्रादिबाह्येन्द्रियस्पृश्यमानाः शब्दादिरूपाः, केवलान्तःकरणस्पृश्यमानाः सुखादिरूपाः । तुशब्दो व्यतिरेके । " परमार्थतो नित्यस्यात्मनो मात्रास्पर्शाः[3]; पुनः शीतोष्णसुखदुःखदा इति सम्बन्धः । ते च शरीरेण सम्बध्यमानाः 'शीतमनुभवामि' 'उष्णमनुभवामि' इति प्रत्ययं ददति; अन्तःकरणेन सम्बध्यमानाः 'सुखमनुभवामि' 'दुःखमनुभवामि' इति प्रत्ययं ददति; ततश्च शीतोष्णसुखदुःखादिष्वात्मधर्म[4]मारोपयन्तः उत्पादविनाशस्वभावत्वादनित्याः आत्मन्यनित्यताभ्रममुत्पादयन्तः सर्वप्राणभृतो मोहयन्तीत्यर्थः । यतश्च

---

१. $BN^1$, $BN^2$ and $BS^2$ omit एक...लक्षण
२. $BN^2$ and $BS^2$ विशेषणस्य
३. IO and $BS^1$ मात्रास्पृशाः
४. $BS^1$ धर्मत्वमारो

ते परमार्थतः प्रतिक्षणविनाशिनः ततः प्रोदितोपपत्त्या नित्यमात्मानं प्रत्यवमर्शन् तांस्तितिक्षस्व सहस्व तत्समर्पितेनानित्यसुखादिस्पर्शमात्रेण नित्यनिर्विकारस्वात्मावष्टम्भप्रतिष्ठां मा त्याक्षीः। यथा त्रैलोक्यैकवीरेण त्वया दुर्वारदर्पोद्धुरमापतन्तः प्रतिद्वन्द्विनो निष्प्रकम्पनिजपौरुषपरिस्पन्दसुस्थितेन मनागप्यन्तरनुपजातविक्रियेणासकृत्सावज्ञमुद्व्यूढभरतया सोढाः, तथैव निसर्गनिर्विकारे सत्ये स्वात्मन्यहङ्कारमारोप्य तेऽपि स्पर्शाख्याः प्रतिद्वन्द्विनः प्रकृतिनिस्सारतत्त्वरूपनिरूपणमात्रेण सह्यन्ताम्। यथास्थितवस्तुविमर्शाभावमात्रजनितोऽयं व्यामोहः, यदात्मनि देहबुद्ध्यादिधर्मारोपेण 'कृशोऽहम्, पूर्णोऽहम्, सुखितोऽहम्, दुःखितोऽहम्' इत्यादयः प्रत्ययाः तत्सामानाधिकरण्येन प्रादुर्भवन्ति। तत्त्वतः पुनः ते स्वात्मैक्येनावस्थिता बहिरन्तःकरणशक्तिभिः केवलं स्पृश्यन्ते, न तु तावता कांचिदप्यात्मनो विकारकणिकां सम्पादयितुं क्षमाः। स्फटिकदर्पणोपमो ह्ययमात्मा नीलपीताद्याभासतुल्याभिः स्फुरन्तीभिरपि सुखादिप्रतीतिभिर्नान्यथा कर्तुं शक्यते, यथोक्तम्—

"आसक्तिसामर्थ्यवशाद्विचित्राः पदार्थजातस्य विभान्ति भासाः।
प्रपंचतेऽन्तर्न तु जातु धीमान् विकारमादर्श इवैव प्रसन्नः॥" इति।

---

१. IO समर्पितो
२. IO, BN[1] and BN[2] omit दुर्वार
३. IO संस्थितेन
४. IO, BN[1] and BN[2] द्व्यूढतरतया
५. IO and BN[1] omit सत्ये BS[2] reads this word in the margin. BN[2] सत्त्वे
६. BN[1] व्यामोहयदात्मनि
७. IO रण्ये च
८. BN[2] पीत is erased.
९. BS[1] adds निकट
१०. IO and BN[1] प्रपद्यते तन्न
११. BS[2] इवाप्रसन्नः

अत एव मात्रास्पर्शशब्देनेन्द्रियार्थव्यपदेशः कृतः । तदनेन श्लोकेन सर्वसंवेद्यभङ्गुरस्वभावकौमारजागराद्यवस्थावत् सुखाद्यवस्थास्वपि सर्वप्राणिगतासु संवेदकत्वेनैवैकेन स्वभावेन[1] युक्तो नित्यो[2] व्यापक एक[3] एवात्मा प्रतिपादितः । न चैतावता एकस्य सुखित्वादौ[4] सति सर्वसुखित्वादि[5]प्रसङ्गः, यतो मायोद्भावितान्योन्यभेदाभासा एव प्रमातारः सततं परस्परविभक्तमात्मानमवगच्छन्ति, न तु पारमार्थिकः परः प्रमाता । तत्र हि एकस्मिन् सर्वदा सर्वत्र सर्वथा निर्विशेषस्वभावे सर्वमिदं प्रतिबद्धम्, यथोक्तम्—
"तं प्रपद्ये प्रजासृजम्" इति उपक्रम्य—

"यस्मिन्नित्ये तते तन्तौ दृढे संव्य[6]वतिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वाङ्गे[7] विश्वकर्मणि ॥" इति ।

तदेवंस्वभावे सत्ये[8] स्वात्मनि सुव्यवस्थितत्वं मुक्तलक्षणमिति प्रतिपादयितुमाह—

**यं[9] हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृ[10]तत्वाय कल्पते ॥ १६ ॥**

[11]यं पुरुषमुक्तलक्षणज्ञानैकताननिर्विकल्पप्रज्ञैकतया मुमुक्ष्ववस्थायां वर्तमानम्; अत एव धीरं परिज्ञातसदसत्पदार्थपरमार्थम् ; अत एव च[12] समदुःखसुखं समे

---

१. All except BS[1] omit स्वभावेन
२. IO, BS[1] and BS[2] add युक्तो
३. IO and BS[2] omit एक
४. BN[2] omits सुखि...सर्व
५. IO omits आदि
६. IO स व्यवतिष्ठति
   BN[2] स्रगिव तिष्ठति
७. IO and BN[2] omit विश्वाङ्गे
८. IO omits सत्ये
९. BN[1] has only the pratīka and not the full verse.
१०. BS[1] सोऽस्य तत्त्वाय
११. IO omits यं
१२. IO omits च

मनोवेद्यत्वमात्रेणैकेन रूपेण स्पृश्यमाने तुल्ये दुःखसुखे यस्य तथाविधम्; घटादिवद् वेद्यत्वमात्राविशिष्टरूपैः सुखादिभिर[1]न्तरनुपजनितविकारं सन्तम्; एते जन्मविनाशधर्म-योगादनित्याः 'सुखितोऽहम्' इत्यादिविपर्ययप्रत्य[2]यरूपाः शब्दादयो न व्यथयन्ति, तद्विविक्तवेदकैकस्वभावात् सत्यादात्मनो न प्रच्यावयन्ति । सोऽमृतत्वाय प[3]रमात्म-समापत्तिवशत्वाय कल्पते संपद्यते, मुक्तो भवतीत्यर्थः ॥

अ[4]थोपपत्त्युपन्यासपूर्वमात्मनो वेदकैकस्वभावस्य पारमार्थिकीं सत्ताम्, तथा त[5]त्प्रमेयस्वरूपस्य देहादेश्च ज[6]न्मविनाशवतस्तदभावं प्रतिपादयितुमाह—

**नासतो विद्यते [7]भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १७ ॥**

इह स्वभावादेव यदविद्यमानं वस्तु तस्यासतो भावः सत्ता नास्ति, तथैव स्वभावतस्सतो नित्यस्याभावो विनाशो नास्ति, एतयोस्सदसतोः प्रकाशतमसो-रिवात्यन्तपरस्परविरोधात् । किंत्वेतयोः द्वयोरपि तत्त्वविद्भिः साक्षात्कृतपरमार्थैरन्तो निष्ठा निश्चयो दृष्टो विज्ञातः, न त्वतत्त्वविद्भिः । ते ह्यचिन्त्याद्भुतस्वभावपरमेश्वर-मायाशक्त्युद्भावितविषयप्रत्ययतया सत्यमात्मानमप्रत्यवमृष्यन्त एवासदनित्यत्वादिना वास्तवसद्भावरहितं देहादिवस्त्विदन्तया संवेद्यमानत्वात् सत्त्वेन प्रतिपद्यन्ते । परमार्थतस्तु सन्नित्यमात्मतत्त्वमप्रत्यभिज्ञायमानत्वादसत्वेन प्रतिपद्यन्ते ॥

---

१. BN[2] दिभिरनुपजनित
BN[1] दिभिरन्तरमुपजनित

२. BS[1] प्रत्ययहेतवः स्पर्शशब्दाभि-हिता विषयाः शब्दादयो न चाल-यन्ति । तद्विविक्त

३. BS[1] and BS[2] परमार्थसत्परमात्म.

४. BN[1] अथोपपत्त्युपलब्धिभ्यामपूर्व-
IO अथोपपत्त्यास...मात्मन एकैक

५. BS[1] तत्प्रमेयरूपस्य

६. BS[2] दर्प is noted as another reading for जन्म
BN[1] इत्यविनाश

७ BN[1] omits भावो...दर्शिभिः

ततश्च तत्त्वतः किं स[1]त् किमसदित्युपदेष्टुमाह—

अविनाशि तु[2] तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १८ ॥

एतयोः सदसतोर्मध्यात्तदवि[3]नाशि विनाशधर्मरहितत्वात्परमार्थतः सद्विद्धि जानीहि । किं तत्, येनैकेनेदमन्योन्यभिन्न[4]स्वभावमयं सर्वं चराच[5]रवस्तुजातं ततं कर्तृत्व-विवक्षया विस्फा[6]रितम्, ज्ञातृत्वविवक्षया वा[7] व्याप्तम् ? एक एव हि परमार्थतः सर्वकर्ता सर्वज्ञः परमेश्वरः परमात्मा ; तदवभासितान्योन्यभेदानां तु क्षेत्रज्ञानां देहादिकमेवात्मत्वेन प्रतिपद्यमानानां परिमितवि[8]षयं कर्तृत्वं ज्ञातृ[9]त्वं च, न वास्तवम् । ए[10]वमस्यात्मतत्त्वाभिधानस्य वस्तुनोऽव्ययस्य [11]देशकालाद्यवच्छेदरहितत्वादक्षयस्व-भावस्य तद्विलक्षणः कार्यज्ञेयरूपो न क[12]श्चिदर्थो विनाशमभावं कर्तुमर्हति । न हि नित्यस्य सर्वथानवच्छिन्नमहिम्नोऽर्थस्यानित्योऽवच्छेद्यः प[13]दार्थो विनाशाय प्रभवतीति ॥

---

१. BS[1] omits किं सत्
२. BN[1] omits तु...मर्हति
३. IO नाशविनाश
४. BS[1] भिन्नावभासमयं In BS[2] the reading adopted above is erased.
५. BS[1] and BS[2] चराचरं वस्तु
६. BN[2] विस्तारितं is noted as another reading.
७. BN[2] omits वा
८. IO विषयकर्तृत्वं
९. BN[2] ज्ञत्वं
१०. IO एव सत्यात्म
११. BN[2] adds अमायस्य
१२. BS[1], and BN[1] BN[2] न किञ्चिदर्थो
१३. BS[1] and IO पदार्थविनाशाय

सत्स्वरूपं प्रतिपाद्य असत्स्वरूपं प्रतिपादयितुमाह—

**अन्तवन्त इमे[1] देहा नित्यस्योक्ताः शरीरिणः ।**
**विनाशिनो[2]ऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १९ ॥**

सर्वशरीरेषु सर्वावस्थासु च अविलुप्तोपलब्धत्वमात्रैकलक्षणत्वान्नित्याविनाशिनः[3], तथा देहादिभिरवच्छेत्तुमशक्यत्वादप्रमेयस्य इयत्तादि[4]कलनाविषयभूतस्य शरीरिण आत्मन इमे देहाः, तद्विलक्षणाः[5] अन्योन्यभिन्नागमापायि[6]धर्मकत्वाद्विनाशिनः, विनश्वरस्वभावत्वात्; तथा देशकालादि[7]परिच्छेद्यत्वाद् अन्तवन्तः इयत्तादिकलनाविषयभूता वेद्यत्वमात्रेण सम्बद्धा इति देहरूपस्य वस्तुनः परमार्थविनश्वरस्य ज्ञेयत्वमात्रादिना हेतुनात्मसम्बद्धस्य विनाशे सत्यात्मनोऽपि विनाशप्रतिपत्तिरविद्याविजृम्भितम्, तच्च त्वयि नोपपन्नम् । अतो यथाप्रतिपादितात्मतत्त्वप्रतिष्ठाह[8]ङ्कारो वक्ष्यमाणयोपपत्त्या दुष्परिहरं स्वकर्मानुतिष्ठन् युध्यस्व, प्रस्तुतं समरकर्म समाचरेति ॥

अथ युद्धं नाम परहननरूपतया हिंसात्मकं कर्म ; तत्कथमहं गुरुज्ञात्यादि[9]वधलक्षणे घोरे कर्मणि प्रवर्तेय[10] इति यन्मन्यसे तदेतदात्मस्वरूपानभिज्ञत्वजनितमोह-

---

१. BN[1] omits इमे...भारत
२. IO and BN[2] अनाशिनो
BS[2] विनाशमव्ययस्यास्य; for विनाश we find अनाश written as an alternative reading.
३. BN[1] नित्यस्याविनाशिनः
४. BN[1] इयत्ताकलना
५. BN[2] विलक्षणोऽन्यो
६. BS[1] पायधर्म
७. BS[1] कालपरि
८. BS[1] प्रतिष्ठिताह
९. IO ज्ञातिवध BN[2] A reading omitting ज्ञात्यादि is also noted.
१०. IO प्रवर्तयामीति

विलसितमेव, यत :—

य एनं वेत्ति हन्तारं[1] यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २० ॥

यो मायावशादत्यन्तनिर्विकारपरमार्थसन्तमात्मानमप्रत्यवमृषन्[2] तद्विलक्षणं[3] देहमेवात्मत्वेन मन्यमानो हननादिदेहधर्माधिरोपणेन [4]एनं सत्यमात्मानं हन्तारं[5] हननक्रियाकर्तारं वेत्ति प्रतिपद्यते, यश्चैनमेवं[6]प्रतिपादितलक्षणमविनाशिनमात्मानं विनाशलक्षणदेहधर्माध्यारोपणेन हतं हिंसितं मन्यते, तावुभावपि मोहवशादनात्मन्यात्माभिमानग्रहग्रस्तसम्यग्ज्ञानौ[7] न जानीतः, सत्यस्यात्मनः स्वरूपं[9] न बुध्येते[8], यतोऽयं पर आत्मा सर्वमेवेदं परमनिर्विकारचिन्मात्रस्वभावः स्वात्मतया सर्वदा विमृषन्न हन्ति, न[10] च हन्यते हन्तृतानिबन्धनं[11] हननक्रियाकर्तृत्वं न प्रतिपद्यते, नापि हन्तव्यतानिबन्धनं[12] हननक्रियाकर्मत्वम्[13]; एते हि विकल्पविपर्ययज्ञानात्मक[14]-व्यवहाराणां क्षेत्रज्ञानामेव सम्भवन्ति, न परमात्मनः ॥

---

१. BN[1] omits हन्तारं...न हन्यते
२. IO omits सन्तमात्मानं...न एनं
३. BS[1] विलक्षणदेहं
४. BN[1] एवं
५. BN[2] omits हन्तारं
६. BN[1] and BS[1] एव प्रतिपादित
७. BN[1] आत्मन्यनात्म-
८. BN[1] and BN[2] बुद्ध्यते
९. BN[1] and BN[2] स्वरूपः
१०. IO omits न च हन्यते
११. All except BS[1] add हन्तव्य
१२ BN[1] and BN[2] omit हन्तव्यता-निबन्धनं
१३. BN[1] and BN[2] क्रियायाः
१४. IO, BN[1] and BN[2] विकल्पाविपर्यय

न जायते म्रियते वा कदाचिन्नायं[२] भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२१॥

अयमुक्तलक्षण आत्मा देशकालाकारावस्थाद्यवच्छेदरहितः चिन्मात्रस्वरूपत्वान्न जायते न[३] उत्पद्यते, नित्यमुत्पन्नरूपत्वात्; नापि म्रियते विनश्यति; नापि जन्ममरणान्तरालवर्ति[४]स्थित्यवस्थारूपं भावविकार[५]मनुभवति; ते हि जन्मस्थितिविनाशात्मका अवस्थाभेदा देहाद्यनित्यभावाश्रयाः; ते हि भावा अभूतपूर्वधर्माविर्भावे जाता इत्युच्यन्ते। भूतपूर्वधर्मतिरोभावे च विनष्टा इत्युच्यन्ते; तदन्तराले च तत्तत्प्रत्ययप्रवाहसादृश्यभ्र[६]मात् स्थिता इत्युच्यन्ते। स च तेषामपुनर्भावी भावः आत्मनस्तु सदाभूतस्य नाभावसम्बन्धः स[७]दैकलक्षणाव्यभिचाराच्च न धर्मान्तराविर्भावतिरोभावाविति जन्मस्थितिविनाशलक्षणावस्थात्रयप्रतिषेधोऽस्यानेन श्लोकेन प्रतिपादितः॥

इदानीमेत एव भावविकारा विशेषतोऽस्य[८] प्रतिषिध्यन्ते। तत्रायमात्मा न जायते नोक्तेन क्रमेणोत्पद्यते[९] इत्यजः, जन्मलक्षणानित्यभावविकाररहितः; तथा

---

१. BN[1] omits म्रियते...शरीरे

२. IO नाहं

३. BN[1] omits न

४. IO न्तरालवत् स्थित्यवस्थारूपत्वात् नापि म्रियते विनश्यति नापि जन्ममरणान्तरालावस्थारूपमनुभवति। ते हि.

५. BN[1] BN[2] and BS[2] omit विकारं

६. BS[1] and BS[2] भ्रमात्

७. IO, BN[1] and BS[2] स चैक

८. IO and BN[1] विशेषस्य प्रति is found as a reading. BS[2] notes as an alternative, the reading found in IO and BN[1]; the other reading given in BS[2] is विशेषणान्यस्य

BN[2] विशेषणैरस्य प्रतिषिध्यन्ते

९. BN[1] उत्पद्यते जन्मादिलक्षणा

नित्यः सदैकस्वभावावियुक्तः इत्यनेनास्य प्रतिक्षणं धर्मान्तराविर्भावतिरोभावलक्षणो विपरिणामाख्यो विकारः प्रतिषिध्यते ; शाश्वतः शश्वत्सम्पूर्णेन स्वरूपेण युक्त इत्यनेन वि[1]वृद्धिलक्षणो विकारोऽस्य प्रतिषिध्यते; न ह्ययमनित्यभाववत्पूर्वमपचितो भूत्वोपचयरूपं विकारमापद्यते; तथा पुराणः पू[2]र्वकोटेरसम्भवात् सततमेव चिरन्तन इत्यनेनापक्षयलक्षणो विकारः[3] प्रतिषिध्यते, न ह्ययमुपचितो भूत्वा पुनरपचीयते, देहादि[4]भाववत् ; तथा शरीरे हन्यमाने नायमात्मा हन्यते शरीरस्यै[5]वानित्यत्वात्, जन्माद्यवस्थाजुषो विनाशावस्थापि सम्भवति, न तु नित्यस्यात्मन इत्यनेन विनाशलक्षणो विकारोऽस्य प्रतिषिद्धः । अस्तित्वलक्षणस्तु षष्ठो विकारः प्रागुक्तावस्थात्रयमध्ये भूत्वा भावशब्देन प्रतिपादित इति अधुना नोक्तः । यदि वा केचिदस्तित्वं विकारत्वेन नेच्छन्तीति नोक्तः ॥

एवं सकलभावविकाररहितम्

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ [6]हन्यते हन्ति वा कथम् ॥ २२ ॥**

एवंप्रतिपादितस्वरूपमविनाशिनमात्मानं यः पुरुषः प्रमाता नित्यं सदैव जानाति, स तदभिन्नमात्मानं प्रतिपद्यमानः कथं केन प्रकारेण हन्यते विनश्यते, हन्ति वा, परं विनाशयति ? हननक्रियाकर्तृकर्मभावोऽयं शरीरमात्रप्रतिबद्धाभिमानेषु प्र[7]तिबुद्धेषु क्षेत्रज्ञेष्वेव व्यवस्थितः ॥

---

१. BS[2], BN[1] and BN[2] विवृद्ध-
२. IO, BN[1] and BN[2] पूर्वकोटीर
३. BN[2] adds अस्य
४. BN[2] देहाद्यभाववत्
५. BN[1] शरीरस्येव
६. IO and BN[2] read कं घातयति हन्ति कम् BS[1] and BS[2] note this as an alternative reading.
BN[1] omits the entire verse.
७. BN[2] अप्रबुद्धेषु

ननु हननादिना [1]देहविनाशे सति [2]चेतनधर्मानुपलम्भः; तदात्मनो देह-विनाशे सति कथमविनाशत्वमवगम्यत इति व्यामोहव्यपोहाय दृष्टान्तनिदर्शनपूर्वं पुनरपि नित्यत्वमस्य द्रढयितुमाह—

वासांसि [3]जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥

यथा कश्चित्पुरुषो जीर्णान्युपभुक्तानि वस्त्राणि त्यक्त्वा स एव सन्नन्यानि नवानि उपभोगक्षमाणि गृह्णाति उपादत्ते—इत्यनेन जन्मादिविविधविकाराक्रान्तनानाशरीरसंयोगवियोगवशान्नास्य [4]पुरुषस्य तत्संवेदितृत्वमात्रैकलक्षणवियोग इति नित्य एवायमनित्यैः शरीरधर्मैर्मनागप्यसंस्पृष्टः ॥

[5]यत :—

नैनं छिन्दन्ति [6]शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २४ ॥

[7]एनमात्मानं शस्त्राणि खड्गादीनि शरीरमिव न छिन्दन्ति न द्विधा कुर्वन्ति; तथैवाग्निर्नैनं दहति; नापः क्लेदयन्ति; न च मारुतः शोषमुपनयति; छेदादिभिर्विक्रियमाणे शरीरे न तस्य निसर्गनिर्विकारस्य विकारसंस्पर्शः ॥

---

१. BN² देहाविनाशे
२. IO omits चेतन...सति
३. BN¹ omits जीर्णानि...देही
४. IO, BS² and BN¹ omit पुरुषस्य
५. BN¹ and BN² omit यत:
६. BN¹ omits शस्त्राणि...मारुत:
७. BN² एवमात्मानं

तथा हि—

अच्छेद्योऽयम[1]दाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २५ ॥

अयमात्मा छेदादिक्रियाविकार्यो न भवति; पूर्वोक्तस्यैव निर्वचनमेतत् । तथा नित्य इत्यादीनि विशेषणान्यविनाशित्वार्थानि परस्परसहायभूतानि प्रतिपत्तिदार्ढ्याय बहूनि प्रयुक्ता[2]नि वेदितव्यानि ॥

तथा चा[3]यम्—

अव्यक्तोऽयमचि[4]न्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २६ ॥

शब्दादिव्यक्तार्थविषयाणां श्रोत्रादीनामिन्द्रियाणामविषयभूतत्वादयमव्यक्त इत्युच्यते । तथा वेदकैकस्वभावत्वादन्तःकरणेनापीदन्तया विष[5]यीकर्तुमशक्य इति अचिन्त्यः चिन्तनक्रियाया अगोचरः । तथा सर्वथा[6] चैतन्यमात्रातिरिक्तधर्मान्तरासंस्पर्शादविकार्यः, विक्रियां नेतुमशक्यः । तस्मादेवमुक्तेन प्रकारेण सर्वतः सर्वेन्द्रियगोचरादर्थादत्यन्तव्यतिरिक्तं वेदकत्वेन सर्वार्थव्यापकमेनमात्मानं बुद्ध्वा शरीरविनाशेन तद्विनाशभ्रमेण नैनमनुशोचितुमर्हसि ॥

---

१. BN[1] omits अदाह्य...सनातनः
२. IO omits प्रयुक्तानि
३. BS[2] and BN[1] चेदं
४. BN[1] omits अचिन्त्यः...अर्हसि
५. BN[1] वेद्यीकर्तुं
६. IO, BS[1] and BS[2] सर्वदा

एवम् "त्वं मानुष्येन" इत्यादिग्रन्थेन वितत्य प्रतिपादितां[1]मपि सकल-प्रकरणप्रतिपाद्यस्य ब्रह्माद्वैतज्ञानस्य शरीरशरीरिव्यतिरेकोपपत्तिप्रतिपादनरूपां प्रथमां भूमिकां[2] सुसूक्ष्मनिर्मलप्रज्ञावधानविशेषावसेयत्वात् संप्रत्यप्र[3]तिपद्यमानमर्जुनं मन्वानो भगवान् सर्वपक्षान्तराक्षेपेण बोधयितुमाह—

अथै[4]वैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
त[5]थापि त्वं महाबाहो नैनं[6] शोचितुमर्हसि ॥ २७ ॥

अथवा मदुपदिष्टोपपत्तिक्रमेण यथोक्तमर्थमप्रतिपद्यमानस्त्वमेनमात्मानं नित्यजातं नित्यं वा मृतं मन्यसे; तथापि तेनापि प्रकारेण नैनं विनाशित्वेन शोचितुमर्हसि। इदमत्र तात्पर्यम्—आत्मविषया द्वयी प्रतिपत्तिः सम्भाव्यते, नित्यो वा स्यादनित्यो वा। तृ[7]तीयः पक्षो न सम्भवति। तत्र नित्यत्वप्रतिपत्त्या यद्येनं नित्यजातमेव सदैवोत्पन्नं विनाशरहितं मन्यसे, तथाप्यस्याविर्नाशित्वाच्छोकस्य कोऽवसरः? अथ विनाशित्वप्रतिपत्त्या नित्यमेव मृतं सत्तारहितमेनं मन्यसे, तथापि नित्य[9]विनष्टत्वादस्य शोचनीयत्वाभावः ॥

---

१. IO and BN[1] प्रतिपादितानि This is noted as a reading in BS[2]. BS[1] प्रतिपादितमपि

२. BN[1] and BN[2] add अपि

३. IO omits प्रति

४. BN[1] अथ नैवं and omits the rest of the verse. BS[2] notes नैवं as a reading.

५. IO तथाप्येवं

६. BS[1] नैव शोचितुं

७. BS[1] द्वितीयः

८. IO omits विनाशि........अथ

९. BN[1] नित्यनष्ट IO नित्यानिष्ट

अन्ये त्वेवं व्याचक्षते—यद्येनमात्मानं नित्यं[1] सदैव जन्ममरणाभ्यामनु[2]-षक्तमनित्यत्वान्मन्यसे, तथाप्येनं [3]शोचितुं नार्हसि ॥

एतमेव जन्ममरणं[4]प्रवाहाविच्छेदं कैश्चिन्नित्यत्वेनावगम्यमानस्या[5]त्मनः प्रतिपादयितुमाह—

**जातस्य हि ध्रुवो[6] मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २८ ॥**

हिशब्दो हेतौ । यस्माज्जातस्य जन्मलक्षणविकारभाजो देहस्यैवात्मत्वेन प्रतिपन्नस्य ध्रुवोऽवश्यंभावी मृत्युः विनाशाख्यो विकारः, [7]एवमेव मृतस्य विनष्टस्य जन्मावश्यंभावीति कस्यैष जन्ममरणविकारल[8]क्षणयोगः—इति तत्त्वमविचारयतोऽपि लोकस्यायं प्रवादः स्थित एव—जातो म्रियते, मृतो जायते—इत्येवंविधः । तस्माल्लोकप्रवादद्दृष्ट्यापि शोकस्यानुपपत्तिरेव ॥

---

१. IO omits नित्यं BN[1] and BN[2] read the word in the margin.

२. All except BS[1] अनुशक्त-

३. IO, BN[1] and BN[2] न शोचितुमर्हसि

४. All except BS[1] मरणं

५. BS[2] adds अस्य in the margin. BS[1] adds it in the text itself.

६. BN[1] omits ध्रुवः....अर्हसि

७. BN[1] omits एवमेव....जन्ममरण

८. IO विलक्षण BS[2] notes this as a reading.

अन्यमपि प्रकारं शोकपरिहारायाह—

**अव्यक्तादीनि भूतानि [1]व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २९ ॥**

पृथिव्यादिभूतसन्निवेशविषयशरीरात्मकत्वात् [2]सर्वप्राणभृतो भूतशब्देनात्रोच्यन्ते। तान्येतानि भूतानि अव्यक्तादीनि अप्रत्यक्षपूर्व[3]रूपाणि । तथैवाव्यक्तनिधनानि परोक्षपर्यन्तानि । न ह्येतानि पूर्वमेवंविधान्यासन्, पुनश्चैवंविधानि भविष्यन्तीति ज्ञायन्ते[4]। ततो[5] द्वयोरप्येतयोः काष्ठयोस्तान्यशोच्यानि । [6]यद्यपि व्यक्तमध्यानि व्यक्ता तेन[7] तेन रूपेण वेद्यमाना मध्यावस्था जन्मविनाशान्तरालवर्तिनी दशा येषां तथाविधान्यप्यशोच्या[8]न्येव । व्यक्तावस्थायामेषां हि भ्रममात्रमेव स्थैर्यप्रतिपत्तिः । एतानि हि येन येन प्रकारेण कल्प्यन्ते तेन तेन विनश्वराण्येव क्षणिकानि वा भवन्तु, परिणाम[9]त्वादाविर्भवत्तिरोभवद्धर्माक्रान्तानि वा भवन्तु; सर्वथा[10] विकल्प्यमानान्येकस्य[11] स्थिरस्य रूपस्यासम्भवादशोच्यान्येवेति देहात्मकभूतसन्निवेश[12]मात्रत्वेन प्रतिपन्नेषु शरीरेषु कः परिदेवनावसर इति ॥

---

१. BN[1] omits व्यक्त...देवना
२. IO सर्वप्राणिजातं भूत...च्यते.
३. IO पूर्वद्वाराणि
४. BS[1], BS[2] and IO ज्ञायते
५. IO तयोः
६. IO and BS[1] यदपि
७. IO omits तेन BS[2] and BN[2] note it in the margin.
८. BN[1] न्यपि शोच्यान्येव
BN[2] न्यपि शोच्यान्येवं
९. BS[1] परिणामित्वात्
१०. IO सर्वदा
११. IO, BN[1] and BN[2] एतस्य
१२. BN[1] and BN[2] वेश्यमात्र

इदानीं बहुप्रकारं प्रतिपाद्यमानोऽप्ययमर्थोऽतिगम्भीरत्वान्मयैवधारयितुमनुष्ठातुं[1] चाशक्य इत्यर्जुनस्यैतदर्थविषयमनध्यवसायं[2] परिहर्तुं[3] प्रकृष्टप्रयत्नप्रतिपत्तव्यतामस्यार्थस्य दर्शयितुमाह—

आश्चर्यवत्पश्यति [4]कश्चिदेनमाश्चर्यवद्वदति तथैवमन्यः[5] ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ ३० ॥

एनमात्मानं यथाप्रतिपादितस्वरूपं [6]कश्चिन्मनुष्यसहस्रेषु मध्ये[7] प्रकृष्टपुण्यपरिपाकवशाद्बहूनां[8] जन्मनामन्ते पश्यति, तत्त्वतः प्रत्यभिज्ञानेन साक्षात्कुरुते; योऽपि[9] पश्यति स आश्चर्यवद्यथाश्चर्यं कश्चिददृष्टपूर्वमद्भुतं कदाचित् कथंचित्क्षणमात्रं पश्यति तद्वदेनं कश्चित् कृतपुण्यः[10] क्षणमात्रं कश्चिदेवं[11] तथाविधं वदति परप्रबोधनायाचष्टे । तथैव कश्चित्तादृश एव परेण प्रतिपाद्यमानं शृणोति अवधारयति, कश्चित् संप्रति भगवदनुग्रहेणानधिष्ठितत्वादविद्योपहतान्तःकरण एनं यथाप्रतिपादितस्वरूपमात्मानं श्रुत्वापि कुतश्चित्तत्प्रतिपादनकुशलादाकर्ण्यापि न वेद तत्त्वतो

---

१. IO and BN[1] मनो धारयितुं BS[2] notes this as an alternative reading.
२. IO अधिष्ठातुं BS[2] notes this as a reading.
३. BS[2], BN[1] and BN[2] सायनं
४. BN[1] omits कश्चित्....कश्चित्
५. BS[2] तथा वदान्यः BN[2] also notes this as an alternative reading. IO and BN[2] तथैव चान्यः
६. IO, BN[1] and BN[2] read कश्चित्...तद्वदेनं after परप्रबोधनायाचष्टे तथैव.
७. BN[1] and BN[2] omit मध्ये
८. IO and BN[1] omit परि
९. BN[1] omits अपि
१०. BN[1] and BN[2] कश्चिदुत्कृष्टपुण्यः
११. BS[1] and BS[2] एव तथाविध एनं

न जानाति। स च तथाविधोऽनुपदेश्य एव। त्वं पुनर्भक्तिश्रद्धादिगुणसूचितभगवदनुग्रहत्वात्पात्रमेवैतत्तत्त्वोपदेशस्येत्यत्रोद्युक्तो भवेत्यर्थः। किमत्र तात्पर्यम्? अस्यात्मनो गुरुशिष्यक्रमेण स्वयमनुभवेन वा सन्तु जातु केचित्पुण्यभाजः प्रतिपत्तारः; किंतु निरन्तराभ्यासपरिशीलनविशीर्णकल्पसकलविकल्पावरणतां विना वैमल्येन सर्वकालं स्थिरतया चास्य प्रतिपत्तिपात्रमिति विरलविरलो लक्षेष्वेकः कश्चिदेव चरमजन्मा भवेदिति यथोक्तेन क्रमेण सम्यगवधारणीयम्; न तु मन्दोत्साहेनात्र योग्येनापि भवता भवितव्यम्॥

तदयमत्र निश्चय इत्याह—

देही नित्यमवध्योऽयं देहे[11] सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि॥ ३१॥

अयं समनन्तरप्रतिपादितदेहादिसमस्तवेद्यपदार्थात्यन्तव्यतिरिक्तवेदकत्वमात्रैकलक्षणो देही देहस्य वेद्यत्वमात्रेण स्वस्य वेदकत्वमात्रेण स्वामी परः प्रमाता

---

१. All except BS[1] श्राद्धानुगुण
२. IO, BN[1] and BN[2] नुग्रहकत्वात्मात्वमेवैतत्तत्त्वतोपदेश
३. BS[1] omits वा; the rest read वा सन्ति
४. BN[1] and BN[2] omit जातु
५. IO and BN[1] omit परि BS[2] notes this as a reading.
६. BS[1] अस्थिरतया
७. BN[1] प्रतिपत्तिमात्रं BS[3] प्रतिमात्रमति is given as a reading.
८. IO, BN[1] and BN[2] लक्षणेषु कश्चित्
९. IO, BN[1] and BN[2] भविता
१०. BN[1] omits अवध्यः...अर्हसि.
११. IO देही
१२. BS[1] पदार्थायन्त

सर्वस्य देहमात्रमेवात्मत्वेनाभिमन्यमानस्य मायी यस्य[1] प्रमातुर्जन्तोः[2] जातस्य तत्र तत्र नानारूपे देहे शरीरे[3] एक एव व्यापकतया तिष्ठन्नित्यं सततमेवावध्यो हन्तुं विनाशयितुमशक्यः ; न ह्यागमापायिधर्मकाणां नानाविधानां सर्वदा वेद्यत्वमात्रस्वभावानां शरीराणां विनाशे तद्व्यापकस्यैकस्यानवच्छिन्नमहिम्नो वेदकत्वमात्राव्यभिचार्येकलक्षणस्य सत्यस्यात्मनो[4] विनाशः सम्भवति ; यत एवमतस्तस्याविनाशित्वेन[5] नित्यस्यानुशोच्यत्वं[6] तावन्नास्त्येव ; तस्माद्विनाशैकस्वभावानि भूतानि पृथिव्यादिभूतसन्निवेशविशेषात्मकानि शरीराण्येव शरीरित्वेन[7] प्रतिपन्नानि विनश्यन्ति पश्यन्ननुशोचितुं परिदेवितुं नार्हसि । नष्टस्य नाशे विवेकिनः कः शोकस्यावसर इत्यर्थः ॥

अथ प्रतिपादितोपपत्त्या तात्त्विकात्मस्वरूपं संप्रतिपत्तुमशक्तमर्जुनं[9] मन्यमानो भगवान् क्षत्रियजात्युचिताभिमानोद्दीपनेनावश्यानुष्ठेये स्वकर्मणि प्रवर्तयितुमाह—

स्वधर्ममपि[10] चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३२ ॥

---

१. BN[1] and BN[2] omit मायी यस्य
२. IO and BS[1] जन्तु
BS[2] adds जन्म after जन्तोः as an alternative reading.
३. IO शरीरे देही एकः
४. BS[2] omits आत्मनः
५. IO, BS[2] and BN[2] शित्वे नित्ये अनु.
६. BN[1] शोचितं
७. BN[1] and BS[2] वेश्य.
८. BN[1] and BN[2] रित्वे प्र-
९. IO. अशक्यं
१०. All manuscripts omit the text. BS[2] notes the first of these verses in the margin. BN[1] notes only the pratīka of the first of these verses.

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३३ ॥

अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३४ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३५ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३६ ॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३७ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३८ ॥

"स्वधर्ममपि" इत्यादि श्लोकसप्तकमेतन्निगदव्याख्यातम् ॥

[1]एवं स्वर्गानित्यफलहेतुप्र[2]वृत्तिलक्षणधर्मसमाश्रयणेनापि सर्वप्र[3]कारं स्वकर्मात्या[4]गे व्य[5]वस्थिते निरतिशयनित्यफलप्राप्तिहेतुनिवृत्तिलक्षणधर्मसमाश्रयणेनै[6]तदपरित्यागे को दोष इति प्रकृतमेव ज्ञानोपदेशं पुनरपि सिद्धान्तीकुर्वन्नाह—

१. IO, BN[1], BN[2] त्वं BS[2] एवं स्वर्गादन्योऽनि-
२. IO, BN[1], BN[2] प्रतिपत्ति
३. IO, and BN[1] पूर्वप्रकारं BN[2] notes पूर्वप्रकारं as an alternative reading.
४. IO, BN[1] and BN[2] स्वकर्मफलत्यागे
५. IO omits व्यव....परित्यागे
६. BN[1] and BN[2] श्रयणेन तदप BS[2] श्रयणे तदप

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व[1] नैवं[2] पापमवाप्स्यसि ॥ ३९ ॥

एवमनेन प्रकारेण वर्तमानः पापं ज्ञातिवधादितः सम्भाव्यमानं किल्बिषं नावाप्स्यसि न लप्स्यसे । कथं वर्तमानः? प्रथमं तावद्यथोपदिष्टै[3]निस्संशय-प्रतिपत्तिप्ररूढनिष्कम्प[4]प्रज्ञाप्रत्यभिज्ञातसमस्तप्राणभृत्सर्वावस्थाव्यापकसामान्यसंविन्मात्र-स्वभावे नित्यनिरुत्तरानन्दनिर्भरतया स्वरूपव्यतिरिक्त[5]प्राप्यपदार्थान्तरप्रेप्साविरहिते सत्ये स्वात्मन्य[6]कृत्रिममात्माभिमानमास्थाय मायाव्यामोहजनितं[7]देहाद्यनात्मभूतभावा-त्मप्रत्ययलक्षणविपर्ययज्ञानैः सर्वप्राणिभिरुपादेयतया हेयतया च परिकल्पित[8]भेदे प्रतिक्षणविनश्वरे सुखदुःखे हर्षविषादौ समे[9] द्रष्टर्यात्मनि[10] दृश्यतामात्रेण सम्ब-द्धत्वाद[11]नुपजनितविशेषात्मकविकारतया निर्विशेषे कृत्वा सम्यक्प्रतिपत्त्या सम्पाद्य । एवमेव तद्धेतुभूतौ राज्यादिलिप्सितार्थलाभालाभौ तयोरपि हेतुभूतौ जयपरा-जयौ तथैव समौ निर्विशेषौ सम्पाद्य तत्त्वतो यथावस्थितेन रूपेण निश्चित्येत्यर्थः । एते हि सुखदुःखादयो वेद्यत्वमात्रेण सम्बद्धाः वेदकस्यात्मनो न[12] किंचिद्विकार-लेशं[13] समर्पयितुं क्षमाः । यथा नीलपीतादयः प्रका[14]श्यत्वमात्रेण सम्बद्धाः

---

१. BN[1] and BN[2] युध्यस्व
२. IO, BN[2] and BS[1] नैनं
३. IO दिष्टार्थिनः सं
४. BN[1] and BN[2] निष्प्रकम्प
५. BN[1] पाव्यति
६. IO कृत्रिमाभिमान
BS[2] कृत्रिममात्माभिमान
७. BN[1] and BN[2] जनितं
८. BS[1] विकल्पित
९. BN[1] and BN[2] omit समे
१०. IO, BN[1] and BN[2] द्रष्टव्यात्मनि
११. BS[2] and BN[2] संबन्धत्वात्
१२. BN[1] न कश्चित्
१३. IO, BN[1] and BN[2] लेशमर्प.
१४. IO omits प्रकाश्य.., केवलं

प्रकाशकस्यार्क[1]लोकस्य न[2] कंचिद्विशेषं नीलपीतादिकमुन्मेषयितुं शक्ताः, केवलं प्रकाश्यत्वमात्रेणैकेन रूपेण तत्र सम्बद्धाः, तदेतत्सुखादीनां वेद्य[3]त्वमात्ररूपं साम्यम्। एवं सुखादीनि समीकृत्य तत एतत्समाधिप्रतिपत्तेरनन्तरमेतत्समा[4]धिसुप्रतिष्ठितमतिर्युद्ध[5]धर्मोपलक्षिताय स्वकर्मणे युज्यस्व सम्बध्यस्व, यथोक्तज्ञाननिष्ठतया स्वकर्मानुतिष्ठेत्यर्थः ॥

एवं ज्ञानक्रियासमुच्चयमेवोपदेश्यतया विनिश्चित्य ज्ञानविष[6]यां मतिमुक्तकल्पां मत्त्वा तां क्रियाविषयां वक्तुमुपक्रममाणः, त एव ज्ञानकर्मणी साङ्ख्ययोगशब्दाभ्यां व्यवहरन्नाह—

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ४० ॥**

इदमात्मादि सत्, इदं देहादि असत्—इति हेयोपादेयपदार्थपरिगणना सङ्ख्या[7]; तामधिकृत्य कृतं शास्त्रमन्वर्थतया मुख्यं साङ्ख्यम्, न तु कपिलादिप्रणीतम्, तस्य नानात्मवादपरमार्थत्वात्; तस्मिन् साङ्ख्ये विषये एषा प्रबन्धेन प्रतिपादिता बुद्धिः प्रज्ञा तवोपदिष्टा, यया[8] प्रज्ञया तत्साङ्ख्यं सम्यक् युज्यते

---

१. BS[2], BN[1] and BN[2] omit अर्क
२. BN[1] न कश्चित्
३. BS[1], IO and BN[1] वेदत्व
४. IO समाधिषु सु
५. IO युद्धो धर्मो BS[1] युद्धशब्दो
६. IO, BN[1] and BN[2] विषयापत्तिमुक्त
७. IO and BS[1] संख्यतामधि-
८. BN[1] and BN[2] यथा

बुद्धयते वा। उक्तज्ञानसमाधिगम्येन परमार्थलक्षणेनार्थेन सम्बन्धो योगः; तद्धेतुकत्वात् कर्मैव[1] योगशब्देनोक्तम्। न हि केवलस्य ज्ञानस्य योगार्थसम्बन्धहेतुत्वं सम्भवति, किंतु तदनुगतस्य कर्मण एवेति प्रबन्धेन वक्ष्यते; इत्येवंविधे योगे कर्मणि इमां वक्ष्यमाणां बुद्धिं शृणु अवधारय, यथा कर्मैव[2] तत्त्वतो मोक्षकारणतया विज्ञायते, अत एवाह[3]—यया वक्ष्यमाणया बुद्धया युक्तः सम्बद्धः त्वं कर्मकृतं ज्ञानशून्यजनविषयं बन्धमस्वातन्त्र्यं प्रहास्यसि त्यक्ष्यसि[4] तादृशं हि कर्मानुष्ठानमिहोपदेक्ष्यते, येन सकलसंमूढजनबन्धहेतोरपि कर्मणो मोक्षहेतुत्वमेव पर्यवस्यति ॥

अत एवास्य कर्मयोगस्य चित्तवृत्तिनिरोधलक्षणयोगातिरिक्ततां प्रतिपादयितुमाह—

**नेहातिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४१ ॥**

इह वक्तुं प्रक्रान्ते कर्मयोगे[5] चित्तवृत्तिनिरोधलक्षणयोगवदतिक्रमनाशो नास्ति। स हि यथोपदिष्टक्रमस्वभ्यस्तसमस्त[6]भूमिका[7]भिनिर्वर्त्यस्वरूपत्वात् पूर्व[8]भूमिकानामनवाप्तावुत्तरोत्तरभूमिकारोहणरूपक्रमोल्लङ्घनलक्षणेऽतिक्रमे सति विनश्यति स्वरूपमेव न लभते; स तादृशो[9] विनाश इह योगे समनन्तरवक्ष्यमाणोपपत्त्या न विद्यते। तथा तत्र तत्तदङ्गवैकल्यादसम्यगनुष्ठितो[10] व्याध्यादि-

1. BN[1] and BN[3] add इह
2. BN[3] कर्मैव ततो किमकर्म तत्त्वं मोक्ष
3. BS[1] omits this word.
4. IO omits this word.
5. BS[1] योग
6. BN[1] omits समस्त
7. BS[1] and BS[2] काभिः
8. BS[1] पूर्वपूर्व
9. BN[1] तादृशे
10. BS[2] अनुष्ठिते BN[3] अनुतिष्ठतो

वर्तमानशरीरानुभवनीयः पुनर्गर्भवासदुःखादि[1]र्भविष्यच्छरीरानुभवनीयः प्रत्यवायो-ऽनि[2]ष्टयोगः सम्भवति ; इह तु पूर्ववत् सोऽपि न विद्यते, यतोऽस्य धर्मस्य यथोक्तज्ञानपूर्व[3]तया शास्त्रचोदितस[4]र्वकर्मानुष्ठानसमाधिरूपस्य सदाचारविशेष[5]सम्बन्धि स्वल्पमपि परिमितकाललवानुभूतं स्वरूपं महतः समस्त[6]भयहेतोरनात्मन्यात्मप्रत्ययलक्षणाद्भयात्साध्वसादनुष्ठातारं योगिनं त्रायते परिरक्षति । पुनस्तत्सम्बन्धं तिरस्करोतीत्यर्थः । अत्र हि धर्मे सततमनस्तमितसमस्तवस्तु[7]प्रथनैकहेतुसामान्यसंविद्रूपपरप्रकाशैकलक्षणस्वात्मप्रत्यवमर्शो निरुत्तरस्समाधिः सकृद्वि[8]भातत्वेनैव निर्वर्त्य संपूर्णस्वरूपो विधीयते । स च विभातमात्रः संपूर्णं फलं संपादयति । तथा च वक्ष्यति— "स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाण[9]मृच्छति" इति । ततोऽस्मिन् पूर्वापरक्रमाभ्यस्तभूमिकासम्[10]पाद्यचित्तवृत्तिनिरोधल[11]क्षणयोगवद्विनाशप्रत्यवायौ न सम्भवतः । न चास्य प्रस्तुतस्य कर्मयोगलक्षणस्य धर्मस्य प्रकर्षप्रतिपादनान्निरोधयोगस्येह सर्वात्मना[12] परिहारोऽवगन्तव्यः । स ह्यत्र तत्तत्स्थितादिक्रियाविशेषवत्पूर्वापपरात्रादिनियतकालानुष्ठेयतया नियतेतिकर्तव्यताकोऽन्तर्भवत्येव ॥

---

१. IO भवतिष्यच्छ
२. BS[1] वायो नष्ट
३. BS[1] पूर्वकतया
४. BN[1] and BN[2] चोदितस्य क
५. BS[1] विशेषस्य सं
६. BN[2] भव
७. BS[1] and BS[2] प्रथैक
IO and BN[2] प्रथमैक
८. IO दातत्वेन
९. BN[1] and BN[2] अर्हेति
१०. IO संपादचित्त BS[2] संपाद्यत्वा-
त्मकनिरोधयोग
११. IO, BN[1] and BN[2] omit
लक्षण...निरोध
१२. IO सर्वात्मनः

अस्मिंश्च विशुद्धभक्तिश्रद्धादिगुणव्यक्तिसूचितविवेकजज्ञानाविर्भावो[र्भावे] भवादृशोऽधिकृतः, न सर्वः कश्चित्—इति प्रतिपादयितुमाह—

**व्यवसायात्मिका बुद्धिरेकै॰ कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४२ ॥**

व्यवसायो निश्चयः, स॰ आत्मा स्वरूपं यस्यास्सा तथारूपा । स्वभावतो बुद्धिरेकलक्षणैव निश्चय आत्मादिसदर्थविषयोऽपि सम्भवति ; देहाद्यसदर्थविषयोऽपि सम्भवति ; अत्र योऽसदर्थविषयः स निश्चयाभासो निश्चय एव न भवति ; अतः सदर्थविषयमुख्यव्यवसायरहितानामव्यवसायिनां बुद्धयो बहुशाखा एकस्मिन्नप्यर्थे नानाविकल्पजालाकुला अपर्यवसिताश्च ॥

यतः सर्वाभिकाङ्क्षापरिक्षयैकहेतौ परमार्थसत्यात्मनि अलब्धबुद्धिप्रतिष्ठाः 'इदं प्राप्यम्, इदं प्राप्यम्' इत्यनित्यमर्थं प्राप्यतया लम्बमाना न क्वचिद्विश्रान्तिं लभन्त इत्येवंविधानां पुरुषाणां स्वर्गादिभोगमात्र॰परत्वेन प्रतिपन्नानां या बुद्धिः सा वक्तुं प्रक्रान्ते परस्मिन् धर्मे न नियुज्यते इत्याह—

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादपरा॰ः पार्थ नान्यदस्तीति वादिनः ॥ ४३ ॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफले॰प्सवः ।**
**क्रियाविशेषहुला॰ भोगैश्वर्यगतीः॰ प्रति ॥ ४४ ॥**

---

१. BN[1] एकैह
२. BS[2] स आत्मा...निश्चय is is written in the margin.
३. BS[1] मात्रं पर BN[1] snd BN[2] मात्रपरत्वे प्रति
४. BN[1] and BN[2] वादरताः
५. IO फलप्रदाम्
६. IO बहुलां
७. BN[1] and BN[2] गतिं

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥

येषां व्यवसायात्मिका निश्चयस्वभावा बुद्धिः भोगैश्वर्यप्रसक्तानां पुंसां समाधौ आत्मलक्षणपरमार्थसतत्त्वविषये प्रणिधाने न विधीयते नानुलिप्यते, तस्यास्तदर्थप्रतिपत्तियोग्यताभावात् । ये हि भोगानामिष्टानां विषयाणामैश्वर्ये स्वाम्ये प्रकर्षेण वस्त्वन्तरपरिहाररूपेणातिशयेनासक्ता निषण्णास्तत्परा एव तेषां भोगात्मिकानित्यवस्तुव्यवसायात्मिका बुद्धिस्समाधिविषयं व्यवसायं नालम्बत एव । कीदृशानां तेषाम् ? भोगैश्वर्यप्रसक्तानां समाधौ बुद्धिर्न विधीयते । तया वाचा अपहृतचेतसां स्वीकृतमनसाम् । कया वाचा ? यामिमां पुष्पितां परमार्थबोधलक्षणफलरहितत्वात् भोगरूपपुष्पमात्रसंयुक्तां प्रसिद्धां वाचं वेदवादपरा अविपश्चितो वदन्ति व्याचक्षते । वेदशब्दोऽत्र ज्ञानशून्यक्रियामात्रविधायकवेदैकदेशवचनोऽवगन्तव्यः । तस्य तथाविधस्य वेदस्य वादोऽभिधानम् । परं प्रकृष्टं तदेव तत्त्वं येषां ते तथोक्ताः । अत एव नान्यदस्तीति वादिनः स्वर्गादिफलप्राप्तिहेतुभूतानां क्रियाविशेषाणां विधायकत्वाद्वेदादृतेऽन्यच्छास्त्रं नास्त्येवेति वदनशीलाः । अत एवाविपश्चितः यज्ञादिक्रियाफलभूतानित्याशुचिसातिशयभोगमात्ररूपमर्थं पुरुषार्थफलत्वेन प्रति-

---

१. BS[1] सैषा
२. BS[1] नानुशिष्यते
३. IO omits विषयाणां
४. BS[1] adds भोगात्क्तानां
५. BS[1] भोमात्मकनित्य
६. BN[1] and BN[2] अनालम्ब
७. IO अर्थज्ञान
८. BS[1] वाचो
९. BN[1] and BN[2] विधायकात्
१०. BS[1] वचन

पन्नाः सन्तो न विद्वांसो ये ह्यविनाशि[1]विशुद्धनिरतिशयमात्मतत्त्वलक्षणमेतद्विपरीतमर्थं फलत्वेन प्रतिपद्यन्ते[2], ते विपश्चित्त्वं भजन्ते। अत एवाविपश्चित्त्वप्रतिपादकानि तेषां विशेषणान्याह—तथा च कामात्मानः कामाः प्रियाः शब्दादयः सर्वस्वभूतत्वादात्मा येषाम्। अत एव कामात्मत्वात् स्वर्गपराः। उत्तमभोगाधिकरणं स्वर्गः प्राप्यतया परः प्रकृष्टो येषां ते[3] तथाविधाः। तथा जन्मकर्मफलेप्सवः भोगप्रक्षयेऽवश्यंभाविजन्म क्वचिदपि योन्यन्तरे संभवति, यस्मिंश्च सति धर्माधर्मात्मकं कर्म; तस्मिंश्च[4] सति सुखादिलक्षणं फलमित्येतानि आप्तुमिच्छवः। अत एव भोगैश्वर्यस्येष्टविषयाधिपत्यस्य[5] गतीर्विविधमार्गान्[6] तत्र साधनभूताः[7] नानाविधा यज्ञदानतपःप्रभृतयः कर्मभेदा बहुला भूयांसो येषाम्। न केवलं नित्यनैमित्तिकक्रियामात्रसक्ताः, यावत् काम्यानपि क्रियाविशेषान्विस्तारयन्त इत्येवंविधाः प्रवक्तारो यां वाचं वदन्ति तयापहृतचित्तानां भोगासक्तानां बुद्धिः समाधौ न विधीयते इति सम्बन्धः। इदमत्र तात्पर्यम्—ये स्वयमेव प्रबोधशून्यत्वात् भोगमात्रपराः, तेऽन्यैस्तथाविधैरेवं[10] तमेवार्थं प्रशंसद्भिः परिपोष्यमाण[11]तादृक्संकल्पाः परमार्थप्राप्तिव्यवसायात्परमेव[12] प्रकृष्यन्त इति तथाविधानां बुद्धिः कथं समाधौ विधेयतामर्हति[13]॥

---

१. BS² अविनाश
२. BN¹ and BN² add विपश्चितः
३. BS¹ omits ते
४. BS¹ संभवः तस्मिंश्च
५. IO and BN¹ omit भोगैश्वर्यस्य
६. IO विधेयाधि
   BN¹ विधायाधि
७. BN¹ adds फलभूतान्
८. BS¹ तत्साधन
९. BS¹ adds क्रियाविशेषाः
१०. IO, and BN² एवमर्थं
    BS² एतमर्थं
११. BN¹ परिपोषमाणता तादृक्
    BS² परिपोष्यमाणस्य तादृक्
१२. BS¹ दूरं
१३. BN¹ and BS² विधीयतां

अतश्च स्वभावतः प्रस्तुतविज्ञानोपदेशपात्रभूतस्त्वमविपश्चित्प्ररोचनावचन-वञ्च्यमानचित्ततां विहाय यथोपदिष्टविज्ञाननिष्ठो भवेत्याह—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४६ ॥

सत्त्वरजस्तमांसि त्रयो गुणा एव त्रैगुण्यम्, सुखदुःखमोहमयबुद्धिमयत्वात्; त्रैगुण्यं विषय आश्रयो यस्य स त्रैगुण्यविषयः, संसारिपुरुषवर्गः उपचारात् त्रैगुण्यशब्देनात्रोच्यते। तदेवंविधं त्रैगुण्यं विषयो गोचरो[3] येषां ते तथाभूता वेदाः। ये हि सुखाद्यर्थिनः[4] ते तत्प्राप्तिहेतुषु क्रियाविशेषेषु वेदैर्नियुज्यन्ते, यतस्तैस्सर्वतो व्यतिरिक्तस्वरूपः सर्वगत एको यथोक्तविशेषणः सत्य आत्मा आत्मत्वेन न प्रतिपद्यते, ततस्तेषां सन्नेवात्मा नास्ति; त्वं तु निस्त्रैगुण्यस्सन्नात्मवान् भव। निष्क्रान्तः त्रैगुण्यान्निस्त्रैगुण्यो गुणत्रयातीतः; वेद्यत्वमात्रेण सुखाद्यात्मभिर्गुणैर्वेदकैकस्वभावस्सम्बन्धी[5] न तु तद्धर्मको गुणेभ्योऽत्यन्तविविक्तस्वभावः परमार्थतोऽयमात्मा, तमीदृशमात्मत्वेन प्रत्यवमृशन्[6] आत्मवान् भव, परमार्थसन्तमेवात्मानमुक्तोपदेशप्रतिपत्तिशैथिल्यादसन्तमिव मा कार्षीरित्यर्थः। यदा च गुणत्रयातीतस्वभावमात्मानमात्मतया प्रतिपद्यसे, तदा निर्द्वन्द्वः द्वन्द्वेभ्यः सुखदुःखतृष्णाजरामरणादिभ्यः क्लेशेभ्यो निष्क्रान्तो भव; एतानि हि द्वन्द्वानि अनात्मनि[7]

---

१. BN[1] देशमात्र This is noted as an alternative reading in BS[2].

२. BN[1] वश्य

३. BN[1] गोचरं

४. IO सुखदुःखाद्यर्थिनः

५. IO omits संबन्धी...स्वभावः BN[1] and BN[2] संबन्धेन तु

६. BN[1] मृश्यन्

७. IO and BN[1] omit अनात्मनि...बन्धनानि. In BS[2] this portion is written in the margin.

त्रिगुणे देहादावात्मप्रत्ययनिबन्धनानि, यतश्च निर्द्वन्द्वस्ततो नित्यसत्त्वस्थोऽपि भव, नित्यमविनाशि यत्सत्त्वं सद्भावः तत्र स्थित उपलब्धप्रतिष्ठस्तादृशः सन्निर्योगक्षेमोऽपि भव। अप्राप्तस्य प्राप्यस्य वस्तुनः प्राप्तिर्योगः; प्राप्तस्य परिरक्षणं क्षेमः; निष्क्रान्तस्ताभ्यां निर्योगक्षेमः तथाविधो भव। न हि नित्यसम्पूर्णत्वात्सर्वतो निरभिलाषात्मनः प्राप्यं किंचित्संभवति, न चापूर्वतया प्राप्तस्य कस्यचिदर्थस्य विनाशशङ्कया[1] परिरक्षणम्, अतो[2] विपर्ययप्रत्ययगृहीतात्माभासदेहादिनिबन्धने एव योगक्षेमे इति ततो व्यावृत्तात्मप्रत्ययतया सत्यात्मप्रत्यवमर्शादात्मवान् भव, न तु भोगैश्वर्यप्रसक्तत्वात्प्रवृत्तिधर्मानुष्ठानैकनिष्ठोपदेश्यपुरुषविषयत्वेन विधीयमानक्रियाविशेषेतिकर्तव्यतोपदेशशत[3]सङ्कुले वेदशास्त्रे सर्वमनुष्ठेयतयावगन्तव्यम् ॥

किंतु यावता परमार्थक्रियासिद्धिर्भवति, तावदेव तत उपादेयतया बुधेन[4] प्रतिपत्तव्यम् इत्याह—

**यावानर्थ उदपाने सर्वतः संप्लुतोदके।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४७ ॥**

सर्वतः सर्वासु दिक्षु समृद्धसलिले उदपाने ह्रदप्रस्रवणादौ अर्थिनो यावानर्थः[5] यावन्मात्रमेव[6] तृष्णाप्रशमनाद्यर्थक्रियासमर्थसलिललवोपयोगमात्रं प्रयोजनं तावानेव विजानतो विज्ञानवतो ब्राह्मणस्य ब्रह्मवेदिनः सर्वेषु निखिलेषु सरहस्येषु वेदेष्वर्थः प्रयोजनम्, यावता शास्त्रैकदेशेन परमार्थोपलब्धिलक्षणार्थ-

१. BS¹ विनाशशङ्काय
२. BS² यतो
३. BS¹ देशे शत
४. IO and BS¹ omit बुधेन
५. IO यावदर्थः
६. IO and BS¹ मात्रमेकदेशातृष्णा-

क्रियानिर्वृत्तिर्भवति, तावदेव तेन ततो विधिसहस्रसंकल्पादप्युपादातव्यम्। किमुक्तं भवति? यथा तृषितेनार्थिना सुसम्पूर्णात्समुद्रकल्पादपि जलाशयात् स्वार्थक्रियासम्पत्तिमात्रक्षममुदकं[2] स्तोकं समुपादीयते, न सर्वो जलाशयः, एवं ज्ञानक्रियाविषयविविधार्थसम्पूर्णादपि वेदशास्त्रात्तत्त्वजिज्ञासुना तदवगममात्रोपयोग्येवार्थ[3] उपादातव्यः, न तु सर्वमेव वेदशास्त्रमिति ॥

अथ विजानता सर्वशास्त्रेभ्यो यदुपादेयं तदर्जुनं पुरस्कृत्योपदेष्टुमाह—

**कर्मण्यस्त्वधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४८ ॥**

तव संप्रत्येवोपदिष्टतत्त्वज्ञानोपपत्तिरूढदृढप्रतिपत्तिवशादनित्येभ्यो देहादिभ्यो[4] व्यावर्तमानात्मप्रत्ययत्वे सत्यद्वैतचिन्मयज्योतीरूपं परं तत्त्वमहमित्यात्मत्वेन[5] प्रतिपद्यमानस्य सतः कर्मण्यधिकारोऽस्तु, यत्कर्म[6] कायवाङ्मनोभिर्निर्वर्त्यव्यापारविशेषात्मकं वर्णाश्रमविभागेन देशकालावस्थापेक्षमुख्यगौणविविधेतिकर्तव्यताकलापेन नित्यादिभेदेनावश्यकर्तव्यतया शास्त्रेषु विहितं तस्मिन्नधिकारः कर्तृत्वं भवतु[7], तदधिकृतस्वार्थसिद्धये प्रवर्तस्वेत्यर्थः ; यतः कर्म तावच्छरीरत्वाव्यभिचारि न[8] कदाचित्त्यक्तुं शक्यम्। अथ यत्याद्यवस्थायां कश्चिन्नियमविशेषोऽवलम्बनीय एव, ततश्च स एव कर्मविशेषतां प्राप्नोति, आश्रयान्तरकर्मनियमवत्।

---

१. BN[1] निर्वृतिः
२. IO, BN[1] and BN[2] उदक
३. BS[1] मात्रार्थोपयोग्ये
४. BN[2] omits देहादिभ्यः
५. IO आत्मने त्वेन
६. BS[1] यतः कर्म-
७. IO, BN[1] and BN[2] भवति
८. BS[1] न कदाचित् BS[2] notes this an alternative reading.

इत्थमशक्यः सर्वात्मना कर्मत्यागः । किंच गृह्यतां नामात्यागोऽपि त्यागाभिधानः, स तु तत्त्वज्ञानबाह्यतामेवाविष्करोति, तथाविधस्य यतो द्वेष्यतां विना कस्यचिदर्थस्य हानं न सम्भवति । न¹ चोपादित्सितं प्रियमर्थं विना रागिता संभवतीति कर्मत्यागाभिधाने रागद्वेषप्रसङ्गो दुर्निवारः । यदि च तत्त्वस्यैकत्वात् कर्मणां यथेष्टमनियमेनानुष्ठानमेव त्यागत्वेनाभिमतम्, तथापि पूर्ववद्रागद्वेषै³वशान्यथानुपपत्त्या सोऽप्यतत्त्वज्ञतामेवानुष्ठातुरभिव्यनक्तीत्यकर्मता वा विरुद्धकर्मता वा निरुत्तरानन्तनिजानन्दनिर्भरं परं तत्त्वमात्मत्वेन प्रतिपद्यमानस्य सर्वसाम्यलक्षणं परमं समाधिमधि⁴रुरुक्षतः तत्त्वज्ञानाभिनिवेशिनो योगिनो द्वयमप्यनुपपन्नमिति तथाविधस्य तव कर्मण्येवाधिकारोऽस्तु ; किन्तु तेषां कर्मणामनात्मज्ञजनसमुचितनानाभिसन्धानप्रार्थितेषु दृष्टानुश्रविकविविधभोगात्मकेषु बन्धहेतुषु फलेष्वधिकारो मा भूत् । ये ह्यतत्त्वज्ञतया फलान्यधिकृत्य तेषु तेषु कर्मसु प्रवर्तन्ते, तेषां तानि क्रियमाणान्येव कर्माणि वासनारूपतयान्तःकरणभूमौ बीजभूतान्येवा⁵वतिष्ठन्ते, अतश्चानित्यक्रियाफलोपभोगप्रक्षये विविधवासनारूपस्य तेषु तेषु योन्यन्तरेषु तस्य तस्य जन्मनः पुनःपुनः का⁶रणतां प्रतिपद्यन्ते ; जन्म च तस्⁷य तस्य कर्मणः, कर्म च तस्य तस्य फलस्य हेतुत्वं भजते—इति वासनाजन्मकर्म⁸फलचक्रमेतदनि⁹शमावर्तमानमज्ञानां बन्धाय

---

१. IO omits न च....संभवतीति BS² and BN¹ read this in the margin.
२. BS² and BN² द्वेष्यता
३. BS¹ and BN¹ अवशा-
४. BN¹ आरुरुक्षतः
५. BS² and BN² न्येव तिष्ठन्ते
६. BS¹ करणतां
७. BN² omits तस्य
८. IO omits कर्मफल
९. IO अनिशमसमानमज्ञानां

कल्पते इति त्वमपि सामान्यपुरुषवत् कर्मफलहेतुर्मा भूः उक्तया प्रक्रियया कर्मणां शुभाशुभानां फलानि सुखाद्यात्मकानि हेतुर्जन्मनो निमित्तं यस्य स तथाविधो यथा न भवसि, तथोक्तज्ञाननिष्ठस्सन् कुर्वन्नेव कर्माणि तेन ज्ञानाग्निना दग्धबीजतामापादयन् परमेश्वरस्वभावसमापत्तिलक्षणं मोक्षमवाप्नुहीत्यर्थः । अन्यैश्च[1] कस्यांचिदवस्थायां प्रस्तुतस्य कर्मपरिहारस्य[2] विधीयमानत्वाद्यदकर्मेति मन्यसे तत्र तादृशेऽप्यकर्मणि सङ्गस्ते[3] तव माभूत्; तत्रापि हि सङ्गः कर्मान्तरवत्[4] बन्धहेतुरेवेत्युक्तमेव प्राक् ॥

यत एवमतः—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४९ ॥**

इह शास्त्रविहितानां कर्मणामनुष्ठाने यथोक्तात्माद्वैतज्ञाननिष्ठत्वलक्षणः समाधिर्योग उच्यते, तथा कपिलादिप्रणीतस्य साङ्ख्यसंज्ञकस्य[5] ज्ञानस्य पातञ्जलादि[6]प्रणीते चित्तवृत्तिनिरोधलक्षणेयोगे[7] निष्ठा, तथेहोपदिष्टस्यात्माद्वयज्ञानस्य कर्मानुष्ठानसमाधौ निष्ठेति योगशब्देन सोऽप्युक्तः । तत्र तादृशे योगे स्थित आश्रमान्तरपरिहारेण कृतप्रतिष्ठस्सन् यथोक्तानि[8] कर्माण्यनुतिष्ठ। कथम्? सङ्गं[9] तत्तदभि-

---

१. BN² अन्यश्च
२. IO हारविधीय
३. IO, BN¹, BN² and BS² omit ते....सङ्गः
४. IO BN¹ and BN² न्तरवद्बद्धहेतु
५. BN¹ and BN² संज्ञस्य
६. IO omits आदि
७. BS¹ लक्षणे योग-
८. BN¹ and BN² यथोक्तकर्माणि
९. BN² सङ्ग

संहितफलप्राप्ति[1]हेतुत्वप्रतिपत्त्या तावन्मात्रोपायलीनचित्तत्वं त्यक्त्वा[2] परिहृत्य। अत एव सिद्धौ कर्म[3]फलसम्पत्तौ असिद्धौ च तद्विघाते। द्वयोरपि निर्विकारत्वात्समो निर्विशेषो भूत्वा यथोक्तज्ञाननिष्ठत्वान्नित्यपरिपूर्णयथोक्तात्मतत्त्वप्रत्यवमर्शजनितानन्दतृप्तस्य कर्मणः फलेनानित्येन सिद्धेनासिद्धेन वा न कश्चित्सुखदुःखात्मको विशेष इति सर्वसाम्यदशाधिरूढो भूत्वा यथोक्तयोगनिष्ठो भव, यतस्समत्वं सर्वास्ववस्थासु विकारलेशा[4]संस्पृष्टत्वमेवैष योग उच्यते, साम्यप्राप्तिरेवास्य निष्ठेत्यर्थः ॥

अत एवैतद्योगनिष्ठस्य योगिनो लक्षणमाह—

**यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह।**
**त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ५० ॥**

यस्य यथोक्तयोगाधिकारिणः पुरुषस्य सर्वे[5] समारम्भाः सर्वासु क्रियासु प्रवृत्तयोऽवश्यंभाविनोऽपि निराशीर्बन्धना भवन्ति, स[6] त्यागीति सम्बन्धः। आशीः अनित्यभोगविषया आकाङ्क्षा, तदेव बन्धनं संसार[7]हेतुत्वादस्वातन्त्र्यमाशीर्बन्धनम्

---

१. BS² प्राप्तिकहेतु

२. IO, BN¹ and BN² omit त्यक्त्वा BS² notes this in the margin.

३. IO, BN¹ and BN² omit कर्म. BS² notes this in the margin.

४. BS¹ लेशसंस्पृ

५. BN¹ and BN² omit सर्वे

६. BN¹ and BN² omit सत्या... बन्धनं

७. IO and BS² omit संसार... बन्धनं

निष्क्रान्ता आशीर्बन्धनान्निराशीर्बन्धना:[१] भोगात्मबन्धैरहिता इत्यर्थः। अत एवावश्यानुष्ठेयकर्मरूपं सर्वं शुभमशुभं च त्यागे फलाशासंन्यासे हुतमग्नाविव बीजजातं फलप्रसवसामर्थ्यविनाशाय निक्षिप्तं स एवंविधो नित्यकर्मानुष्ठातैव त्यागी त्यागवान् न पुनः क्लेशभीरुत्वादिना कर्माण्येव त्यजन् त्यागी भवति, इति युक्तिरत्र प्रागेवं उक्ता ॥

स एव चैवंविधः पुमान्[५] प्रशस्यज्ञानयुक्तो न तु यः कर्मत्यागादिमात्रं ज्ञानं मन्यते, अत एवंविधोत्कृष्टबुद्धियुक्तं कर्म समाचरेत्, न केवलमित्याह—

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ५१ ॥

यस्माद्बुद्धियोगाद्यथोक्तज्ञानसमाधानाद्दूरेणातिशयेन केवलं तद्विरहितं कर्मावरं निकृष्टं ज्ञानशून्यं कर्म संसारहेतुत्वात्ततोऽत्यन्ताधममित्यर्थः। अतश्च बुद्धौ यथोक्ते सम्यग् ज्ञाने शरणमाश्रयमन्विच्छ अभिकाङ्क्ष तामेवोपायतयावलम्बस्वेत्यर्थः। यतो ये फलहेतवः अनित्यभोगलक्षणं फलमेव हेतुतत्साधन-

१. BN[1] add भवन्ति
२. BS[1] बन्धन
IO, BN[1] and BN[2] बन्धरहित:
३. IO omits नित्य
४. IO एवं
५. BN[1] and BN[2] omit पुमान्
BS[2] notes as alternative readings बुद्धिमान् and प्रज्ञायुक्तः
६. BS[1] मरण-
७. BS[1] omits ज्ञान
८. IO, BS[1] and BS[2] मरण-
९. BS[2] अनित्यं

भूतासु क्रियासु प्रयोजकं कारणं येषां ते ज्ञानशून्यकर्ममात्रानुष्ठायिनः कृपणाः, तच्च[1] फलत्वार्थित्वाद्दीनाः तत्तज्जातिशरीराद्यभिमानावच्छिन्नम्, अत एव अनित्यभोगात्मक-फलतृष्णातुरमात्मानं मन्यमानास्सन्तो दुराचाराः ॥

अत एव तद्विलक्षणस्य ज्ञानिनः स्वरूपं प्रतिपादयितुमाह—

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५२ ॥**

इहात्मैव परमेश्वर एकं तत्त्वम्, स एव च स्वमायामहिम्ना ज्ञेयभावा-पादनेन सर्वस्य कार्यस्य कार्यजातस्यैकः कर्ता पारमार्थिकः विचित्रं चेदं कार्यं निर्मिमाणः स्वेच्छामात्रव्यतिरिक्तं न तस्योपादानमपेक्षते[3]; नापि सहकारिणम्; न चेदमित्थमवभासमानमपि कार्यं चिन्मात्रस्वरूपत्वादतिरिक्तं विकारलेशं कंचि-दर्पयितुं प्रभवति। तदेवंविधनित्यनिरतिशयैश्वर्ययुक्तमेकं तत्त्वमात्मत्वेन निष्प्रकम्पया प्रतिपत्त्या यः प्रत्यवमृशति स[4] बुद्ध्या परमेण बोधेन[5] सम्यग्ज्ञानेन युक्तः सम्बुद्ध[6] इहोच्यते, स चैवंविध इहोपदिश्यमाने कर्मयोगेऽधिकृतः कुर्वन्नपि कर्माणीश्वर-भावानुप्रवेशात्सर्वं समत्वेन पश्यन्निदं स्वर्गादिसुखफलहेतुत्वात्सुकृतं[7] सत्कर्म इदं दुःखहेतुत्वात् दुष्कृतं दुष्ट[8]कर्मेत्यनुत्पन्नविवेकज्ञानैर्विषमदर्शिभिः परिकल्पितभेदे

---

१. IO तच्च फलात्त्विद्दीनाः
BN² and BS² तच्च फलार्थि-त्वाद्दीनाः
BN¹ तुच्छफलार्थित्वाद्दीनाः

२. BN² omits from here to the end of the commentary on this verse.

३. BS¹ अपेक्ष्यते

४. BS¹ संबुध्या

५. IO, BS¹ and BS² बोधने

६. BN¹ and BS² संबन्धः

७. IO omits सुकृतं....त्वात्

८. BN¹ omits दुष्ट

सुकृतदुष्कृते द्वे अपि जहाति त्यजति, [१]न तस्य योगिनः सर्वसमत्वसमाहितस्य क्रियमाणमपि कर्म सुकृतदु[२]ष्कृतलक्षणं भेदं जन[३]यतीत्यर्थः । एवमनेन श्लोकार्धेन तत्त्वज्ञानवान्नियतं कर्म कुर्यादेव, न च तत्रा[४]पारमार्थिकं सदसद्वि[५]कल्पमारोपयेदित्युपदिष्टं भवति । यत एवं तस्मात्त्वं यथोक्ततत्त्वज्ञानाभिनिविष्टस्सन् योगाय[६] समाधये युज्यस्व, स्व[७]कर्मानुष्ठानद्वारेण युक्तो भव; यतः कर्मसु क्रियमाणेषु यत्कौशलयु[८]क्तं ज्ञाननिष्ठत्वेन [९]सुखकारित्वं स एव योगः समाधिरिह, नान्यः ॥

[१०]एतमेवार्थं हेतूपन्यासपूर्वं विवरीतुमाह—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**[११]जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५३ ॥**

यस्मात्कर्मजं अतत्त्वज्ञैः क्रियमाणा[१२]त्कर्मणोऽवश्यंभावि सुखाद्यात्मकं फलं सर्वदा सर्वतो निरभिका[१३]ङ्क्षस्यात्मनिष्ठत्वात् अनभिसन्धानेन [१४]त्यक्त्वा विहाय फलाभिसन्ध्य[१५]नुष्ठीयमानकर्मप्रतिबद्धा[१६]ज्जन्मनः पुनर्भवलक्षणाद्बन्धना[१७]दस्वातन्त्र्यान्निर्मुक्ताः

---

१. IO omits न
२. IO omits दुष्कृत
३. IO जहातीत्यर्थः
४. BN[1] तत्र पार-
५. IO and BN[1] विवेककल्प-
६. IO and BN[1] omits योगाय
७. IO and BN[1] omit स्व
८. IO, BS[2] and BN[1] उक्त-
९. IO and BS[2] साधुकारित्वं
BN[1] साधुकारितं
१०. BN[2] omit एतमेव...युक्ता हि in the first ardha of the verse.
IO and BN[1] एवमेवार्थं
११. IO and BN[1] कर्मबन्ध
१२. IO क्रियमाणं
BN[1] and BN[2] क्रियमाणस्य
१३. BN[2] काङ्क्षात्म-
१४. IO, BS[2], BN[1] and BN[2] विहाय त्यक्त्वा
१५. BN[2] सन्धानु-
१६. IO, BS[2] and BN[2] बद्धत्वात्
१७. IO बन्धनात् स्वादस्वतन्त्र्यात्

सन्तो निर्विघ्नतयानामयमनित्यसुखादिसङ्कल्पदोषरहितं पदं पारमार्थिकस्वरूपप्रतिष्ठात्मकं धाम गच्छन्ति प्राप्नुवन्ति, अतस्त्वं बुद्धियुक्तो योगाय युज्यस्वेति पूर्वेण सम्बन्धः ॥

यदा चैतत्परमदुरवगाहं तत्त्वज्ञानमुक्तमपि झगिति मनसि प्रतिष्ठां न निबध्नाति तदा त्वयात्र शिथिलोत्साहेन न भवितव्यम् ; यतः क्रमेणैतत् ज्ञास्यसि[1] इत्याह—

यदा त्वं[2] मोहकलिलं बुद्ध्या[3] व्यवतरिष्यसि ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५४ ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चिता[4] ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५५ ॥

यदा यस्मिन् काले त्वमस्योपदिष्टस्य ज्ञानस्योपपन्नत्वमात्रप्रतिपत्त्या[5] मोहकलिलमनादिजन्माभ्यस्तदेहाद्यात्मप्रत्ययस्वरूपमज्ञानकर्दमं[6] व्यवतरिष्यसि[7] विपर्ययत्वप्रतिपत्त्या लङ्घयिष्यसि, तदा एवं श्रुतम्,इदं श्रोतव्यमिति संशयाविष्टजनोचितयोर्नानाशास्त्रविषययोः श्रोतव्यश्रुतयोर्निर्वेदं विरागं गमिष्यसि, ततश्च[9] निश्चया-

---

१. IO ज्ञास्यसे
२. All except BS[1] ते
३. All except BS[1] बुद्धिर्व्यतितरिष्यति
४. IO निश्चला
५. BN[1] उपपन्नमात्र
६. IO, BS[1] and BS[2] कर्तृ संव्यव
७. IO omits व्यव...लङ्घयिष्यसि
८. BN[1] and BN[2] जनचित्तयोः
　IO विष्टचिन्तितयोः
९. IO, BN[1] and BN[2] तच्च.

भावात् 'इदं[1] श्रुतम्, इदं श्रोतव्यम्' इति[2] विच्छिन्नविचिकित्साविष्टतया या श्रुतिर्नानाशास्त्रश्रवणं तस्यामनुपादेयत्वाद्विप्रतिपन्ना प्रतिकूला सती तव[3] मतिः प्रज्ञा निश्चिता यथोक्तात्मज्ञाननिवृत्तसन्देहा, अत एवाचला विकल्पैर्बलवद्भिरप्यप्रकम्प्या सती स्थास्यति, अस्मिन् समाधौ स्थितिं प्रतिष्ठां लप्स्यते, तदानेन क्रमेण यथोक्तं योगं कर्म समाधिलक्षणमाप्स्यसि प्रतिपत्स्यसे [4]संश्रयिष्यसे ॥

अथ ते तदा मतिः स्थास्यतीति भगवद्वचनं श्रुत्वा स्थितप्रज्ञ[5]त्वस्य सम्यक्तत्त्वमनवगच्छन्

**अर्जुन उवाच—**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत [6]व्रजेत किम् ॥ ५६ ॥**

हे भगवन् केशव! कर्मसु कि[7]लैं कौशलं योग उक्तः । निश्चलप्रज्ञता च[8] स्थितप्रज्ञता । तदेवंविधस्यास्य स्थितप्रज्ञस्य का भाषा कथमसौ भाष्यते[9]?

---

१. IO omits इदंश्रुतम्. BN[1] notes this is in the margin.
२. All excepts BS[1] omit विच्छिन्न.
३. IO omits तव...प्रकम्प्या
४. IO omits this word BN[2] and BS[2] note the word in the margin.
५. BN[1] प्रज्ञत्वसम्य- IO and BN[2] प्रज्ञत्वमस्य कृत्स्नमनव-
६. BS[1] and BS[2] note व्रजेच्च as an alternative reading.
७. IO, BN[1] and BN[2] omit this word, BS[2] note it in the margin.
८. IO omits this word.
९. IO, BS[2] and BN[1] भावते

किमस्य व्याख्यानम् ? विरुद्धमिवास्य चेष्टितम्, यतो वाङ्मनःकायैस्त्रिभिर्व्यापारणं कर्मोच्यते, तास्तिस्रोऽपि चेष्टा नास्योपपद्यन्ते। किमसौ भाषेत, भाषणक्रियां चानुतिष्ठेत् ? न ह्यस्यैकतत्त्वनिश्चलप्रज्ञत्वाद्भाषणं वचनकर्मोपपद्यते। किमसौ व्रजेत्, गमनक्रियोपलक्षितं कायव्यापारमाचरेत् ? सोऽप्यस्य पूर्ववन्नोपपद्यते[1]; उत आसीत[2], वाङ्मनसप्रचारपरिहारेणान्तर्यैव वृत्त्या तिष्ठेत् ? सोऽप्यस्य कर्मकौशललक्षणे योगे वर्तमानस्योभयकर्मनिर्वृत्त्यात्मिका[3] नोपपद्यते—इति स्वरूपानवधारणात् कास्य भाषेत्युक्तम्। एतच्च प्रश्नत्रयमविवक्षितकर्मकक्रियामात्रविषयं वेदितव्यम् ॥

अथ "यस्य[4] सर्वे समारम्भाः" इत्यादौ बुद्धिमच्छब्देनोक्तस्य[5] स्थितप्रज्ञस्य स्वरूपमुक्तप्रायमपि दुरधिगमत्वात्सम्यगनवधारितम्[6]; इदानीं केनाप्यंशेन विशिष्य[7] पुनरुच्यमानमवधारयेत्यर्जुनं बोधयितुम्

**भगवानाह—**

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५७ ॥**

---

१. IO and BN[1] omit पूर्व... साप्यस्य
This is noted in the margin in BS[2].

२. BS[2] किमासीत

३. BN[2] निर्वृत्यात्मिका

४. IO, BN[2] and BS[2] omit यस्य

५. IO, BN[1] and BN[2] बुद्धिशब्देन

६. BN[1] and BN[2] धारितेऽपीदानीं

७. All except IO विशेष्य

इह खलु सर्वरहस्यानामुपनिषद्भूतेऽस्मिन् विज्ञाने कश्चिदेव लक्षेष्वेको जन्मसहस्रपरिशीलितपर्यवभातैकात्मतापरामृष्टरजस्तमोमयमलतया सत्त्वमात्र-शेषत्वे सति[3] समुपजातस्वरूपप्रत्यवमर्शयोग्यप्रज्ञश्चरमजन्मा पुरुषातिशयोऽधि-कारी यस्तथाविधावसरोपजातानुजिघृक्षापरमेश्वरप्रेषिताभ्यां सततसहचरीभ्यां भक्तिश्रद्धाभ्यां दत्तदृढहस्तावलम्बो यथोक्तज्ञाननिःश्रेणीस्थिरनिवेशितपदः, परम-कारणसमापत्तिप्रतिबिम्बरूपं परमं धामाधिरोढुमध्यवसितः, यमुद्दिश्यात्मतत्त्व-मेवाहन्तया व्यपदिशन् वक्ष्यति—

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥" इति ॥

तथा—

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इत्यादि ।

तादृशश्च सन् यदेदमाचरति तदा स्थितप्रज्ञो भवति । किमाचरति? यदा मनोगतान् संकल्पवर्तिनः कामानतत्त्वज्ञानुष्ठेयकर्मफलभूतान् सुखा-दीन् प्रजहाति प्रकर्षेण त्यजति, मनागपि तान्न सङ्कल्पयति, न तु

१. BN[2] भानैक IO भातैकात्मना
२. All except BS[1] omit मय
३. BS[1] omits सति
४. BN[1] चराभ्यां शक्तिश्रद्धाभ्यां BN[2] and BS[2] चराभ्यां
५. BN[2] omit भक्तिश्रद्धाभ्यां
६. IO omits दृढ. BN[1] and BS[2] notes it in the margin.
७. BS[2] संवेत्ति
८. IO यथा
९. IO यदिदं
१०. IO तदा प्राज्ञो भवति
११. BN[1] तत्त्वानुष्ठेय
१२. IO सुखात्

कर्माणि प्रजहाति। कथमेतत्संभवति, कर्माणि च करोति, फलं च प्रजहातीति? तदुपपादयितुं विशेषणमाह—"आत्मन्येवात्मना तुष्टः" इति। सर्वः कश्चित्स्व-संविदधिकरणं तोषं[1] प्रीतिमनुभवति, किंतु अप्राप्तपूर्वेण केनचिदनित्येन प्राप्येन सुखसाधनभूतेन वस्तुना प्राप्तेनानित्यमेव तोषं[3] प्राप्नोति। अयं तु योगी सततसन्निहितानस्तमितचित्प्रकाशात्मना परामर्शाभावमात्राद्व्यवधानमिव प्राप्तेन सर्वदा सुखसंपूर्णस्वमहिमत्वादखिलवस्तुस्पृहाविच्छेदकारिणा स्वयंनिहितविस्मृतेन महानिर्धानेनैव पुनः प्रत्युदितस्मृतिवशात्प्रतिलब्धेनात्मनैव सत्येन स्वभावेन निरुत्तरेण लाभेन लब्धसहजानन्दः। एवंविधश्चायं कृपणप्रार्थनीयानुत्पाद-विनाशधर्मकान् कामान् कथं[6] न प्रजह्यात्। यदा चेत्थंभूतस्सन् कामान् सर्व-कर्माणि कुर्वन्नपि प्रजहाति, तदा स्थितप्रज्ञः॥

यथोक्तस्वभावलब्धप्रतिष्ठबुद्धिर्भवतीति सामान्येन स्थितप्रज्ञलक्षणमुक्त्वा तदेव विशेषतो वक्तुमाह—

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**
**वीतरागभयक्रोधः [8]स्थिरधीर्मुनिरुच्यते॥ ५८॥**

इह कर्मफलभूते सुखदुःखे प्राप्स्यमाने प्राप्ते च द्विप्रकारतया सर्व-प्राणिनां विकारहेतुत्वमापद्यंते। अयं [10]तूक्तलक्षणः स्थितप्रज्ञः प्राप्स्यमानेषु सत्सु

१. BS[1], BS[2] and IO तेषां
२. IO, BN[1] and BN[2] प्राप्त-
३. All except BN[2] तेषां
४. IO निधानेनेव
५. All except BS[2] omit कामात्
६. BS[1] and IO कथनं प्रज-
७. All except BS[1] स कामात्
८. IO and BS[1] स्थितधीः
९. BS[2] आपद्येते
१०. BN[1] and BN[2] ह्युक्त
११. BN[1] and BN[2] सत्सुखदुःखेषु

दुःखेष्वनुद्विग्नमना निर्भयचित्त एव भवति, सुखेषु च प्राप्स्यमानेषु विगतस्पृहो निवृत्ताभिलाषो भवति ; यथोक्तपरिपूर्णात्मरूपलब्धप्रतिष्ठत्वात् सर्वसाम्यसमाधिं समापन्नः, अत एव वीतरागभयक्रोधः—रागः सुखविषयोऽभिलाषः, तथा भयं सुखप्रतीघातहेतोरशक्यप्रतीकारात्सन्त्रासः, तथा क्रोधः शक्यप्रतीकारं तथाविधं प्रति रोषः, एते वीता विगता यस्य तथाविधः स्थितप्रज्ञ उच्यते ॥

एवं प्राप्स्यमानसुखदुःखनिर्विकारतया स्थितप्रज्ञस्य लक्षणमुक्त्वा प्राप्त-सुखदुःखस्य निर्विकारतया तं प्रतिपादयितुमाह—

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५९ ॥**

योगी तत्तदनन्तभेदं सुखसाधनभूतं दुःखसाधनभूतं वा सुखात्मकं दुःखात्मकमेव वा शुभाशुभं प्राप्य नाभिनन्दति नापूर्वक्षणिकहर्षलक्षणं क्षोभं श्रयति, यतः सर्वस्मिन्वस्तुन्यनभिस्नेहः 'इदं मम सर्वमन्यद्दुःखकारणम्' इति अभीष्टेषु अनुरागोऽभिस्नेहः ; स यस्य नास्ति स तथोक्तः । तथा शुभं प्राप्य न द्वेष्टि न तत्प्रतिषेधप्रयत्नलक्षणं क्षोभमुपयाति । य एवंविधः प्राप्तयोरपि प्रियाप्रिय-योर्नित्यनिर्विकारस्वात्ममात्रसुव्यवस्थितबुद्धिः तस्य प्रतिष्ठिता प्रज्ञोच्यते ॥

---

१. IO छत्वासर्वमाप्य
२. BN[1] and BN[2] समाधिसमा
३. IO कारतथाविधप्रति
४. BN[1] and BN[2] add सः
५. All except BS[1] omit स्थित... कारतया
६. BN[1] and BN[2] नन्दति पूर्व
७. BN[2] omits अप्रिय
८. IO and BN[1] सुव्यवस्थितस्य प्रति
BN[2] सुव्यवस्थितः तस्य

एवं प्रतिष्ठितप्रज्ञत्वं येन कर्मणा उपायभूतेन निष्पद्यते तद्वानपि स्थितप्रज्ञ एवेति प्रतिपादयितुमाह—

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वतः[1] ।
इन्द्रियाणीन्द्रियार्थेभ्यः स्थितप्रज्ञस्तदोच्यते ॥ ६० ॥

चशब्दो व्यतिरेके । यदा[2] पुनरयं योगी सर्वतः[3] सर्वेभ्य इन्द्रियार्थेभ्यः[4] शब्दादिभ्य इन्द्रियाणि श्रोत्रादीनि संहरति व्यतिरेचयति, स्वभावतश्चिदर्करश्मिरूपाणि तन्निष्ठान्येव करोति । कथम्? कूर्मः कच्छपो यथा स्वावयवान् स्वशरीरनिष्ठान् करोति एव[वम्], तदासौ स्थितप्रज्ञ इत्युच्यते ॥

अथो[5] विषयेभ्य इन्द्रियसंहारः किंशब्दाद्यग्रहणेन[6] वा, किं वा ग्राह्यमानेषु शब्दादिष्वपि निर्विकारत्वेनात्रोक्त इति पक्षद्वयसंभावनायां पूर्वपक्षस्थैर्यप्रतिपादनपूर्वमुत्तरमेव पक्षं समर्थयितुमाह—

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६१ ॥

अभ्युपगम्येदमुच्यते; अस्त्येतत् निराहारस्य शास्त्रविहितानपि शब्दादीनानाहरतस्तान्दूरतः[7] परिहरतो विषया इष्टाः शब्दादयो विनिवर्तन्ते, प्रत्या-

---

१. IO, BN[1] and BN[2] सर्वशः
BS[2] notes सर्वशः as an alternative reading
२. BN[1], BN[2] and BS[2] यतः
३. All except BS[1] सर्वशः
४. IO omits इन्द्रि...दिभ्यः
५. BN[1] अथ
६. BS[1] आग्रहणेन
७. IO, BN[1] and BN[2] नाहारतः

सत्त्यभावात्स्वकार्यं[1] रागादिकं नारभन्ते; किंतु रसवर्जं रसमभिलाषं रागाख्यं क्लेशं वर्जयित्वा। स हि तदानीं प्रसुप्तस्तनुर्वा[2] वर्तते। परमनैष्ठिकस्य[3] रसोऽपि निवर्तते नाम परं प्रकृष्टं समाध्युपेयं वस्तु दृष्ट्वा साक्षात्कृत्य; यदि वा एष योगी यदा परं तत्त्वं विषयपरिहारं समाधिक्रमेण पश्यति, तदा तं दृष्टवतस्तस्य रसोऽपि जातु निवर्तत इति क्त्वान्तं निष्ठार्थत्वेन व्याख्येयम्॥

एवं विषयपरिहारपरमसमाधेः परामपि काष्ठां प्राप्तस्य सच्छलत्वं[4] प्रतिपादयन् यथोक्तज्ञानं[5]पूर्वमनिषिद्धविषयसेवा[6]त्मकं सच्छलं समाधिं सिद्धा[7]न्तीकुर्वन्नाह—

**यत्तस्यापि हि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥ ६२॥**

**तानि संयम्य मनसा युक्त आसीत तत्परः[8]।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥ ६३॥**

यद्यस्मात्[9] तस्यापि विषयानाहरणसमाहितस्य परतत्त्वदर्शनयोग्यतामपि प्राप्तस्य विदुषो विपश्चितो ज्ञान[10]विघातजागरूकत्वाच्छिद्रान्वेषणपराणि प्रमथन[11]-

१. IO कार्यराग-
२. IO प्रसुप्तमनु वा वर्तते
BN[1] प्रसुप्तस्तथा वर्तते
३. All except BS[1] add यदि वा and omit it later.
४. BN[1] and BN[2] सशूलत्वं
BS[1] and BS[2] सश्छलत्वं
५. IO, BN[1] and BN[2] ज्ञानप्रवेशनिषिद्ध
BS[2] Notes this as an alternative reading.
६. BS[1] मेवात्मकसश्छलं
७. IO, BN[1] and BN[2] दृष्टान्तीकुर्वन् BS[2] notes this as an alternative reading.
८. BS[2] notes मत्परः as an alternative reading.
९. IO omits यद्यस्मात्तस्यापि
१०. IO ज्ञानविज्ञानविघातजागरूकता छिद्रा-
११. IO प्रमथशीला-

शीलानोन्द्रियाणि प्रसभं प्रसह्यैव कंचिदव[१]काशलेशं लब्ध्वा[२] मनश्चित्तं हरन्ति। लब्धादपि समाधि[३]फलाद्व्यपकर्षन्ति विषयाभिमुखतां नयन्ति। [४]श्रूयन्ते हि [५]तथाविधविषयप्रतिषेधयोगनिष्ठा योगिनश्चिरादपि इन्द्रियैः कामान्प्रति [६]प्रवर्तनेन प्रमथितचित्ताः। यत एवमयं सच्छलो विषय[७]परिहारसमाधिः ततस्तानीन्द्रियाणि मनसा यथोक्तज्ञाननिष्ठेन चेतसा संयम्यात्मवशानि कृत्वा युक्तो यथोक्तलक्षणे स्वात्मतत्त्वे समाहितः सर्वास्ववस्थासु तदेकनिष्ठः सन् तत्परः शास्त्रा[८]निषिद्ध-शब्दादिग्रहण[९]प्रवृत्तेन्द्रियनिष्ठ एवासीत। यस्मात् यथोक्तेन क्रमेण यस्य योगिन इन्द्रियाणि वशे विधेय[१०]त्वे वर्तन्ते[११] तस्य प्रतिष्ठिता लब्धनिश्चलस्थितिः प्रज्ञो-च्यते। अत्रायं[१२] दृष्टान्तः—कश्चिद्गारुडिकः तादृशः संभवति यो मन्त्र-प्रभावेन भुजगान्प्रतिषेद्धुमलम्। स यदा तादृङ्मन्त्रोपासनशैथिल्यलक्षणं प्रमाद-मातिष्ठति, तदा ते छिद्रान्वेषिणो भुजगास्तं व्यापादयन्त्येव। कश्चित्तु [१३]गारुड-शास्त्ररहस्यवेदित्वा[१४]त्तादृशातिशययुक्तो भवति, येन तैरेव भुजगैः स्रग्दामभिरिव क्रीडति; तं च ते न कदाचिदभिभवितुं प्रभवन्ति[१५]। एवं योगी कयाचिद्युक्त्या कंचित्कालं विषयान्परिहृत्य समाधिमभ्यस्यति; तस्य मनागप्यवधानविच्छेदात्ते

---

१. BN[1] and BN[2] अवकाशं
२. IO लब्धा
३. BN[1] and BN[2] अपकर्षन्ति
४. BN[1] श्रूयते
५. BS[1] and BS[1] यथाविधं
६. IO, BN[1] and BN[2] वर्तनेन
७. BN[1] and BN[2] विषयप्रतिहार
८. BN[1] and BN[2] निषिद्ध
९. BN[1] and BN[2] अप्रवृत्ते-
१०. IO, BN[1] and BN[2] विधीयत्वे
११. BN[2] omits वर्तन्ते
१२. IO omits अयं
१३. All except BS[1] कश्चिद्गारु-
१४. BN[1], BN[2] and BS[2] वेदितत्वात्
१५. BS[2] adds in the margin न कदाचित् तं प्रमुष्णन्त्येव

लब्धावकाशा[1] विषयाश्चित्तं प्रमथ्नन्त्येव[2]। यस्तु यथोक्ते पारमार्थिके स्वात्मन्येव सदा सुव्यवस्थितः, स विषयैः क्रीडन्नपि न कथंचिद्बाधितुं शक्तः[3], यथोक्तम्—

"वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान्।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि॥"

अथ "कूर्मोऽङ्गानीव" इत्युपमाननिर्देशाद्विषयेभ्योऽत्यन्त[4]व्यावर्तनमेवेन्द्रियाणां संहारः संयमो यः[5] तेभ्योऽन्यथैवं[6] तं[7] प्रतिपादयन्, प्रतिष्ठितप्रज्ञत्वस्य श्लोकपञ्चकेन मुख्यं लक्षणमाह—

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते॥ ६४॥**

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥ ६५॥**

**रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥ ६६॥**

**प्रसादे सर्वदुःखानां हानिरस्योपजायते।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते[8]॥ ६७॥**

---

१. IO लक्षाव-

२. IO प्रमथयन्त्येव
BN[1] and BN[2] प्रमथन्त्येव

३. All except BS[1] read शक्यः

४. BN[2] अत्यन्तवर्तमानमेव

५. IO यस्तेऽन्यथैव. BS[2] notes this as an alternative reading.

६. BN[2] न्यथेव

७. BN[1] omits तं

८. BN[2] adds within brackets the following two verses:

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥

These two verses are written in the margin.

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वतः[1] ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

इह खल्वचिन्त्यपरमेश्वरमायामुषितसम्यग्ज्ञानतया शरीरमात्रमात्मत्वेन प्रतिपन्नस्य संसारिणः सतः पुंसः सन्निहितमपि मुख्य[2]ध्येयं निरु[3]त्तरानन्तनिजानन्दसुधासागरं सत्यं स्वा[4]त्मानमविमृशतो दुःखैकपरिणामनित्यकृत्रिमसुखसाधनस्पृ[5]हतया शब्दादीन्विषयान् ध्यायतः सततं चिन्तयतः तेषु सङ्गो निबिडनिमग्नमानसत्वमुपजायते उत्पद्यते। तस्मात्तथाविधात्सङ्गात् कामस्तद्विषयोऽभिलाषो रागाख्यः क्लेशः संजायते समुद्भवति । तस्माच्च तत्प्रतिकूलेषु वस्तुषु क्रोधः द्वेषाख्यः क्लेशप्रकारोऽभिजायते प्रभवति । ततश्च[6] संमोहः आत्मानात्मादिवस्तुविवेकविरहात्मकमज्ञानं प्रभवति, मोहाख्यः क्लेश उन्मज्जतीत्यर्थः । ततश्च स्मृतिर्विभ्राम्यति, सत्यं स्मर्तव्यमात्मानमस्पृशन्ती स्वरूपलोपमिवाप्नोति; तादृशा[7]च्च[8] स्मृ[9]तिभ्रंशात् परमार्थनिश्चयात्मकं ज्ञानं नश्यति तिरोभवति; तस्माच्च[10] हेतोः पुरुषः सत्यस्वरूपप्रतिष्ठाभावलक्षणं नाशमुपगच्छतीति संसारिणं पुरुषमुद्दिश्याप्रतिष्ठितबुद्धित्वस्य हेतुपरम्परां प्रतिपाद्य इदानीमनुजिघृक्षाक्ष[11]णोक्षिप्यमाणसन्देहतिरस्क[12]रिणीतिरोधानतया प्रकाशमानयथोक्तस्वस्वभावप्रकाशस्य प्राप्त[13]प्रबोधस्य मुमुक्षोः[14] प्रतिष्ठितप्रज्ञत्वस्य कारणक्रमं प्रतिपादयितुमाह—

---

१. IO and BS² सर्वशः
२. IO मुख्यमव्यय
३. All except BS¹ निरुपमा
४. IO स्वात्ममवि
५. BN¹ स्पृहया
६. BS¹ ततस्तु
७. BS¹, BS² and IO तादृशाश्च
८. BS², BN¹ and BN² add तस्मात्
९. BN¹ and BN² बुद्धिः परमार्थ
१०. IO omits च
११. BS¹ and BN² क्षणात् क्षिप्य
१२. BN¹ and BN² तिरस्कारिणी
१३. IO प्राप्तप्रबो-
१४. BS² adds पुंसः

"आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति "[१] इति ॥[२]

आत्मवश्यैर्विधेयात्मा तु पुमान् विधेयः प्रत्यवमर्शविषयभूतत्वात्स्वाधीन आत्मा[३] स्वभावो यस्य स तादृशः पुरुषः; आत्मवश्यैस्तादृशस्य सत्यस्यात्मनः स्वशक्तितया प्रतिपाद्यमानत्वाद्विधेयैस्तदधीनप्रवृत्तिस्थितिसंहृतिभिरिन्द्रियैर्बाह्याभ्यन्तरैः करणैः किरणैरिवार्कः पदार्थान्विषयांश्चरन् गच्छन् प्रसादं सुखादिकलङ्कसंपर्का[४]-भावरूपं वैशद्यमधिगच्छति प्रतिलभते। अत एव कीदृशैरिन्द्रियै[५]र्विषयांश्चरन्? रागद्वेषविमुक्तैः[६]। रागद्वेषौ हि विषयमात्रध्यानसंप्रसक्तस्य विस्मृतस्वात्मनः पुंसो विषयान्प्रति प्रवर्तमानेष्विन्द्रियेषु परिस्फुरतः। यस्य तु सर्वतः परिपूर्णत्वान्नित्य-निरभिलाषस्वरूपप्रत्यवमर्शपूर्वकः सर्वज्ञानक्रियाव्यवहारः, तस्य रागद्वेषाभ्यां विमुक्तानीन्द्रियाणि स्वं स्वं विषयमभिप्रवर्तन्त इति तादृशैरिन्द्रियैर्विषयाँ[७]-श्चरन् प्रसादमधिगच्छतीत्युक्तम्। एवंविधे च निसर्गनिर्मले[८] स्वरूपाभि-व्यक्तिलक्षणे प्रसादे सति रागादिक्लेशनिबन्धनानां सर्वेषामाध्यात्मिकाधि-दैविका[९]धिभौतिकानां दुःखानां हानि[१०]: परिक्षयोऽस्य[११] पुंस उपजायते। यतो यथो-क्तेन प्रकारेण प्रसन्नं नीरागद्वेषकलङ्कं चेतो यस्य[१२] तादृशस्य पुंस आशु प्रसाद-

---

१. BS². The following verse
प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥
is written in the margin, with the indication that it should be added here.

२. BN¹ and BN² omit इति

३. BN¹ and BN² आत्मस्वभावः

४. IO omits संपर्क

५. IO omits इन्द्रियैः

६. BN¹ BN² and BS² द्वेषमुक्तैः

७. All except BS¹ विषयान्तश्चरन्

८. BS¹ निर्मलस्व-

९. All except BS¹ and BN¹ दैवत

१०. BN¹ and BN² omit हानिः

११. All except BS¹ क्षयेऽस्य

१२. BS² adds स

समनन्तर[1]मेव बुद्धिः प्रज्ञा पर्यवतिष्ठते, परितः समन्तात्सत्ये स्वात्मनि निर्विप्लवां प्रतिष्ठां लभते। यत एवं तस्मात्कारणाद्यस्य पुरुषस्य सर्वतः सर्वेभ्यः सुखहेतुभ्यो दुःखहेतुभ्यश्चेन्द्रियार्थेभ्यो विषयेभ्यो दुःखहेतुष्वपि द्वेषविरहितत्वेन सुखहेतुष्वपि नीरागतया प्रसृतान्येव निगृहीतानि नियमितानि बाह्याभ्यन्तराणीन्द्रियाणि, तस्य तथाविधस्य प्रत्यासन्नपरमेश्वरसायुज्यस्य प्रज्ञा बुद्धिः प्रतिष्ठिता, स्वात्मनि लब्धस्थितिः। न त्वन्यस्य यः प्रतनुप्रयत्नलक्षणसमाधिनिरुद्धान्यैनुत्खातरागद्वेषै[2]मयमूलत्वात्प्रसृतानि कार्यकरा[3]ण्येव निगृहीतानीन्द्रियाणि मन्यते[4]॥

अत एव समस्तसंसारिपुरुषविलक्षणां प्रबुद्धस्य वृत्तिं प्रतिपादयितुमाह—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ ६९॥

---

१. BS[2] ;न्यानुत्खात

२. BN[1] and BN[2] द्वेषमलमयमूल.

३. BS[2] कारणानीव
BN[1] and BN[2] वारणान्येव

४. BN[2] alone adds in the margin

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥

अयुक्तस्य अवशीकृतेन्द्रस्य। नास्ति बुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविषया बुद्धिर्नोत्पद्यते। भावना ध्यानम्। अभावयतः आत्मध्यानमकुर्वतः। शान्तिः आत्मनि चोपरतिः। सुखं मोक्षो[क्षा]नन्दमित्यर्थः॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥

अनुविधीयते मनः अवशीकृतं सदिन्द्रियेण सह गच्छति। अस्य पुरुषस्य प्रज्ञां हरति विषयविक्षिप्तां करोति॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥

महाभावौ[बाहो] वैरिनिग्रहसमर्थस्य तव तत्रापि सामर्थ्यं भवेदिति सूचयति॥

सर्ववस्तुप्रकाशकस्वरूप[1]प्रकाशनिरूपणरूपा वृत्तिरेवेह संसारिणः प्रति निशाशब्देनोक्ता[2] । तद्विषयत्वेन[3] सर्वभूतान्यनुन्मिषितदृक्शक्तित्वात्प्रसुप्तानि तिष्ठन्ति । एवंविधा या सर्वभूतानां निशा तस्यां तद्विषये संयमी यथोक्तप्रकारेण निगृहीतसर्वेन्द्रियः प्रबुद्धो जागर्ति, प्रविकसितस्वभावनिर्मलविज्ञानमयविलोचन-विभाव्यमानां तामेवाविमुञ्चन् विगतमोहनिद्र आस्ते । यस्यां तु प्रतिक्षणविनश्व-रसुखदुःखसाधनभूतविषयग्रहणोत्सर्गमात्र[4]व्यग्रसमग्रेन्द्रियग्रामायां संसारव्यवहार-वृत्तौ सर्वभूतानि समस्तप्राणभृतो[5] जाग्रति तावन्मात्रावहितत्वात् विनिद्रतामि-वानुभवति । सा तादृशी वृत्तिः पश्यतः सदसत्पदार्थसार्थपरमार्थमालोकयतो मुनेः संयमिनः प्रबुद्धस्य, रात्रिर्निशा, तां प्रति तस्य निरवधानत्वात् ॥

एवं सततमनस्तमितसामान्यसंवित्प्रकाशात्मनि स्वभावे सुव्यवस्थितप्रसन्न-बुद्धिः प्रबुद्धः पवन इव सदसदात्मकै[6]र्विविधैः पदार्थैः परिचयमुपगच्छन्नपि तत्संपर्कसंजातैः सुखादिभिर्मनागपि न विकृतिं नीयत इत्युपमाननिदर्शनेन स्फुटतरं तत्स्वरूपं प्रतिपादयितुमाह—

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

---

१. BN[1] and BN[2] प्रकाशस्वरूप
२. BN[2] उक्तः
३. BS[1] adds हि
४. IO, BS[2] and BN[2] omit मात्र
५, All excepts BN[1] प्राणभूतो
६. IO सदसदामोदैः
BS[1], BS[2] and BN[2] सदसदात्मकामोदैः

स प्रबुद्धः पुरुषातिशयः शान्तिं सकलविकल्पकल्लोलक्षोभपरिक्षयान्निस्तिमितचित्तवृत्तितामधिगच्छति प्राप्नोति । कोऽसौ यं कामा विषयास्तद्रूपप्रविशन्ति निरभिलाषमेवावगाहन्ते ? कथम् ? यथा समुद्रं नानादिगन्तरागतसरिद्रूपा आपः । कीदृशम् ? ताभिरापूर्यमाणं भ्रियमाणमपि अचलप्रतिष्ठं निष्प्रकम्पापारगम्भीरनिजावस्थानम् । अनेनोपमानेन प्रत्यासत्तिसामर्थ्यात् सम्बध्यमानैरपि सुखादिहेतुभिः शब्दादिभिर्यः क्षोभं नेतुं न शक्यते स एव शान्त इत्युच्यते, न तु यस्तेष्वसंन्निहितेषु शान्तः, यथोक्तम्—

" विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः " इति । अत एवाह—न कामकामी शान्तिमाप्नोति, मनसा कामान् सुखसाधनभूतान् विषयान् कामयमानोऽभिलष्यन्नेवेन्द्रियव्यापारपरिहारमात्रेण न शममाप्नोतीति ॥

एवमभिप्रायं प्रकटयितुमाह—

**विहाय कामान्यः सर्वान् पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१ ॥**

---

१. BN[1] कामविषयाः
२. BN[2] नानादिगत
३. IO रूपाम्
४. BN[2] omits this word.
IO भ्रियमाणं
BN[1] पूर्यमाणं
५. All except BS[1] सन्निहितेषु
६. BS[2] and BN[2] अशान्तः. It is possible to read thus in BN[1] also.
७. BN[1] and BN[2] मानसान्. This is noted as an alternative reading in BS[2] also.
८. BN[1] and BN[2] लष्यत्येव

यः सर्वानशेषान् कामानिष्टान् शब्दादिविषयानभिलाषान् मनसैव विहाय परित्यज्य इन्द्रियैर्विषयांश्चरति[1] अवगाहते, स शान्तिमुक्तरूपामधिगच्छति[2][3] प्राप्नोति। कीदृशः सन्? नित्यतृप्ताद्वयचिन्मात्रप्रतिलब्धात्मप्रत्ययत्वात् निस्पृहः स्पृहातो विषयसुखलोलुभतया[4] निष्क्रान्तः। तथा निर्ममः प्रतिनियतेषु देहेन्द्रियविषयादिषु भावेषु ममैवेदमिति ममत्वाभिमानात् निष्क्रान्तः। तथा निरहङ्कारः देहबुद्धिप्राणादिष्वात्मप्रत्ययरूपादवच्छिन्नादहङ्कारादपि[5] निष्क्रान्त इति ॥

एतदन्तेन ग्रन्थेनापवर्गमार्गप्रवणस्य पुंसः प्रथममेव सहजभक्त्याद्यव्यभिचारि[6]चिह्नसूचितोपदेशयोग्यबुद्धितया सद्गुरूपदिष्टदेहदेहिव्यतिरेकज्ञाननिरन्तराभ्यासवशाद्देहादिवर्ग[7]व्यावर्तमानात्मप्रत्ययस्याद्वैतसामान्यसंवित्प्ररोहादहंप्रतीतेश्चिदर्करश्मिरूपाणामन्तर्बहिष्करणशक्तीनां[8] शास्त्रचोदितेषु विषयेषु विमृष्टत्वमेव[9] निर्ग्रहं[10] निरुत्तरपदप्राप्तिहेतुं सिद्धान्तीकृत्य सप्तदशाध्यायप्रदर्शितपरमरहस्योपदेशप्राणभूतार्थप्रतिपादकं द्वितीयमध्यायमुपसंहरन्नाह—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**

---

१. BS[2] adds गच्छति
२. BN[1] शान्ति मुक्ति-
३. IO, BS[1] and BS[2] रूपं
४. BN[1] लोलुभतया
५. BN[1] अविच्छिन्न
६. BN[1] व्यभिचार
७. BS[2] वर्गस्य व्या-
८. IO अन्तःकरणशक्तीनां
९. BN[1] and BN[2] विसृष्टत्वमेव
१०. IO निग्रहनिरु-
BN[2] निग्रहः

एषा " विहाय कामन् यः सर्वान् " इत्यन्तेन ग्रन्थेन प्रतिपादिता ब्रह्मणः परस्य तत्त्वस्य परमात्मसंज्ञकस्य सम्बन्धिनी स्थितिः ; एतया ब्रह्मणि स्थीयते इति विषयान्तरनिवृत्तगतितया प्रतिष्ठा क्रियते ; अत एवैनां प्राप्य य[1]थोक्तेन क्रमेण स्वात्मीकारेण स्वीकृत्य अभियुक्तो न मुह्यति, देहादिष्व[2]ात्मप्रत्ययरूपं वैचित्र्यं न भजते, यतोऽस्यामन्तकालेऽप्यु[3]परमसमयेऽपि स्थित्वा वि[4]श्रम्य निर्वाणं नाना-विकल्पक्षोभप्रत्यय[5]ात् प्रशान्तं ब्रह्म परं तत्त्वं स्वं[6] स्वभावमयमृच्छति गच्छ-ति, तदैकात्म्यमापद्यत इत्योम् ॥

द्वितीयेऽध्यायेऽस्मिन् हृदय इ[7]व गम्भीरविमले
 गृहीते गीतानां विबुधदयितानां प्रणयतः ।
तदाश्लेषानन्दामृतरसमपूर्वं रसयतां
 सदा वः पुंभावो भवतु कृतकृत्यः कृतधियाम् ॥

इति श्रीमद्[8]राजानरामकण्ठविरचिते [9]वाक्यार्थान्वयमाले
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
द्वितीयोऽध्यायः



---

१. IO युक्तेन क्रमेण
२. All except BS[1] स्वात्म
३. BN[2] उपरमसत्स्वभावमयेऽपि BN[1] adopts this reading but writes सत्स्वभाव in the margin.
४. BN[1] and BN[2] विश्राम्य
५. BN[2] प्रत्ययशान्तं
६. BN[2] स्वस्वभाव. BS[2] notes this as a reading.
७. IO omits इव
८. IO राजानराम विर BS[2] राजानरामकण्ठ BN[2] राजानकरामकवि
९. BS[1] विचित्रार्था

## ॥ अथ तृतीयोऽध्यायः ॥

---

अथ ज्ञानस्य कर्मणश्च भगवद्भाषितानि पृथक्प्रशंसावचनान्यनुविमृशन् सम्यक् समुच्चयार्थमनवधार्य[1] किमेतयोरुपादेयतरं स्यादिति संशयानो भगवन्तम्[2]

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

"दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय[3]" इत्यादि वदतः[4] तव कर्मणः सकाशाद्यदि बुद्धिर्ज्यायसी मता ज्ञानं प्रकृष्टतरत्वेनाभिप्रेतम्, तत्किं केन हेतुना बन्धहेतुत्वात्सर्वस्मिन् कर्मणि दारुणविपाकत्वात् घोरे विशेषतोऽस्मिन् गुरुज्ञातिघातादिमहापातकहेतौ सङ्ग्रामरूपे माम् "कर्मण्यस्त्वधिकारस्ते" इत्यादिना नियोजयसि प्रवर्तयसि[5] ? इत्थं च परस्परविरुद्धज्ञानकर्मप्रशंसारूपत्वाद्व्यामिश्रेण सङ्कीर्णेन वाक्येन मम बुद्धिं प्रज्ञां मोहयसीव निश्चयोपदेशेन प्रबोधनमिच्छन् संशयापादकवचनप्रणयनाद्वैचित्र्यमिव मां प्रापयसीत्यर्थः । तस्मात्कारणादेतयोर्ज्ञानकर्मणो-

---

१. IO अवधार्य
BN² and BS² अविचार्य

२. IO adds उवाच

३. All except BS² omit धनञ्जय

४. IO omits वदतः...यदि

५. IO omits प्रवर्तयसि

मध्यादेकं ज्ञानं वा कर्म वा इदमेवानुष्ठेयमिति निश्चित्य निर्णीय ब्रूहि, येनैकतरेण सुगृहीतेन सता श्रेयोऽपवर्गलक्षणमभ्युदयमहं[1] प्राप्नुयां लभेयेति ॥

अथ 'अन्यथैव मयोक्तम्, अन्यथैव त्वया[2] प्रतिपन्नम्' इत्यर्जुनं प्रत्युपालम्भमिवाविष्कुर्वं[3]स्[4]तत्संशयव्युदासाय

श्री[4]भगवानुवाच—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

सांख्या[5] यथाप्रतिपादितलक्षणशरीरिशरीराद्युपादेयहेयपदार्थसङ्ख्यानम्; तद्विदो मुख्यतया साङ्ख्या उच्यन्ते । योगो यथोक्तसाङ्ख्यनिश्चितार्थसाक्षात्कारकरणं[6] क्रियाविशेषः ; स विद्यते येषां तेऽपि मुख्यतया योगिनः । कपिलादयो हैरण्यगर्भादयश्चात्र[7] गौण्या वृत्त्या सांख्या[8] योगिनश्चोच्यन्ते, यथोक्तलक्षणस्यात्मादेरर्थस्य[9] तेषामनिश्चयादसाक्षात्काराच्च[10] । तदेवंविधानां मुख्यानां साङ्ख्यानां योगिनां च पुरास्मादध्यायात्पूर्वं द्वितीयेऽध्याये[11] मयैकैव निष्ठोक्ता निश्चयै[12]सिद्धान्तः प्रतिपादितः[13] ।

---

१. BS² omits अहं
२. BN² omits त्वया
३. BN¹ and BN² आविष्कुर्वन्
४. BS¹ omits श्री
५. BN¹ and BN² संख्या
६. IO and BS² करणक्रियाविशेषः
BN¹ and BN² करणविशेषः
७. BS², BN¹ and BN² omit अत्र
८. BS¹ omits सांख्याः
९. BN¹ and BN² परमात्मादेः
१०. IO and BS² काराश्च
११. BN² and BS² द्वितीये
१२. BN² निश्चयः
१३. BN² omits प्रतिपादितः

कीदृशी निष्ठा ? द्विविधा, द्वे एकानुष्ठातृपुरुषनिष्ठे युगपत्प्रयोज्ये विधे विधाने प्रकारौ[१] यस्याः सा तथोक्ता[२]। केन प्रकारेण द्विविधेत्याह—

"ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" इति।

यथाप्रतिपादिताद्वयचिन्मात्रस्वरूपस्यात्मतत्त्वस्य प्रत्यभिज्ञालक्षणा[३] प्रतिपत्तिरिह ज्ञानमुच्यते; तद्विषयो योगः समाधिः[४]। कर्मण्यपि सति[५] यथोक्तस्वरूपाप्रच्युति-लक्षणं प्रणिधानम्[६]। तेन ज्ञानयोगेन मुख्यानां[७] यथोक्तानां साङ्ख्यानां निष्ठा मयोक्ता। ते हि नैष्ठिकाः साङ्ख्या येषां कर्मणि प्रवृत्तानामपि यथोक्तात्म[८]ज्ञानविषयः समाधिरविप्लुतः[९]। कर्म यथावर्णं[१०] यथाश्रमं शास्त्रचोदिता सा सा क्रिया; तत्र योगः समाधिः यथोक्तज्ञानापरित्यागेन तदनुष्ठाननिष्ठिता; तेन कर्मयोगेन मुख्यानां योगिनां निष्ठोक्ता[११]। एवं ज्ञानयोगस्य कर्माविनाभावात् कर्मयोगस्य च ज्ञानाविनाभावात् एकैव प्रकारद्वयनिर्वर्त्या निष्ठा मया पूर्वमुक्ता, तत्प्रतिपादकश्च ग्रन्थस्तत्रोक्तः। कथं विस्मृतो भवतः[१२]? तथा च—"दूरेण ह्यवरं कर्म" इत्यादिना ज्ञानस्य प्रकर्ष-प्रतिपादनमुपक्रम्य तत्समाधिप्रतिपादनायोक्तम्[१३] "तस्माद्योगाय युज्यस्व" कर्मनिष्ठो

१. All except BN[1] प्रकारो
२. IO तथोक्तानेकेन
३. BN[2] लक्षणप्रति
४. IO, BN[1] and BN[2] समाधि-कर्मणि
५. IO, BN[1] and BN[2] सत्ययथोक्त
६. IO प्राणिनाम् BN[1] and BN[2] प्रणीतम्
७. All except BS[1] यथोक्तानां मुख्यानां
८. BS[2] आत्ममयज्ञान
९. BS[2] notes as an alternative reading अविच्युतः
१०. IO omits यथावर्ण
११. IO निष्ठितां BS[2] निष्ठता
१२. BS[1] and IO भगवतः
१३. IO पादना यथोक्तं

भव; यतः कर्मसु यो योगस्तत्कौशलम्; सा बुद्धिमत्तो[1]ज्ञानित्वमिति; अनेन "ज्ञानयोगेन साङ्ख्यानाम्" निष्ठेति तत्रोक्तम् । तथा—" कर्मण्यस्त्वधिकारस्ते " " तस्माद्योगाय युज्यस्व " इत्यादिना कर्मणोऽवश्यकरणीयत्वं व्यवस्थाप्य तत्समाधिप्रतिपादनायोक्तम्—

" कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
कर्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ " इति

तथा—

" रागद्वेषविमुक्तैस्तु[2] विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ "

इत्यादि । अनेनापि " कर्मयोगेन योगिनाम् " निष्ठा तत्रोक्ता । किं बहुना ! " दूरेण ह्यवरं कर्म " इत्यतःप्रभृत्यध्यायपरिसमाप्ति[3] यावत् एकपुरुषानुष्ठेयद्विविध[4]निष्ठाप्रतिपादनपरत्वेन सर्वो ग्रन्थस्तत्र व्याख्यातः[5]; तत्कामे व्यामिश्रवचनता, ययैवं ते बुद्धिमोह उत्पन्नः ॥

अथ मन्यसे—यथोक्तात्मलक्षणैकार्थरहितत्वं[6] ज्ञानमित्युक्तम्; कर्म च नानाविषयहानादानरूपव्यापारात्मकम् ; तदेतयोः ज्ञानकर्मणोः परस्परविरुद्धयो-

१. IO, BS[1] and BS[2] सत्ता

२. IO, BS[2] and BN[1] युक्तैस्ते BS[1] and BN[2] seem to read युक्तैस्तु but see II, 66 ante.

३. IO, BN[1] BN[2] and BS[2] समाप्तिः

४. BN[1] विविधा

५. BN[1] and BN[2] ग्रन्थस्तत्रोक्तः

६. BN[2] and BS[2] र्थावहितत्वं

युगपदेकपुरुषानुष्ठेयत्वं कथमुपपद्यत इति, अत्रोच्यते। सम्यगनवधारिता-ज्ञानकर्मानुष्ठाननिष्ठा तवैवंविधबुद्धिमोहकारणम्; अतस्तां पुनरुच्यमानामवधारयेति मनसि कृत्वा आह—

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

अगृहीतयथाप्रतिपादितसमुचितसमुच्चयार्थनिश्चयत्वात् सर्वथा कर्मणां ज्ञान-विरोधित्वं मन्वानस्य तव यदेतन्नैष्कर्म्यमविद्यमानकर्मत्वं सिद्धिहेतुत्वेन प्रतिभाति, तत्सिद्धिकामः पुरुषः कर्मणां सर्वक्रियाणामनारम्भादननुष्ठानान्नाश्नुते प्राप्नोति, वक्ष्यमाणया युक्त्या शरीरित्वाव्यभिचारिणां शास्त्रीयाणां च कर्मणां दुष्परिहर-त्वात्। अतो न कर्मणामेषामकरणमात्रमभावत्वेनेह विवक्षितम्; किंतु बन्ध-लक्षणस्वकार्यसम्पादनसामर्थ्यभङ्गेनैषामभावापादनमिहाभिप्रेतम्। अथ विहितकर्मा-ननुष्ठानमात्रं कर्मत्यागः संन्यासोऽभिमतः, तदेवंविधात् संन्यसनमात्रादेव केवला-द्यथाप्रतिपादितज्ञानशून्यात् न पुरुषः सिद्धिमपवर्गलक्षणां सम्पत्तिं समधिगच्छति, समासादयति। यदीह ज्ञानरहिताद्विहितकर्मपरिहारमात्रान्मोक्षलक्षणफलावाप्तिः स्यात्, तत्सुषुप्तादयो मोहात्मकत्वान्नैष्कर्म्यमावहन्तोऽवस्थाविशेषाः सिद्धि-हेतवः स्युः ॥

---

१. BN[1] and BN[2] तवैव बुद्धिमोहा-कार

२. IO omits विध

३. BN[1] and BN[2] अधिगच्छति

४. BS[1] and BS[2] सुप्तादयः

५. BS[1] सिद्धिषु हेतवः

न च विहितकर्मानारम्भमात्रान्नैष्कर्म्यसिद्धिरिति यदुक्तम्, तत्र हेतुमाह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

हिशब्दो हेतौ । यस्मात्कश्चिद्देही जातु कदाचित्तत्तदवस्थाविशिष्टे कस्मिंश्चिदपि[1] काले न क्षणमपि सुसूक्ष्ममपि तदवयवमकर्मकृत्तिष्ठति कर्म कुर्वाणः स्थितिमनुभवति वर्तते इत्यर्थः । तथा च[2] बाल्ययौवनवार्धक[3]स्वरूपासु स्थूलास्ववस्थासु मनोवाक्कायैः सर्वः कश्चिद्देही कर्म कुर्वन्नास्ते—इति सुव्यक्तमेव; तदन्तर्गतासु च[4] जागरस्वप्नसुषुप्तरूपासु सूक्ष्मास्ववस्थासु[5] न कश्चिदकर्मकृत्, यतो जागरावस्थायां शब्दादिविषयग्रहणव्यग्रेन्द्रियव्यापाररूपायां सर्वस्य तत्तत्कर्म[6]निष्ठत्वं स्फुटमेव । स्वप्नावस्थायामपि विषयग्रहणाविलोपान्न कस्यचिदकर्तृत्व[7]स्थितिः । सुषुप्तावस्थायां तु तत्कालव्यतिरिक्तविषयसंवेदनाभावेऽपि प्रतिबोधकाले सुखदुःखमोहरूपानुभूतविषयप्रत्यवमर्शान्यथानुपपत्त्या मानसं कर्म विद्यत एव । या अपि योगिविषया एता जागरादयोऽवस्थास्तास्वप्येषैव वार्ता, यतः जागरस्वप्नयोर्ग्राह्यग्रहीत्रादिविकल्पानुपरमात् ; सुषुप्तावस्थायामपि तत्कालं ग्राह्यग्रहणग्रहीतृभेदसंवेदनाभावे सत्यपि व्युत्थाने तथाविधसमाध्यवस्थाप्रत्यवमर्शान्यथानुपपत्तिरिति तिसृष्वपि योग्यवस्थासु न कश्चिदकर्मकृत् वर्तितुमर्हतीति विहितकर्मानारम्भमात्रान्न नैष्कर्म्य-

---

१. IO omits अपि
२. BN[1] and BN[2] omit च
३. IO, BN[1] and BN[2] वार्धरूपासु
४. BS[1] omit च
५. BS[2] सुसूक्ष्मासु
६. All except BS[2] तत्कर्म
७. BS[2] अकर्मत्वेन स्थितिः
IO, BN[1] and BN[2] अकर्मत्वे स्थितिः

सिद्धिरिति पूर्वेण सम्बन्धः। इत्थं सर्वकर्माभावस्यानुपपत्तौ हेतुमाह। हिशब्दो हेतौ। यस्मात्सर्वः कश्चिद्देहभृत् अवशः परतन्त्र एव सन् प्रकृतिजैः प्रधानभवैर्गुणैः सत्त्वादिभिः कर्म शास्त्रविहितं शरीरित्वाव्यभिचारि च ग्राह्यतेऽनुष्ठाप्यते। इह हि परमेश्वरेच्छापरिकल्पितकारणभावं प्रकृत्याख्यं तत्त्वमन्योन्यगुणप्रधानभावपरिणत-सत्त्वादिगुणमयं तत्तच्छरीरमशेषशरीरिणामारभते गुणाश्चान्योन्याविनाभाववृत्तित्वा-द्रजोगुणानुगतत्वे सति सर्वं कंचिच्छरीरिणं सात्त्विकादिकर्मादिकृतं कुर्वत इति प्रकृतिजैर्गुणैः सर्वः कर्म कार्यते इत्युक्तम्॥

एवं च सर्वदेहिनां सर्वास्ववस्थासु सर्वकर्मच्छेदानुपपत्तौ स्थितायां विहितानां कर्मणामनारम्भमात्रेण नैष्कर्म्याभिमानिनो योगिनः शरीरित्वाव्यभिचारि-दुष्परिहरकर्मान्तरसद्भावात् कैवल्यलक्षणसिद्ध्यभावः प्रसक्त इति तथाविधस्य प्रायेणायोगित्वप्रतिपादनार्थमाह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥ ६॥**

उक्तयोपपत्त्या मानसस्य कर्मण उपरमाभावाद्यो योगी मनसान्तःकरणे-नेन्द्रियार्थान् शब्दादीन् सरंश्चिन्तयन्नास्ते, नैष्कर्म्यबुद्धिमालम्ब्यावतिष्ठति स

१. BN² and BN² भावैः
२. BS¹ भावप्रकृ
३. IO इत्युक्तः
४. IO, BN¹ and BN² सर्वावस्थासु
५. BN¹ and BN² कर्मावच्छेद.
६. BS¹ omit विहितानां
७. BS¹ omit मानिनो...व्यभि
BS² नैष्कर्म्याभिचारिणो
८. IO and BN² omit यः

मिथ्याचार उच्यते । [1]तादृशं योगाचरणं [2]फलविसंवादादृथैवेत्यर्थः। यतः कर्मेन्द्रियाणि, कर्मेन्द्रियशब्देनेह बहिष्करणानि श्रोत्रादीनि वागादीनि च गृह्यन्ते, तेन शब्दादिग्रहणव्यापाराधिकृतानि श्रोत्रादीन्यक्षाणि नियम्य [3]प्रयत्नविशेषेण स्वव्यापारात्प्रतिषिध्यासौ कंचित्कालं तथास्ते, न तु तावता सर्वात्मना सर्वक्लेशोच्छेदलक्षणकैवल्य[4]प्राप्तिः, यतस्तथाविधायां यदि परं क्लेशाः प्रसुप्ता भवेयुः, येषां व्युत्थाने पुनः प्रबोधादनुच्छेदो गम्यते ॥

यस्मिंस्तु समाधौ दग्धबीजकल्पतामापाद्यमानास्ते क्लेशाः सत्यप्यालम्बने प्ररोहसामर्थ्यं न भजन्ते, तदधिकृतस्येह विवक्षितस्य योगिनः पूर्वस्माद्विशेषम् "रागद्वेषवि[5]मुक्तैस्तु विषयानिन्द्रियैश्चरन्" इत्यादिना पूर्वोक्तमपि स्मारयन् [6]पुनराह—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

तुशब्दो व्यतिरेके । स पुनरसक्तः सङ्गरहितो योगी पूर्वस्माद्योगिनो विशिष्यते, [7]प्रकर्षत्वेन व्यतिरिच्यते । कोऽसौ ? यो मनसा यथाप्रतिपादितलक्षणसत्यात्मलब्धप्रतिष्ठत्वात् सर्वसाम्यदशाधिरूढेनान्तःकरणेन बुद्ध्या श्रोत्रादीनि नियम्य रागादिदोषसंस्पर्शात्, न तु [8]शब्दादेर्विषयात्प्रतिषिध्यते । एवंविधै रागादिस्पर्शशून्यैः

---

१. BS[1] तादृशरूपं
२. IO omits फलविसंवादात्
३. BS[1] omits प्रयत्नविशेषेण
४. BN[1] and BN[2] add फल
५. All read वियुक्तैस्तु. See ante II, 66.
६. IO, BN[1] and BN[2] इत्याह
७. IO प्रकर्षेण
८. IO, BN[1] and BN[2] शब्दादीन् विषयान् प्रतिषिध्यते
BS[2] notes this as an alternative reading.

कर्मेन्द्रियैः कर्मसु[१] शब्दादिग्रहणरूपेषु व्यापारेषु अधिकृतैरक्षैः कर्मयोगमारभते, कर्मणा शास्त्रचोदितशब्दादिग्रहणरूपया[२] क्रियया[३] योगं[४] सम्बन्धमारभते प्रस्तौति ॥

रागद्वेषपरिहारः प्रकरणप्रतिपाद्यसिद्धिसाधनम्, न तु कर्मणामनारम्भः; तस्मात्—

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

नियतं वर्णविभागेनाश्रम[५]विभागेन च शास्त्रेण नियन्त्रितं कर्म तां तां क्रियां कुरु अनुतिष्ठ[६], मा कदाचन त्याक्षीः; यतोऽकर्मणः कर्माभावात् क्रियात्यागात् कर्म विहितकर्मानुष्ठानं ज्यायः श्रेष्ठम्, यतः केषांचिदेव कर्मणामनारम्भे[७] कर्माभावभ्रमो न सिद्धिहेतुः, क्लेशानामनुच्छेदात् । यथोक्तेन समाधिना त्वनुष्ठीयमानं व्युत्थानहेतुषु[८] विषयेषु सत्स्वपि क्लेशोन्मेषाभावाय पर्यवस्येत्[९] प्रशस्यतरम् । न च शरीरित्वे सति सर्वकर्माभाव उपपद्यते । यतस्तवाकर्मणः सर्वात्मना कर्मरहितस्य स्थाणुकल्पस्य शरीरयात्रापि देहवृत्तिरपि न प्रसिद्ध्येत् न घटेत[१०] । न च पानाशनशयनासनग[११]मनाकुञ्चनकण्डूयनादिक्रियाकलापमन्तरेण केनचिद्वर्तितुं शक्यम् ॥

---

१. BS[1]. This word is read after व्यापारेषु
२. BN[1] and BN[2] रूपेण
३. IO and BN[2] omit this word. BS[2] reads this word in the margin.
४. BN[1] and BN[2] योगसं
५. IO, BS[1] and BS[2] आश्रय
६. IO अवतिष्ठ
७. IO, BS[1] and BS[2] आरम्भे
८. IO, BS[1] and BS[2] बुद्ध्या न हेतुषु
९. BN[1] and BN[2] स्यति तत्प्रशस्य
१०. BN[1] and BN[2] घटते
११. BN[2] आगमन

इत्थं च कर्मणः सर्वथाभावानुपपत्तौ स्थितायां न सर्वं नाम कर्मानुष्ठीयमानं सिद्धये कल्पत इत्याह—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

यज्ञो यजनं मुख्यया वृत्त्या दैवतपूजनम् । दैवतमपि "यस्मिन् सर्वम्" इत्यादिश्लोकव्याख्यातस्वरूपः परमेश्वरः परमात्मैवैकं[1] तत्त्वमिहाभिप्रेतम् । तस्य पूजनमपि यथाप्रतिपादितविज्ञानपरिशीलनविशुद्धया संविदा स्वभावत्वेन परामर्शनलक्षणमाराधनम्, सोऽर्थः प्रयोजनं यस्य तादृशं यत्कर्म तस्मात्तथाविधात्कर्मणोऽन्यत्र तादृशं कर्म[2] वर्जयित्वान्यादृशं[3] कर्म कुर्वाणः सर्वोऽयं लोकः कर्मबन्धनो भवति कर्मशास्त्रचोदितमप्यनुष्ठानं बन्धनं संसारदायित्वात्पारतन्त्र्यहेतुर्यस्य स तथा, यथोक्तात्मतत्त्वज्ञानशून्यतया विधिवदनुष्ठीयमानं शास्त्रीयमपि[4] कर्म बन्धनायैव कल्पते । यथाप्रतिपादितविज्ञाननिष्ठतयानुष्ठीयमानं तु परमेश्वराराधनलक्षणमुख्ययागहेतुत्वात् परसिद्धिदं भवतीत्यर्थः । तथा च वक्ष्यति—

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य[5] सिद्धिं विन्दति मानवः ॥" इति,

---

१. IO omits एव
२. BS[2] reads कर्म...लोकः in the margin.
३. BN[1] यादृशं
४. IO omits शास्त्रीय...ष्ठीयमानं
५. All except IO तमेवार्च्य

यत एवं ततस्त्वं तदर्थं[1] तादृशस्य यज्ञस्य सम्पत्तये कर्म शास्त्रचोदितां क्रियां समाचर सम्यक् कुर्वित्यर्थः। कीदृशस्तस्य सम्यक्करणेऽधिकृत इति विशेषणमाह—मुक्तसङ्ग इति। मुक्तः असंकल्पात्परिहृतः[2] सङ्गो रागद्वेषादिदोषहेतुः विषयेषु निमज्जनं तदेकनिमग्नचित्तत्वं येन स तथाविधः सन्निति। अनेन मुमुक्षोस्तावत्कर्मापरित्यागः प्रतिपादितः॥

इदानीं कश्चित्प्रवृत्तिलक्षणधर्माधिकृतः, कश्चिन्निवृत्तिलक्षणधर्माधिकृत इति द्विविधं[3]शास्त्रोपदेशविषयभूते लोके न कस्यचिदपि कर्मपरित्याग उपपद्यते इति क्रमेण प्रतिपादयितुं प्रवृत्तिधर्माधिकृतस्यैव तावत् आगमोपन्यासपूर्वं[4] कर्मापरित्यागमुपपादयितुमाह—

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः[5]।**

प्रजाशब्देनात्र कर्मभूमिजन्मानः परिज्ञानरहिताः[6] स्वर्गादिभोगार्थिनो मनुष्या एव गृह्यन्ते, तेषामेव प्रक्रान्तप्रजापत्युपदेशविषयत्वोपपत्तेः। तेन प्रजापतिः परमेश्वरेच्छाकल्पितसर्ग[7]लक्षणकर्माधिकारो देवताविशेषः यथोक्ताः प्रजाः सहयज्ञाः यज्ञेन नानादेवतायजनात्मकेन विधिविशेषेण सह सार्धं सृष्ट्वा निर्माय उवाच उपदिदेश॥

---

१. IO, BN[1] and BN[2] omit तदर्थं
BS[2] notes it in the margin.
२. BN[1] हृतसङ्गः
३. BN[1] and BN[2] द्विविधा
४. IO पूर्वकं
५. BN[2] The other ardha also is read here.
६. All except BN[2] परज्ञान
७. BN[2] omits सर्ग

किमुवाचेत्याह—

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

इष्टान् कामान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

अनेन सह जन्मना यज्ञेन क्रियमाणेन यूयं प्रसविष्यध्वं प्रसवं सन्तानमवाप्स्यथ वृद्धिं गमिष्यथेत्यर्थः । प्रसविष्यध्वमिति प्रयोगश्छान्दसः । अन्यत्राप्येवं द्रष्टव्यः । एष च[1] युष्माकमनुष्ठीयमानः सन्निष्टकामधुग्भवतु, क्रियाफलत्वेनाभिमैतान्[2] कामान् स्वर्गादिभोगान् दुग्धान्पूरयतु । किमनेन कुर्म इत्याह—अनेन देवानिन्द्रप्रभृतीन्भावयत शास्त्रोपदिष्टेतिकर्तव्यताविशिष्टेन यज्ञेन[3] तर्पितान् सर्तृस्तृप्तिलक्षणां[4] सत्तां लम्भयत इत्यर्थः । [5]ते चैवं भवतीमिरिष्टत्वात्तृप्तास्सन्तो युष्मान् भावयन्तु वर्धन्यतु[6], नरकतिर्यक्त्वादिपतनलक्षणादभावादुत्तारयन्तु वा । एवमन्योन्यभावनपराः सन्तः परं श्रेयो यथाभिमतमभ्युदयमवाप्स्यथ लप्स्यध्वम् । यस्माद्यज्ञेन यागेन भाविताः सन्तो देवाः इष्टानभिप्रेतान्[7] कामान् भोगान् युष्मभ्यं दास्यन्ति प्रतिपादयिष्यन्ति । एवं तैर्देवैः दत्तान् भोगान् येभ्यो देवेभ्यो

---

१. BN² omits च
२. IO भिमतः स्वर्गादिभोगान् पूरयतु
३. BN¹ and BS² omit यज्ञेन
४. BN¹ सन्तस्तृप्ति
५. BS²...वाच्यद्भिरिष्ट
६. BN¹ and BN² omit this word.
IO वर्तयन्तु
७. BN¹ and BN² अभिमतान्

यज्ञविधिना प्रदायानुपहृत्य यस्तान् कामानश्नाति, स स्तेनः चोरः एव देवद्रव्यापहारि प्रत्यवायेन युज्यते इत्यर्थः। एतदन्तं प्रजापतिवचनम् ॥

अतः परं भगवद्वाक्यम्—

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

इत्थं प्रजापतिनियममनतिक्रमन्तो यथोक्ताद्यज्ञादनुष्ठिताः शिष्टं विघससंज्ञमन्नमश्नन्तो भुञ्जानाः सर्वैः समस्तैर्नित्यादियज्ञाननुष्ठानसम्भवैः किल्बिषैः पापैर्मुच्यन्ते त्यज्यन्ते, न ते स्तेना भवन्तीत्यर्थः। ते[10] पुनः पापाः पातकिनोऽघं पापमेव भुञ्जते, ये आत्मकारणात् स्वहेतोः, न तु देवाद्यर्थम्, पचन्ति पक्तिं साधयन्ति। ते[12] त्यक्तशास्त्रीयक्रियाः सन्तो निरयमेव प्राप्नुवन्तीत्यर्थः ॥

यस्मात्सर्वमेतदक्षरसंज्ञातपरस्माद्ब्रह्मणः प्रवृत्तमनतिक्रमणीयमेवेति क्रममाह—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

---

१. BN[1] and BN[2] यथाविधिनानुप्रहृत्य
IO यज्ञिविधिनानुप्रहृत्य
२. BS[2] प्रदाय is written in a different hand at a later stage.
३. BN[1] चौर एव
४. BS[1] omits इत्यर्थः
५. BS[2] भुञ्जते...किल्बिषैः is written in the margin.
BN[1] and BN[2] भुञ्जन्ते
६. BN[2] एवं
७. BS[2] भुञ्जानानाः
८. IO omits समस्तैः...संभवैः
९. IO omits this word.
१०. IO and BS[1] न पुनः
११. BS[1], BN[1] and BN[2] भुञ्जन्ते
१२. IO, BN[1] and BN[2] omit ते BS[2]. ते is written in a later hand.

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

अन्नात्प्राणसन्धारणहेतोरोदनादेरभ्यवहार्याद्[1]भूतानि सर्वप्राणभृतो भवन्ति सत्तां लभन्ते; प्राणवृत्तिनिबन्धनं हि भूतानां जीवितम् ; अन्ननिबन्धना च[2] प्राणवृत्तिः; तदेवंविधस्यान्नस्य पर्जन्यान्मेघात्सम्भवः ; स चैवंविधः—पर्जन्यो यज्ञात् सोमार्काग्नीन्द्रादिदेवतात्मका[3]द्विधिविशेषाद्भवति ; यज्ञे[4] हि तर्पिता देवता व्रीह्यादिसम्पत्तये पर्जन्यं नियुञ्जते, स च काले वर्षादिना व्रीहीन्[5] सम्पादयति । यथोक्तम्—

"अग्नौ प्रा[6]स्ताहुतिः सम्यगादित्यमुपतिष्ठते[7] ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति ।

ईदृशश्च यज्ञः कर्मसमुद्भवः कर्मणो विशिष्टेतिकर्तव्यतारूपाद्विधानात् सम्भवो यस्य स[8] तथाविधः । तच्च ईदृशं कर्म ब्रह्मोद्भवं ब्रह्मणः शास्त्ररूपाद्भवो यस्य तत्तथाविधम् । अपरेण शब्दात्मकेन वेदादिशास्त्ररूपेण ब्रह्मणा यज्ञसम्पादनसाधनं कर्मोपदिश्यते, तच्चेत्थंभूतं शब्दात्मकं ब्रह्म, अक्षरसमुद्भ[9]वं न क्षरति सञ्चलति न स्वरूपाच्च्यवत इत्यक्षरम्, परं ब्रह्म प[10]रमकारणम् । तस्मादुद्भवो यस्य

---

१. BN[1] and BN[2] हारात्
२. BN[1], BN[2] and BS[2] हि
३. BS, BN[1] and BN[2] त्मिकात्
४. BN[1] and BN[2] यज्ञेन
५. BN[1] व्रीह्यादीन्
६. BS[1] and BS[2] प्राप्ता-
७. BS[1], BN[1] and BN[2] उपतिष्ठति
BS[2] notes this as an alternative reading.
८. BS[1] and IO omit स:
९. BS[2] संभवं is noted as an alternative reading.
१०. IO omits परम...ब्रह्मणः This passage is found in the margin in BS[2].

तत्तादृशम्। परस्माद्धि[1] ब्रह्मणः परमकारणात्स्वरूपमजहत एव शास्त्रं वस्तुस्थित्या चित्स्वरूपतामव्यभिचरत्सूर्यादिव प्रकाशो व्यपदेशमात्रभिन्नस्वरूपं प्रसरति। अत एव तदपि[3] ब्रह्मशब्देनोक्तम्। यत एवंविधेयं प्रक्रिया प्रवृत्ता, ततः परं ब्रह्म सर्वगतत्वेन समस्तवस्तुव्यापकत्वेन व्यवस्थितं सन्नित्यं सदैव यथोक्तस्वरूपे यज्ञे प्रतिष्ठितम्। तदर्थमेव प्रसृतम्, तस्यार्थस्य किल यज्ञे प्रतिष्ठा[4] स्थितिः॥

यत एवमतः—

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥ १६॥**

एवं यथोक्तेन परब्रह्मस्वरूपेण जगत्क्रीडास्थितये प्रवर्तितं प्रवृत्तिलक्षण-धर्मनिष्ठतया आविष्कृतं चक्रं शास्त्रादिपदार्थसमूहं य इह लोके नानुवर्तयति स्वयं यथाशास्त्रमननुवर्तमानो[5]ऽन्यानपि जनान्नानुष्ठापयति[6], स तादृशः परमेश्वरप्रवर्तित-प्रक्रियाव्युत्थापकत्वादघायुः अघाय[7] पापायैवायुर्जीवितं यस्य स तादृशः सन् मोघं जीवति; तादृशस्य हि तत्त्वज्ञानशून्यत्वादपवर्गलक्षणोत्तमफलाभावादीश्वरव्यवस्था-[8]पितनियमातिक्रमाच्च[9] स्वर्गादिभोगलक्षणावरफलाभावादपि निष्फलमेव जीवितम्॥

---

१. BN[1] and BN[2] omit हि
२. IO ताव्यभि
३. IO एतदपि
४. IO, BS[1] and BS[2] प्रतिष्ठिता
५. BN[1] and BN[2] अनुवर्त
६. BN[1] and BN[2] जनाननुष्ठा.
७. All except BS[1] omit अघाय
८. IO omits ईश्वर...भावात् BS[2] has this passage in the margin.
९. IO क्रमाश्च

एवं प्रवृत्तिलक्षणधर्माधिकृतस्योपदेश्यस्य[1] संसारिणः शास्त्रोक्तकर्मपरिहारानुपपत्तिं प्रतिपाद्य, इदानीं निवृत्तिलक्षणधर्मानुष्ठानप्रतिष्ठितबुद्धेरपि मुमुक्षोस्तां प्रतिपादयितुमाह—

यश्चात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति[2] पूरुषः ॥ १९ ॥

इह सर्वस्य कस्यचिज्जन्तोरप्राप्तं सुखं[3] प्राप्तुमिच्छतस्तत्साधनभूते शब्दादौ विषये रतिः रागोऽभिलाषो जायते; ततः प्रयत्नविशेषेण तस्मिन् प्राप्ते सति तृप्तिः संपूर्णेच्छता ; ततः सन्तोषोऽभिकाङ्क्षानिवृत्तिरित्येते रतितृप्तिसन्तोषाः सदा सन्निहिते निरुत्तरानन्दनिर्भरे स्वात्मन्येव[4] प्रतिष्ठिताः ; तस्य तद्व्यतिरिक्तप्रापणीयवस्त्वन्तरनिरपेक्षणीयस्याप्राप्तस्वार्थ[5]साधनभूतं कार्यं करणीयं न विद्यते न सम्भवति, यतः सदा कृतकृत्यत्वात्तस्य[6] नैव कश्चित्कृतेन प्रागकृतत्वादुपादेयतयेदानीं[7]निर्वर्ति-

१. BN[1] and BN[2] उपदेशस्य
२. BS[1], BN[1] and BN[2] परं प्राप्नोति BS[2] notes परमाप्नीति as an alternative reading.
३. BS[1] omits सुखं
४. All except BS[1] omit च
५. All except BS[1] सार्थ
६. IO adds एव
७. BS[2] निवर्तितेन

तेनार्थः प्रयोजनम्; नाप्यकृतेन हेयत्वात्परिहृतेन कश्चिदर्थः प्रयोजनम्; अत एवा-स्यैवंविधस्य स्वात्मप्रतिष्ठितबुद्धेर्योगिनः सर्वभूतेषु समस्तेषु स्थावरेषु जङ्गमेषु च सत्त्वेषु मध्ये न कश्चिदर्थव्यपाश्रयः अर्थस्य प्राप्यस्य वस्तुनो व्यपाश्रय आलम्बनम्। इदमत्र तात्पर्यम्—प्राक्प्रतिपादितस्थितबुद्धित्वदशामधिरूढस्य योगिनः फललिप्सया 'ममैवेदम्' इत्यसाधारणतया कार्यं साध्यं वस्तु न किंचन विद्यते, सर्ववर्णाश्रमसाधा-रणं च शास्त्रचोदितं कार्यं तत्तन्नियतकरणीयं प्रतिपादितविज्ञाननिष्ठस्य विद्यत एव। यत एवं तस्मात्कारणान्मुमुक्षुः सन् स्वं कार्यं कर्म शास्त्रविहितत्वादवश्यानुष्ठेयं युद्धादिव्यापारम्, असक्तः क्षणिकसुखलवसाधनभूतेषु विषयेषु अनिमग्नचित्त-वृत्तिः सन् समाचर, सम्यग्यथाप्रतिपादितात्मतत्त्वप्रतिष्ठितबुद्धित्वे मनागप्यप्रमत्त-तया चर अनुतिष्ठ; यस्मात्पुरुषो मुमुक्षुः संसारासक्तो मुक्तसङ्गः सच्छास्त्रनियन्त्रितं कर्माचरन् कुर्वन् परं प्रकृष्टमपवर्गलक्षणं प्राप्यं वस्त्वाप्नोति लभते, न तु कर्मत्यागात् सिद्धिः कस्यचिदस्ति, सर्वकर्मत्यागानुपपत्तेः प्रागेव प्रतिपादितत्वात्, कस्यचिद्वा कर्मणस्त्यागे सर्वकर्मत्यागाभिमानग्रहात्, रागद्वेषादिदोषैर्विर्भावस्य दुर्निवारत्वात्॥

अत्रैवोदाहरणमाह—

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः॥**

---

१. BN[1], BN[2] and BS[2] प्राप्तस्य
२. BS[1] स्थिर
३. IO साङ्ख्यं
४. IO omits कारणात्
५. IO and BS[2] त्वं
६. BN[1] अवशानु-
७. IO तस्मात्
८. BS[2] प्राप्यवस्त्वा-
९. IO omits कर्म...कस्यचिद्वा
BS[2] notes this passage in the margin.
BS[2] and BN[2] कर्मणः
१०. BN[1] and BN[2] omits चिद्वा
११. IO, BS[1] and BS[2] द्वेषदोष

इह लोके जनकादयो राजर्षयः श्रुतिस्मृतीतिहासपुराणादिप्रसिद्धाः कर्मणैव स्ववर्णाश्रमनियतेन क्रियाविशेषेण प्रजापालनादिना संसिद्धिं निरुत्तरपुरुषार्थप्राप्तिलक्षणं फलमास्थिताः स्वीकृतवन्तः । तथा च मोक्षधर्मेषु—

"एकस्मिन्नप्यधिष्ठाने[1] संवादः श्रूयतामयम् ।
छत्रादिषु[2] च मुक्तस्य मुक्तायाश्च[3] त्रिदण्ड[4][कैः] ॥"

इत्युपक्रान्ते सुलभाजनकसंवादे जनकवाक्यानि—

"सुखी सोऽहं[5]मवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥

मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महात्मभिः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च[6] कर्मणाम् ॥

ज्ञाननिष्ठां वदन्त्येके[7] मोक्षशास्त्रविदो जनाः[8] ।
कर्मनिष्ठां तथैवान्ये यतयः[9] सूक्ष्मदर्शिनः ॥

प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना[10] ॥"

---

१. BN$^1$ and BN$^2$ अधिष्ठानं
२. BS$^1$ and BN$^1$ कर्त्रादिषु IO and BS$^2$ शूद्रादिषु
३. BN$^1$ and BN$^2$ मुक्तोयश्च
४. BS$^1$ त्रिदण्डके
५. IO, BS$^1$ and BS$^2$ मोऽहं
६. BS$^1$ सङ्गत्यागश्च
७. BN$^1$ and BN$^2$ वदन्त्येते
८. BN$^2$ जनः
९. BS$^1$ मुनयः
१०. IO महात्मनः

तृतीया[1] समुच्चयरूपेत्यर्थः । तथान्यत्र—

"आकिञ्चन्ये न मोक्षोऽस्ति कैञ्चन्ये नास्ति बन्धनम् ।
कैञ्चन्ये चेतरे[2]णैव[चैव]जन्तुर्ज्ञानेन[3] मुच्यते ॥" इति ॥

अथ तत्त्वविदोऽप्यन्यं कर्मपरित्या[4]गे हेतुमाह—

**लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥**

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

लोकशब्देन त्रिवर्गमात्रोपदेशविषयभूतो जनोऽत्र विवक्षितः । तस्य सङ्ग्रहः शास्त्रार्थानुष्ठातृलक्षण[5]स्वपक्षस्वीकारः ; तं वक्ष्यमाणहेतुनावश्यकरणीय[6]तया संपश्यन् सम्यग्बुद्ध्यमानस्त्वं शिष्ट[7]धुरामातिष्ठन् कर्तुं शास्त्रविहितानि कर्माण्या[8]चरितुमर्हसि । अतः श्रेष्ठः कुलविद्यावृत्तादिभिर्ज्यायान् जनो यद्यत्किंचित्कर्माचरत्यनुतिष्ठति, तत्तदेव नान्यत् । इतरो जनः स्वयं कार्याकार्यविवेकशून्यमतिर्लोकोऽनुतिष्ठति, य[9]तः स श्रेष्ठो जनो यद्वस्तु प्रमाणं कुरुते स्वयमनुष्ठानादुपपन्न[10]त्वेन व्यवस्थापयति तं लोकोऽनुवर्तते अनुसरति ॥

---

१. IO and BN² omit तृतीया This word is found in the margin in BS².
२. IO and BS² वेतरे-
३. BN¹ and BN² क्लेशेन This is noted as an alternative reading in BS².
४. BN¹ and BN² त्यागहेतुं
५. BS¹ and BN¹ लक्षणं
६. IO करणीया सं-
७. BN¹ and BN² शिष्टानुगमान् कर्तुं
IO शिष्टान्तरमाति
BS¹ शिष्ध्वरामाति
८. BS² कर्माणि चरि-
९. IO अतः
१०. BN² उपपन्नत्वे व्यव-

तस्मात्परमार्थज्ञानेनापि[1] लोकसङ्ग्रहार्थं शास्त्रचोदितं कर्म सर्वथानुष्ठेय-मित्यत्रात्मानमेवोदाहरणीकुर्वन्नाह[2]—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त[3] एव च कर्मणि ॥ २२ ॥**

हे पार्थ मम स्वार्थसाधनतया कर्तव्यं कार्यं न किंचिदस्ति, यस्मात्त्रिषु लोकेषु समस्ते जगत्यनवाप्तं[4] पूर्वमनासादितमिदानीमवाप्तव्यं स्वेच्छापूरणाय लब्धव्यं न किञ्चिदस्ति । अलब्धलाभार्थो[5] हि सर्वः कश्चित् स्वकार्यमारभते, मम तु यथाप्रति-पादिततत्त्वज्ञाननिष्ठाप्रतिष्ठितप्रज्ञस्य न किञ्चित्प्राप्यमस्ति; अतश्च तादृशोऽपि सन् लोकवत् कर्मणि[6] शास्त्रविहिते प्रवर्ते[7] सततमुद्युक्तो भवामि । अनेन—

" यस्त्वात्मरतिरेव स्यात् तस्य कार्यं न विद्यते "

इत्युपक्रम्य,

" तस्मादसक्तः सततं कार्यं कर्म समाचर "

इति यत्प्रागुक्तं तदेकानुष्ठातृपुरुषविषयमेवेति निःसंशयतया प्रतिपादितवान् ॥

अथ तत्त्वज्ञोऽपि सन् भगवान् लोकवत् कर्मणि प्रवर्तत इत्याह—

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तेरन्[8] मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

---

१. BS² ज्ञानेऽपि नापि
२. BS¹ and IO हरणं कुर्वन्
३. IO वर्त एव च
४. IO and BN² अनाप्तं
५. BN¹ and BN² लाभो हि
६. BS¹ and IO कर्माणि
७. BN¹ and BN² प्रवर्तते
८. IO and BS² अनुवर्तन्ते

यद्यहं वर्णाश्रमोचितानि[1] कर्माण्यतन्द्रितः असञ्जातालस्यस्सन्[2] कदाचिदपि न वर्तेयं[3] न तिष्ठेयम्, तत्सर्व[4] एव मनुष्याः कर्मण्यधिकृता मानवाः प्रमाणभूतचरितस्य मम वर्त्म मार्गमाचारमनुवर्तेरन् अनुसरेयुः ॥

किंचात इत्याह[5]—

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**

**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

यद्यहं लोकवत् शास्त्रचोदितं कर्म नाचरेयम्, तदमी लोकाः समस्तानि भुवनानि संसारिपुरुषोचिततत्तत्स्वकर्मफलोपभोगाधिकरणभूतान्युत्सीदेयुः, उत्सादं विनाशं भजेयुः । कर्मनिबन्धना हि लोकानां स्थितिः । किंच तथाविधं कर्माकुर्वन् सङ्करस्य वर्णविभागमिश्रीभावस्य कर्ता प्रवर्तको भवेयम् । सर्वे हि पुरुषा मां शास्त्रीयं कर्माकुर्वाणमनुवर्तमानाः स्वं स्वं तत्तज्जातिविहितं कर्म यथेष्टमन्यजातिविहितत्वादिना[6] विरोधेनाप्याचरन्तः सङ्कीर्णवर्णतामाप्नुयुः । अतोऽहमेव वर्णसङ्करदोषस्य कर्ता स्याम् । किंचातः इमाः प्रजा एतान्[7] कर्मभूमिजन्मनः शास्त्रचोदितकर्माधिकृतान् सर्वान्[8] संसारिणः पुरुषानुपहन्याम्, उपघातेन विनाशेन योजयेयम् । एता हि प्रजाः यथाविहितं कर्मानाचरन्त्यः स्वर्गादिप्राप्तेरपेतानि[9][10] सर्वतस्तत्तज्ज्ञान[11][12]-

---

१. BS² चितकर्मणि
२. All except BS¹ omit सन्
३. BN² वर्तेय
४. IO सर्वमेव
५. BS¹ omits इति
६. IO त्वादिविरो
७. All except BS¹ एताः
८. IO omits सर्वान्
९. IO कर्म नाच-
१०. BN² अपता तत्त्वाज्ञ निसर्गतः तत्त-
११. IO सर्वतः
१२. BS² तत्त्वज्ञान

शून्यत्वात्कैवल्यलक्षणादुत्तमात्पुरुषार्थाद्दूरबहिष्कृताः नरतिर्यग्भावप्राप्तिलक्षणं विनाशमाप्नुयुः ॥

तदित्थं परमेश्वरेच्छापरिकल्पितजगत्क्रीडानियमव्युत्थापकत्वं[1] मयैवाचरितं भवेत्; अतः—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥

यथा येन प्रकारेणाविद्वांसो यथोक्तात्मतत्त्वज्ञानशून्यत्वान्मुख्यया[3] विद्वत्तया रहिताः पुरुषाः कर्मणि[2] क्षणिकसुखसाधनभूते यज्ञादिक्रियात्मके[4] व्यापारे सक्ताः तदेव परत्वेन मन्यमानास्तावन्मात्रपरिसमाप्तपुरुषार्थाः सन्तः कुर्वन्ति विहितानि कर्माण्याचरन्ति; तथैव तेन प्रकारेण सामान्यजनदुर्लक्ष्यस्वहृदयसंवेद्यतत्त्वज्ञाननिष्ठत्वात्तत्तादृशाभियोगरूपेण[7] विद्वान् परमार्थपण्डितः कुर्यात् कर्माण्याचरेत्। कीदृशः सन्? असक्तो निरुत्तरानन्दामृतास्वादसततपरितृप्तत्वाल्लोकवत् स्वर्गादिभोगविषयेन तत्तत्कर्मफलसङ्गेन[8] रहितः; किमर्थमेवं कुर्यादिति हेतुगर्भं विशेषणमाह[9]—"चिकीर्षुर्लोकसङ्ग्रहम्"। लोकस्याबुधस्य[10] जनस्य सङ्ग्रहं पूर्वोक्तं चिकीर्षुः संपिपादयिषुः। विदितवेद्येन[11] हि विदुषा तत्त्वज्ञानोपदेशयोग्यताशून्यं लोकं नरकपातादिदुःखा-

---

१. IO त्थापकं
२. IO, BS[1] and BN[1] कर्माणि
३. BN[1] and BN[2] मुख्या विद्व-
४. BN[1] and BN[2] ज्ञातादिक्रिया
५. BS[1] दुर्लक्ष्यसुहृदय
६. BN[1] and BN[2] हृदयं
७. BS[1] तत्सदृशाभि
८. BS[1] फलसक्तेन
९. IO and BN[2] गर्भविशेषणं
१०. BS[2], BN[1] and BN[2] अबुद्धस्य
११. IO विदिते

दुज्जिहीर्षणा [र्षुणा] तथा कर्माचरणीयं यथा लोकस्तदनुवर्तमानः स्वकर्मानुष्ठानात् स्वर्गादेरपि फलान्न व्यपैति ॥

अयोग्यस्य तत्त्वज्ञानोपदेशो विनाशायैव पर्यवस्येदित्याह—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान् युक्तः³ समाचरन् ॥ २६ ॥**

विद्वान् प्रबुद्धो युक्तो³ यथोक्तात्मज्ञानसहितः सन् सम्यग्यथाशास्त्रं जात्यादिनियतानि कर्माण्याचरन्ननुतिष्ठन्⁴। अज्ञानां स्वभावत एव संप्रति परमेश्वरेच्छाननुगृहीतत्वादनाविर्भूतविवेकज्ञानानाम्, अत एव कर्मसु यज्ञादिसाधनभूतेषु भोगैश्वर्यप्रसक्तत्वादिना हेतुना सङ्गिनां तत्रैव सक्तानां बुद्धेः प्रज्ञाया⁵ भेदं तादृशात्सङ्गात्प्रच्यावनं नोत्पादयेत्। ते ह्यज्ञाः सन्तो यदि तत्त्वज्ञाने कर्मत्यागमात्रेण⁶ व्युत्पाद्यन्ते, तत्तेषामज्ञत्वादेव तत्त्वज्ञाने प्रतिष्ठामलभमानानां स्वर्गादिहेतोश्च कर्मसङ्गात्प्रच्युतेः बुद्धिभेदं प्राप्ता सत्युभयभ्रंशायैव पर्यवस्येत्; अतस्तांस्तथाविधानज्ञान् सर्वाणि कर्माणि येषु ⁷हि ते⁸ गृहीतासङ्गाः तानि जोषयेत्, प्रीत्या सेवयेत्, स्वयं तदनुष्ठानप्रख्यापनेन ॥

---

१. IO, BS² and BN² उज्जिहीर्षता
२. BS² सक्तः
३. IO omits this word.
४. IO adds चरन्ननातिष्ठन्
५. IO adds प्रज्ञानां बुद्धेः
६. IO, BS² and BN² मार्गेण
७. BS² omits this word.
८. BN¹ and BN² omit this word.

इत्थं परमेश्वरेच्छानियमितजगद्व्यवस्थाव्युत्थानविच्छेदाय[1] स्वस्मिन् स्वस्मिन् कर्मणि लोकमबुद्धं प्रवर्तयितुं प्रबुद्धस्यापि लोकवद्विहितानां कर्मणामवश्यमनुष्ठानमुपपादितम्[2]। अतश्च प्रबुद्धाप्रबुद्धयोस्तुल्यमेव कर्तृत्वम्, तुल्यान्येव च[3] कर्माणि। असक्तत्वकृतस्तु फलभेद इति स्थिते तुल्ये कर्तृत्वे[4] तुल्येषु च कर्मसु क्रियमाणेषु कथं फलभेद इत्यनवधारितप्रबुद्धाप्रबुद्धविशेषस्यार्जुनस्य संशयमाशङ्कमानः संसारिणो योगिनश्च समानेऽपि व्यवहारे यथा फलभेदोपपत्तिस्तथा विभज्य[5] विशेषं प्रतिपादयितुमाह—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणा गुणार्थे वर्तन्त इति मत्त्वा न सज्जते ॥ २८ ॥

इह यत्किंचिच्छारीरं वाचिकं[6] मानसं वा[7] शास्त्रोक्तमशास्त्रोक्तं वा कर्म येन केनचित्कर्त्रा क्रियते, तत्र नासौ केवलः कारणम्, किं त्वधिष्ठानम्। तथा कर्तेत्यादिना[8] वक्ष्यमाणाः पञ्च पदार्थाः कारणम्। ते[9] सर्व एव सत्त्वरजस्तमोलक्षणप्राकृतगुणमया एवेति वक्ष्यति[10]। अतः प्रकृतेः सम्बन्धिभिर्गुणैः क्रियमाणानि सर्वाणि कर्माणि[11]

१. IO व्यस्थानुच्छेदाय
२. BN[1] and BN[2] omit अवश्यं BS[2] notes a similar reading in the margin.
३. IO omits च
४. BN[1] and BN[2] कर्तृत्वेन BS[2] कर्तृत्व
५. BS[2] adds तयोः
६. BN[2] मानसं वाचिकं
७. BN[2] omits वा
८. BN[2] कर्त्रेत्यादि वक्ष्य IO कर्तेत्यादि वक्ष्य
९. BS[1] adds च
१०. BS[2] विवक्ष्यति
११. BN[2] omits this word.

व्यवस्थितानि। कथम्? भागशः। सात्त्विकं¹मधिष्ठानादिकारणं सात्त्विकं कर्मारभते, रजोमयं राजसम्, तमोमयं तामसमिति विभागेन। इत्थं कर्तुरपि "मुक्तसङ्गोऽनहं²-वादी" इत्यादिना त्रैगुण्यस्य वक्ष्यमाणत्वाद्गुणानामेव कर्तृत्वे पर्यवसिते³ अहङ्कारेण शरीरादिष्वात्मप्रत्ययेन विमूढात्मा प्रबुद्धस्वभावः संसारी अहमेव केवलः कर्तेत्य⁴-धिष्ठानादिकारणान्तरनिरपेक्षं कर्तृत्वं⁵ शरीरादिरूपे कृत्रिमे स्वात्मन्यारोपयति। स च गुणपरतन्त्रे तादृश्यात्मन्य⁶हङ्कारमारोपयन् गुणेष्वेव सक्तः न कदाचित् संसारबन्ध-हेतुभ्यो विमुच्यते। गुणविभागस्य कर्म⁷विभागस्य च तत्त्ववित् परमार्थवेदी योगी। पुनः गुणाः सत्त्वादयः गुणार्थे स्वप्रयोजने देहेन्द्रियविषयार्थात्मके⁸ वर्तन्ते, तत्रैव तिष्ठन्ति, नात्मनः सर्वदा स्वतन्त्रसुप्रसन्नसंविन्मात्रस्वभावस्य स्वोपरागमर्पयितुं प्रभवन्तीति सर्वदा सत्यात्मप्रतिष्ठतया न गुणेषु न कर्मसु⁹ सज्जति, अहङ्कार-ममकारौ तेषु न करोतीत्यर्थः॥

अथ कीदृशो गुणानां विभागः, कीदृशश्च कर्मणाम्¹⁰, किं चात्र तत्त्वम्—इति व्याख्यायते। इह परमेश्वरेणाचिन्त्यस्वेच्छाविलसितस्वभावा-त्मकसकलजगत्प्रपञ्चकारणत्वेनावभासितया पारमार्थिकात्मतत्त्वाभे¹¹दाख्यातिमात्र-शरीरतया अत एव भिन्नार्थविषयज्ञानक्रियानियमात्मकसत्त्वादिगुणमय्या प्रकृत्या-ख्यया अनाद्यविद्याप्रबन्धसम्बद्धा¹²नामीश्वरेच्छयैव अन्योन्यभेदेनावभासमानानां

---

१. BS[1] सात्विकाधि-
२. BN[1] नाहंवादि
३. IO and BN[1] पर्यवस्थिते
४. BN[2] कर्त्रेत्यधि
५. IO omits this word.
६. BS[2] and BN[2] तादृशात्मनि
७. IO and BN[2] कर्माविभागस्य
८. BN[2] विषयाध्यात्मके
९. BN[1] adds न
१०. BN[1] adds विभागः
११. BN[1] omits अभेद
१२. BS[1] संबुद्धानां

जीवानां गुणैरेवारब्धतनुकरणभुवनभोगादिकलापत्वात्सर्वमेव गुणाधीनमिति प्रायेण गुणा एव तेषां कर्तारः—इत्ययं क्षेत्रज्ञविषयत्वेन गुणविभागः; तथाविधाश्च ते जीवा यानि कर्माण्यारभन्ते, ते[1] तेषु विषयसुखतृष्णा[2]तुरतया सज्जन्ति, तद्बा[3]धकभूतेष्वन्येषु द्वेषेण[4] पराभवन्तीत्येतावन्मात्रनियतचित्तवृत्तित्वाद्विमूढा भवन्तीति तद्विषयत्वेन सर्वकर्माणि रागद्वेषमोहात्मकत्वात् संसारबन्धकारणतया पर्यवस्यन्तीत्ययमेषां कर्मविभागः। सत्यात्मतत्त्वप्रतिष्ठितबुद्धीनां तु [5]योगिनामन्यथा गुणानां कर्मणां च विभागः। तथा हि—ते गुणाः सत्त्वादयो गुणानामेवार्थे प्रयोजने संसा[6]रिविषयत्वेन जगत्प्रपञ्चविरचनारूपेण वर्तन्ते, नास्मद्विषयत्वेनैषां सर्वदानस्तमितसंवित्प्रकाशमात्रव्यतिरिक्तं किंचिद्रूपान्तरं न[7] भवतीति मन्वाना नित्यनिरतिशयनिजानन्दनवसुधास्वादनैक[8]निरताः कथं तेषु रागादिविष[9]मविषयरसमयेषु मज्जन्तीति योगिविषयत्वेन गुणा[10] न गुणत्वेन स्फुरन्तीति अयं योगिविषयो गुणविभागः। एवंविधाश्चैते यानि कर्माणि आरभन्ते, तानि क्रियमाणान्येव यथोक्तज्ञानाग्निदग्धत्वान्न

---

१. BS[2] omits this word.

२. IO and BN[1] तृष्णान्तरतया
BS[2] notes तृष्णान्तरया as an alternative reading.

३. BS[1] तद्वाचक

४. BN[2] and BN[2] अद्वेषेण

५. IO योगिनामात्मगुणानां

६. BS[2] and BN[2] संसार

७. IO, BN[1] and BN[2] omit this word.
BS[2] notes it in the margin.

८. IO नैकरताः

९. IO विषयमविष
BN[1] and BN[2] विषयरस

१०. IO गुणानु गुणा-

संसारकार[1]णता[2]मापादयितुमेषां प्रभवन्तीत्ययं योगिविषयः कर्मविभागः। तादृशो हि योगी गुणातीत उच्यते, यद्वक्ष्यति—

"न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ।
उदासीनवदासीनो गुणातीतः स उच्यते ॥"

तत्त्वमप्येतयोर्गुणकर्मविभागयोरेतद्व्याख्यानेनैव व्याख्यातम्, इति ॥

प्रबुद्धाप्रबुद्धयोस्तुल्येषु कर्मसु क्रियमाणेषु मोक्षसंसार[3]बन्धलक्षणं फलभेदमुपपाद्य इदानीं प्रबुद्धस्य यथाप्रतिपादितज्ञानकर्मसमुच्चयानुष्ठानपरिनिष्ठितबुद्धेर्लोकविषयमात्मविषयं च[4] व्यवहारं नियमयितुमाह—

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

[5]प्रकृतेरुक्तलक्षणायाः सम्बन्धिभिर्गुणैः सत्त्वादिभिरनादिसम्बन्धपरिचितत्वाद्वासनारूपतया शरीराद्यारम्भकतया च व्यतिरिक्तत्वेनावस्थितैः संमूढाः तादृशगुणमया एव शरीरादावात्मप्रत्ययलक्षणं संमोहमापन्नाः संसारिणो गुणमयेष्वेव कर्मसु स्वर्गिमर्त्यभावतिर्यक्त्वादिफलहेतुषु सज्जन्ते, विवेकजज्ञानाभावात्तान्येव परत्वे[6]न

---

१. IO omits णतामापा...सम्यक् समर्प्य in the commentary on verse 30
२. BN[2] तामासादयितुं
३. BN[2] adds लक्षण
४. BN[1] and BN[2] omit च
५. BN[1] and BN[2] प्रकृतेर्गुणलक्षणायाः संबन्धिनि गुणैः
६. BN[2] परतत्वेन

मन्यमानाः तेषु निमज्जन्ति । अतस्तानकृत्स्नविदो गुणपरिस्पन्दपरिमितीकृतत्वात्[1] सर्वं[2] हेयोपादेयरूपं ज्ञेयजातं[3] अजानानान् अत एव मन्दानल्पधियः कृत्स्नवित् समस्तज्ञेय-तत्त्ववेदी न विचालयेत्, यत्रैव गुणात्मके कर्मणि फले च[4] आसक्तस्ततो न प्रच्यावयेत्, तेषां बुद्धिद्वैधपरिहाराय सर्वं विहितं कर्मानुतिष्ठेदिति ॥

लोकसङ्ग्रहापेक्षयानुष्ठीयमानमपि कर्म योगिनो यथा कैवल्यायैव पर्य-वस्यति, तथा तस्य प्रागुक्तमपि ज्ञाननिष्ठत्वेन कर्मानुष्ठानमर्जुनमुखेन निश्चि-न्वन्नाह—

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा[5] ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

सर्वाणि शास्त्रविहितानि यज्ञदानतपःप्रभृतीनि[6] कर्माणि अध्यात्मचेतसा यथाप्रतिपादितस्वरूपात्म[7]निष्ठेन मनसा मयि परमकारणे परमगुरौ संन्यस्य सम्यक् समर्प्य एक एव परमेश्वरः प्रथमाध्याये[8] प्रतिपादितस्वरूपः सर्वप्राणिभिः क्रियमाणानां सर्वकर्मणां कर्ता, स्वेच्छामात्रेण स्वशक्तिविभवरूपाणां निर्माता, न तद्व्यतिरेकेण

---

१. BS² and BN² कृतज्ञानत्वात्
२. BN² सर्वहेयो
३. BN¹ and BN² omit जातं
४. BS² and BN² असक्ताः
५. BS¹ and BN¹ चेतसः
६. BS², BN¹ and BN² omit यज्ञ...तीनि
७. BN¹ and BN² प्रतिपादिताध्यात्मस्वरूपा
८. IO प्रथममेव प्रति

क्वचिदपि [1]कर्मत्वं पारमार्थिकमस्ति ; गुणपरतन्त्रतया तु देहादौ तदभिमानो मायाविलसित एव—इत्यनया भावनया संन्यासविधिं संपाद्य; अत एव [2]शंसनीयवस्तुविरहान्निराशीः आशीर्भ्यः प्रार्थनाभ्यो निष्क्रान्तः ; अत एव सर्वभावेषु परिग्रहाभावान्निर्ममः—ममेदमिति संसारिपुरुषोचितायाः प्रतिपत्तेर्निष्क्रान्तो भूत्वा ; विगतज्वरः यथोक्तविज्ञा[3]नामृतावगाहनान्निवृत्तसन्देहादिसमस्तसन्तापः सन् युध्यस्व, [4]समरात्मकमवसरोपनतमवश्यकार्यं स्वकर्मानुतिष्ठ—इत्येतावता ग्रन्थेन प्रायः परिसमाप्तोऽयं ज्ञानकर्मसमुच्चयानुष्ठानात्मक उपदेशसारः ॥

यतः प्रथमे[5] तावत् [6]प्रस्तावनास्य प्रतिपादित; द्वितीये विज्ञानस्वरूपं परिघटितम् ; तृतीये तत्संस्कृतस्य कर्मणोऽवश्यानुष्ठेयता—इति मन्यमानो भगवानस्य परमरहस्यभूतस्य स्वमतस्य प्रभावप्रतिपादनार्थं बोधाबोधयोः फलमाह—

**ये मे मतमिदं नित्यमनुवर्तन्ति [7]मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ ३१ ॥**
**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विनष्टान्विद्धयचेतसः ॥ ३२ ॥**

इत्थं मयोपन्यस्तं मतं मदीयं सर्वशास्त्रसर्वस्वभूतमभिप्रायं नित्यं सर्वकालं ये मानवाः शास्त्राधिकृता मनुष्या अनुवर्तन्ति सम्यगवगम्यानुतिष्ठन्ति ते सर्व-

---

१. BN[1] and BN[2] कर्तृत्वं
२. IO, BN[1] and BS[2] आशंस
३. BS[1] नामृत एव गाह-
४. BN[1] and BN[2] संसारात्मकं
५. BS[2] adds अध्याये
६. IO प्रस्तुतावनास्य
७. IO omits मानवाः...नानुतिष्ठन्ति

किल्बिषैरविद्याप्रभवरागद्वेषादिक्लेशमूलैर्घोरसंसारदुःखदायिभिः कुकर्माचरणजनितैः किल्बिषैः पापैर्मुच्यन्ते, न पुनर्बध्यन्ते[1]। कीदृशाः सन्तः? श्रद्धावन्तो यथाप्रतिपादितमन्मतप्ररूढनिर्विकल्पप्रतिपत्तिजनितयथोक्तफलसंभावनात्मिकया श्रद्धया युक्ताः। अत एव एतन्मतविषयामसूयामतत्त्वज्ञजनोचितामकुर्वन्तः; ये पुनरेतदेवंविधं मन्मतमभ्यसूयन्तो मोहतिमिरतिरस्कृतसम्यग्ज्ञानत्वाद्दोषाधिरूपणादिना[2] विगर्हन्ते, नानुतिष्ठन्ति, नाचरन्ति, तान् सर्वेषु समस्तेषु हेयोपादेयनिश्चयविषयेषु ज्ञानेषु शास्त्ररूपेषु विमूढान् विपर्ययप्रत्ययान् विशेषेण[3] मूढान् विचित्तान् विनष्टान् विद्धि, भोगापवर्गलक्षणादुभयतोऽपि फलात् प्रच्युतान् सतो दुर्गतिप्राप्तिलक्षणं विनाशं प्राप्तान् जानीहि, यतस्तेषां चेतोऽन्तःकरणमसम्यग्दर्शित्वात्सदपि नास्त्येव ॥

इदानीमुक्तमेवार्थं सुदृढप्रतिपत्तये विनेयोपकाराय[4] उक्तिभेदैर्नानारूपैः प्रतिपादयन् कर्मणां त्यागानुपपत्तिमेव द्रढयितुमाह—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

इह सर्वः कश्चिद्देहवाननादिप्रबन्धप्रवृत्तया प्रकृत्या सम्बद्धो यतः सर्वस्य शरीरेन्द्रियविषयादिकं सर्वमेव त्रिगुणम्, अतो ज्ञानवानप्याविर्भूतदेहदेहिविवेकप्रज्ञोऽपि पुरुषः स्वस्याः तेन तेन प्रकारेण शरीराद्यारम्भकतया परिणतत्वादात्मीयत्वमापन्नायाः प्रकृतेरीश्वरेच्छया जगत्कारणभावेनोद्भाविताया गुणत्रयात्मिकाया

---

१. BS[1] बुध्यन्ते
२. BN[2] ज्ञानत्वादोषाधिरोपणा-
३. BN[1] विशेषण
४. BN[2] विनयोप

अविद्यायाः सदृशमनुरूपं चेष्टते व्यवहरति । किमनेनोक्तं भवति? दृष्टतत्त्वोऽपि प्रकृत्यारब्धशरीरादित्वान्मनोवाक्कायैर्यत्किंचित्कर्माचरति तत् त्रिगुणमेवोपपद्यते । तथाविधं च तत्कर्म ज्ञानवताप्यशक्यपरिहारमिति प्रागपि प्रतिपादितम् । इत्थं सर्वभूतानि प्रकृतिं यान्ति सर्वथा तामेवाश्रयन्ते, न तु तद्व्यतिरिक्तत्वेन श्वसितुं स्पन्दितुं वाप्युत्सहन्ते; ततो निग्रहः—नेदं स्वजातिविहितं कर्माहं करिष्यामीति नियमः—किं करिष्यतीति प्राक्प्रतिपादितप्रकारेण सर्वकर्मप्रतिषेधस्याशक्यत्वाद-किञ्चित्कर एव भविष्यति । यदि वा निग्रहोऽपि कर्मैव; अतश्च हानोपादान-निबन्धनत्वाद्रागद्वेषानुविद्धं सत् गुणात्मकत्वात्प्रकृतमेव संपद्यते, इत्येवमप्यकिञ्चित्करो निग्रहः ॥

इत्थमपरिहार्ये कर्मणि ज्ञानवान्मुमुक्षुः किं कुर्यादित्याह—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

यो यस्येन्द्रियस्यार्थो विषयः श्रोत्रादेः शब्दादिः, तत्र तत्रार्थे रागद्वेषौ व्यवस्थितौ; यदा हि शब्दादिविषयं सुखसाधनत्वेन श्रोत्रादिनेन्द्रियेण पुमानुपादत्ते, तदा तस्य तस्मिन् रागो व्यवतिष्ठते; यदा तु दुःखकारणत्वेन तमेव विषयं हेय-

१. BN[2] प्रकृतारब्ध
२. BN[1] and BN[2] यत्कर्म
३. IO and BS[1] अशक्तपरि
४. BS[2]. From the way in which it is written, it is possible that it were an alternative reading.
५. BN[1] and BN[2] नाप्युत्स- BS[1] वाप्युत्पद्यन्ते
६. BS[2] प्राकृतमेव
७. BN[2] इन्द्रियार्थौ

त्वेन प्रतिपद्यते, तदा तस्मिन्निन्द्रियेण परिह्रियमाणे द्वेषोऽस्य व्यवतिष्ठते—इति सर्वस्मिन् विषादे रागद्वेषौ[1] यौ व्यवस्थितौ ज्ञानवान् आविर्भूतविवेकजज्ञानः तयोर्वशं विधेयतामज्ञवन्न गच्छेत्; यतोऽस्य ज्ञानवतस्तौ रागद्वेषौ परिपन्थिनौ विरोधिनौ शत्रू ततस्तावेव सर्वोद्योगेन[2] परिहार्यौ, न तु विषयाः; न हि तयोरपरिजितयोर्विषयपराजयः कृतो भवति। तौ हि यथोक्तज्ञानासिना यावन्न क्षतविक्षतत्वमापादितौ तावत् परिवर्जितेऽपि विषये अन्तर्विजृम्भमाणौ पुरुषं वशीकर्तुं प्रभवत एव ॥

तदेवं[3]गुणोपपत्तिवशात्सर्वस्मिन् कर्मणि प्रबुद्धस्याप्रबुद्धस्य वा सर्वस्य कस्यचिदशक्यप्रतिषेधे स्थिते[4] स्वकर्मानुष्ठानलक्षणो धर्मः प्रबुद्धेनाप्याचरणीय इत्याह—

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥

यो यस्य वर्णाश्रमनैयत्येन शास्त्रविहितो धर्मः सदाचारः स्वत्वेन व्यवस्थितः स कुतश्चित्कारणान्मुख्येन कल्पेनाननुष्ठीयमानत्वाद्[5]विगुणोऽपि स्वैर्गुणैर्विरहितोऽपि सन् स्वनुष्ठितात्सुष्ठु संपूर्णसंविधानतया[6]नुष्ठितादाचरितात् परधर्मात् विजा-

१. IO, BS² and BN² यौ रागद्वेषौ

२. BS² सर्वत्यागेन is an alternative reading.

३. BN² सदेवं

४. BN¹ and BN² add अस्य

५. BS² अननुष्ठान

६. IO संपूर्णविधान

तीयसमाचारात् श्रेयान् प्रशस्यतरः, शास्त्रविहितातिक्रमविहितान[1]नुष्ठानजप्रत्यवायदोषस्याभावात् । यत एवं स्वधर्मेऽनुष्ठीयमाने पारलौकिकशुभफलप्राप्तिः, अतस्तस्मिन् स्वधर्मे हि सति निधनं मरणमपि य[2]त्, तच्छ्रेयः प्रशस्यतरं तत्स्यात्; परसम्बन्धिनो धर्मात् स्वनुष्ठितात्सतः य उदयो राज्यलाभादिः, तस्मादपि, तस्य लोकान्तरे विरुद्धफलहेतुत्वात् ॥

एवमात्मज्ञाननिष्ठतया शास्त्रचोदितस्वकर्मानुष्ठानमपवर्गलक्षणसिद्धिहेतुरिति भगवत्प्रतिपादित[3]सकलप्रकरणसिद्धान्तं श्रुत्वा प्रतिपादितस्व[4]रूपस्यात्मनः पारतन्त्र्यमेवंविधमनुपपन्नं मन्यमानः **अर्जुन उवाच**—

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छमानोऽपि बलादाक्रम्यैव नियोजितः ॥ ३६ ॥**

अथैवं भगवता प्रतिपादितलक्षणोऽयमात्मा केन स्वामिनेव भृत्यः प्रयुक्तः प्रेरितस्सन् कुकर्माकर्मरूपं पापं दुर्गतिफलं किल्बिषमनिच्छन् [अनिच्छमानोऽपि] अनभिल[5]षन्नपि बलादाक्रम्य हठादिष्टविषयप्रवृत्तिं निवार्य नियोजितो व्यापारित एव चरत्यनुतिष्ठति ॥

तत्रोत्तरं भगवानुवाच—

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

---

१. BN² विहितानुष्ठान
२. All except BS¹ स्यात्
३. BS² प्रतिपादितं
४. BN² स्वधर्मस्य
५. BN¹ लाषन्नपि
BN² लष्यन्नपि

येन प्रयुक्तोऽयमुक्तस्वरूपानाद्यविद्यादिक्लेशपाशपरवशः पुरुषः पापमाचरति, स एष कामः परिणामविरसक्षणिकसुखलवसाधनभूतविषयोन्मुखः सङ्कल्पः । एष एव चेतनाचेतनरूपप्रतिपक्षप्रतिहन्यमानत्वात् क्रोधः; तदुपघातप्रवृत्तिहेतुर्द्वेषः संपद्यते; सोऽयमिच्छाद्वेषात्मको दोषो रजोगुणसमुद्भवः रजोगुणाद्विषयसुखाभिलाषात्मकरागद्वेषहेतोः प्रकृतिधर्मात्समुद्भवति । अत एव महाशनः उत्तरोत्तरविवर्धमानगर्वत्वा[1]दपर्यवसितमशनं विषया[2]हरणलक्षणो व्य[3]वहारो यस्य स तथा । ततश्च सर्वस्य तस्य भोग[4]स्य दुःखैकविपाकत्वान्महापाप्मा गुरुतरपातकमयः, दुर्गतिहेतुत्वात् । तदेवंविधमिह संसारे वैरिणं दुरुत्तरदारुणदुःखदायित्वादाततायिनं विद्धि जानीहि । तेन प्रयुक्तोऽयं पुरुषः पापमाचरति ॥

अ[5]थ तस्य वैतत्येन स्वरूपं जिज्ञासुः **अर्जुन उवाच—**

**भवत्येष कथं कृष्ण कथं चैव विवर्धते ।**
**किमात्मकः किमाचारः तन्ममाचक्ष्व पृच्छतः ॥ ३८ ॥**

एष वैरित्वेन प्रतिपादितः कामाद्यात्मको दोषः कथं भवति ? केन प्रकारेण स्थितिलक्षणं सत्तामनुभवति ? केन प्रकारेण विवर्धते, प्रसरति ? कश्चास्या[6]त्मा स्वरूपम् ? कश्चास्याचारः, किमाचरतीति ? तत्सर्वं मम संशयं पृच्छतो ब्रूहि ॥

---

१. IO, BN² and BS² त्वान्महदपर्यव-
२. BN² षयापहरण
३. IO and BS² अभ्यवहारो
४. BN² भोगदुःखैक
५. BN² तथा
६. BN² omits अस्य

अथ प्रश्नचतुष्टये क्रमेणोत्तरम् भगवानुवाच—

एष सूक्ष्मः परः शत्रुः देहिनामिन्द्रियैः सह ।
सुखतन्त्र इवासीनो मोहयन्पार्थ तिष्ठति ॥ ३९ ॥

कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः ।
अहङ्कारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ४० ॥

हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ।
भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४१ ॥

एष रजोगुणप्रभवः कामक्रोधरूपतया प्रसृतो दोषः शरीरिणामतिप्रत्यासन्नत्वेऽपि दुर्लक्षत्वात्परः सूक्ष्मः शत्रुः; स चाहङ्कार एव पर्यवस्यति, यतः "इन्द्रि[२]याणि पराण्याहुः" इत्यादिना तस्यैव परमसूक्ष्मत्वं प्रतिपादयिष्यति। किमात्मक इति प्रश्ने किमात्मकत्वमेवास्याधुनैवाभिधत्ते । स चैवंविधः शत्रुः परिवारभूतैरिन्द्रियैः सहितः कामक्रोधादिनिशातश[३]स्त्रप्रहारिभिः तैरेवायं सर्वप्राणिनो विशसति । तस्य दुर्जयत्वप्रतिपादनार्थं सर्वशत्रुविलक्षणमवस्थानमाह । स[४]र्वदुःखहेतुत्वे सति सुखतन्त्रे सुखात्मके वर्गे इवासीन उपविष्टः ; अत एव मोहयंस्तिष्ठति, देहाद्यात्मप्रत्ययलक्षणं

---

१. IO अत्र

२. BS[2] इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः॥ इत्यादिना
For other readings see page 121 later.

३. IO शास्त्र

४. BS[2] omits सर्व

विपर्ययज्ञानमारोपयन् स्थितिमनुभवतीति। "भवत्येष कथम्" इत्यस्य प्रश्नोत्तरमेतद्व्याख्यातम्। 'अथ कथं विवर्धते' इत्यस्य व्याख्यायते। कामक्रोधमयः कामक्रोधावुक्तरूपौ प्रकृतिर्यस्य स तथाविधः। स्तम्भस्य गर्वस्य तथा हर्षस्य विषादपरिणामस्य प्रमोदस्य समुद्भव उत्पत्तिस्थानम्। अत एव घोरो दारुण एव कामक्रोधस्तम्भहर्षादिदोषात्मना विवर्धते, उच्छ्रायं भजतीत्युक्तं भवति। अथ 'किमात्मकः' इत्यस्य प्रश्नोत्तरं व्याख्यायते। एषः सर्वदेहिनां शत्रुः अहंकारसंज्ञोऽभिमानात्मा; अभिमानो जात्याद्यवच्छेदभाजि गुणत्रय[1]मयत्वादनित्य[2]त्वादिदोषैक[3]समाश्रये शरीरादौ 'अहं ब्राह्मणः' 'अहं देवदत्तः' 'अहमभिजनवान्' 'अहं वपुष्मान्' 'अहं विदग्धः' 'अहमाढ्यः' इत्येवमाद्यना[4]त्मन्यात्मप्रतिपत्तिनिबन्धनं मिथ्याज्ञानं स आत्मा स्वभावो यस्य तादृशः; अत एव पापकर्मभिः दुस्तरः[5] सम्यग्ज्ञानाभावाद्धेयोपादेयविवेकशून्यत्वे सति पापमघमयं घोरसंसारनिरयनिपातनिमित्तभूतं कर्म चेष्टितं येषां तादृशैरासुरं सर्गं भजद्भिः पुरुषैर्दुरतिक्रमः। अथ 'किमाचारः' इत्यत्रोत्तरं व्याख्यायते। अस्य क्षेत्रज्ञस्यैषोऽहङ्काराख्यः शत्रुः हर्षं[6] सत्यात्म[7]संविदुपलभ्यमानानन्दं निर्वर्त्यापसार्य शोकं शोचनं ददाति समर्पयति। अनेन हि[8] शत्रुणा[9] व्यामोहितः शरीराद्यात्मत्वेन प्रतिपन्नं व्याधिप्रियविप्रयोगाद्युपद्रवोपहन्यमानमनुशोचति। कथं[10] विनष्टोऽस्मीति परिदेवते। अत एवास्यैष शत्रुर्भयमपि करोति, इष्टविषयोप-

---

१. IO and BN[2] omit त्रय BS[2] notes the word in the margin.
२. BN[2] अनित्यादि
३. BN[1] दोषे समा
४. BN[2] अनात्मप्रति-
५. IO सुशुरः
६. BN[2] हर्ष
७. IO त्मकं विदु[संविदु]
८. BN[2] omits हि
९. BN[2] शत्रूणां
१०. IO, BN[2] and BS[2] कष्टं

घातहेतुभ्यः संत्रासमुत्पादयति । किं कुर्वन्नेवमाचरति? प्रतिक्षणं मोहयन् यथाप्रतिपादितविपर्ययलक्षणं वैचित्र्यमर्पयन्—इति ॥

अनेनाहङ्काराख्येन शत्रुणेन्द्रियपरिवारेण सुखिवद्व्यवस्थितेन कामक्रोधस्तम्भमोहहर्षादिदोषात्मना विवर्धमानेन हर्षापहारादिकमाचरता प्रयुक्तः सन् क्षेत्रज्ञः पापमाचरतीत्यर्जुनप्रश्नं विनिर्णीय तस्यैवाहङ्कारस्य वितत्य स्वरूपं प्रतिपादयितुमाह—

**स एष कलुषः क्षुद्रः छिद्रप्रेक्षी धनंजय ।**
**रजःप्रवृत्तो मोहात्मा मानुषाणामुपद्रवः ॥ ४२ ॥**

स एष यथाप्रतिपादितस्वरूपोऽहङ्कारः समस्तमर्त्यानामुपद्रवः, सर्वदोषविधानसंसारहेतुत्वात् । यतः कलुषः गुणत्रयात्मकत्वान्नित्यमलिनः तत एव चानित्यत्वात् क्षुद्रः भङ्गुरः । तथा छिद्रप्रेक्षी बाधावकाशजागरूकः । शिष्टं स्पष्टार्थम् ॥

तेनास्य क्षेत्रज्ञस्य किं कृतमित्याह—

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथानेनायमावृतः ॥ ४३ ॥**

एतेनाहङ्कारेणायं संसारिपुरुषाणामात्मा तथावृतो निरुद्धशक्तित्वमापादितः । उपमानैनैतत्प्रकटयति । कथमावृतः? यथा आर्द्रेन्धनत्वादिदोषजन्मना कलङ्केन धूमा-

---

१. IO, BN² and BS² आवहन्

२. BN² and BN² सुखवत्

३. IO, BN² and BS² omit मोह

४. BN² मानुष्याणां

५. IO तथा तेनेदमावृतम्
BN¹ तेनायमावृतः

ख्येन वह्निरग्निराव्रियते निरुद्धभास्वरशक्तिः सम्पाद्यते, तथैवायमात्मा मायाप्रभवेणानेनैवाहङ्कारात्मना दोषेण निरुद्धस्वस्वरूपप्रत्यवमर्शात्मकस्वशक्तिः क्रियते। तथा यथा आदर्शो दर्पणो रजोनिश्वासादिसम्बन्धजन्मना मलेनाव्रियते, निरुद्धयथावस्थितभावस्फुरणलक्षणस्वशक्तिः क्रियते, तथैवायमात्मानेनाव्रियते, निरुद्धजगत्पदार्थप्रथनसामर्थ्यः क्रियते। तथा यथा गर्भः जननीकोष्ठवर्ती जीव उल्बेन गर्भशय्यया व्रियते, निरुद्धसर्वेन्द्रियपरिस्पन्दनशक्तिः क्रियते, तथैवायमात्मा अनेन निरुद्धसर्वकर्तृत्वलक्षणस्वशक्तिः क्रियते—इत्यनेनोपमानत्रयेणाहङ्कारस्यात्मानं प्रति स्वभावसर्वज्ञत्वसर्वकर्तृत्वलक्षणस्वधर्मत्रयनिरोधकत्वं प्रतिपादितम्॥

यद्यपि सर्वशक्तिनिरोधकोऽयमात्मनोऽहङ्काराख्यो दोषः, तथापि ज्ञानस्य प्राधान्यविवक्षयेदमाह—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥ ४४॥**

एतेन यथाप्रतिपादितेन देहाद्यात्मप्रत्ययलक्षणेन शत्रुणा ज्ञानिनः स्वात्मसंवेदनलक्षणमुख्यज्ञानवतः चेतनस्य तादृशं मुख्यं ज्ञानमावृतं निरुद्धम्, यतः

---

१. BN[1] and BN[2] भास्वरत्वादिस्वशक्तिः
२. IO omits तथा
३. IO omits मलेन
४. IO omits निरुद्ध
५. IO omits तथा
६. BN[1] omits यथा गर्भः
BN[2] omits यथा alone.
७. BS[2] कुक्षि
८. BN[2] omits स्वशक्ति...कर्तृत्वलक्षण
९. BN[2] omits लक्षण

कामो बाह्यार्थनिबन्धनोऽभिलाषो रूपं यस्य अत एवासौ दुष्पूरः[1], न केनचिद्विषयेण प्राप्तेन सता पूरयितुं शक्यः[2]; यतोऽस्याहियमाणा विषया रागं विवर्धयन्त इन्द्रियाणां च उत्तरोत्तरं[3] विशिष्टतरविषयसंज्ञतां पुष्णन्तस्तेभ्यो[4] न[5] विरतिमापादयन्ति[6], अत एवानलः नास्यालंभावो[7] निवारणमस्तीति; एवंविधेनानेन[8] स्वभावसंवेदनलक्षणं मुख्यं ज्ञानमावृतम्, तस्मिंश्चावृते सर्वाः शक्तयोऽस्यावृता इति तात्पर्यम् ॥

अथ किमधिष्ठायायं ज्ञानमस्य वृणोतीत्याह—

**इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४५ ॥**

अस्याहङ्कारस्य प्रतिपादितस्वरूपस्थितिविवृद्धिचेष्टित[9]लक्षणं[10]चतुष्टयस्येन्द्रियाणि चक्षुरादिवागादीनि, तथा मनः सङ्कल्पात्मकम्, बुद्धिरध्यवसायात्मिका अधिष्ठानम् । एतेषु हि कृतस्थितिरयं यथोक्तं ज्ञानमावृत्य देहिनं क्षेत्रज्ञं मोहयति, स्वरूपानभिज्ञत्वकिञ्चिज्ज्ञत्वकिञ्चित्कर्तृत्वकारिणा मोहेनाज्ञानेन युनक्ति ॥

---

१. BN[2] दुष्पूरेण
२. IO and BS[1] शक्तः
३. IO, BN[2] and BS[2] उत्तरोत्तर
४. IO adds पुष्णतां
५. IO, BN[2] and BS[2] omit न
६. BS[2] notes आसादयन्ति as an alternative reading.
७. IO, BN[2] and BS[2] add विषयेभ्यो
८. BN[2] एवं विधानेन
९. IO, BN[2] and BS[2] विचेष्टित
१०. IO, BN[1] and BS[1] लक्षणाच्चतु-

[1]तदयमेवंविधः शत्रुः कथं तिरस्कार्य इत्याह—

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥

यत एवंविधोऽसौ ततोऽ[2]स्याधिष्ठानभूतानि मनोबुद्धिसहितानि बुद्धीन्द्रियकर्मेन्द्रियाणि सर्वाण्येव प्रथमं नियम्य यथोक्तसत्यात्मस्वरूपप्रति[3]ष्ठात्मप्रत्ययतया रागद्वेषादिदोषोन्मेषनिषेधेन निगृह्य ; [4]एनं पाप्मानमज्ञानमयं महाकिल्बिषवपुषम् ; अत एव ज्ञानस्य शास्त्रादिद्वारेण परमार्थबोधस्य, तथा विज्ञानस्य, स्वात्मसाक्षात्कारलक्षणस्य विशिष्टस्य[5] ज्ञानस्य, नाशिनं[नाशनं] तिरस्कारिणं परमं वैरिणं प्रजहीहि तिरस्कुरु ॥

एष च परमसूक्ष्मत्वात्परेणोद्योगेनाप्रमादादिना च पराजय्य[6]ः शत्रुरित्यस्य तां सूक्ष्मतां प्रतिपादयितुमाह—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो[7] बुद्धेः परतस्तु सः ॥ ४७ ॥

---

१. IO तमयमेवं
BS[1], BN[1] and BN[2] यदयमेवं

२. IO omits अस्य

३. BS[2] प्रतिष्ठितात्म

४. IO एवं

५. BN[2] विशिष्टज्ञानस्य

६. IO and BN[2] जेय्यः
BS[2] जेयः

७. BS[2] बुद्धेः परतरस्तु सः is noted as an alternative reading. See f. n. 2 on page 116 above.

विषयाः शब्दादयस्तावदिन्द्रियद्वारेण सर्वस्य कस्यचिदुपलभ्यतामुपगच्छन्ति; अतस्तदपेक्षयेन्द्रियाणि पराणि, तेभ्यः सूक्ष्माणि आहुः कथयन्ति तत्त्वविदः। न हीन्द्रियाणि शब्दादिवत्साक्षादुपलभ्यमानानि[1] कस्यचित्। तेभ्यस्तथाविधेभ्यः सूक्ष्मेभ्य इन्द्रियेभ्यो मनः तत्प्रवृत्तिनिवृत्तिकारणं[2] सूक्ष्मतरम्; यथेन्द्रियाणि कथञ्चिद्गम्यन्ते[3] न तथा अतिचञ्चलं[4] मनः; तथाविधाश्च[धाच्च][5] मनसो बुद्धिः परा सूक्ष्मतमेत्यर्थः। यथा हि मनः कथंचिद्गम्यते, न[6] तथा निर्विकल्पकप्रत्यक्ष[7]क्षणवर्त्यध्यवसायात्मिका बुद्धिः; तस्याश्चैवंविधाया बुद्धेर्यः परतः परमसूक्ष्मत्वेन स्थितः स पूर्वोक्तोऽहङ्काराख्यः शत्रुः; यथा हि बुद्धिः[8] कथंचिदभियुक्तैर्गम्यते न तथायमविद्याप्रथमाङ्कुरः केनचिदनुन्मिषित[9]परमेश्वरानुग्रहप्रभवज्ञानचक्षुषा लक्ष्यीकर्तु[10]मपि शक्यते॥

तस्मात्—

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम्॥ ४८॥

## इति तृतीयोऽध्यायः॥

एवं यथोक्तप्रकारेण बुद्धेः परमेनं शत्रुं बुद्ध्वा सुदुर्लक्षत्वात्परमदुर्जयं मत्वा, अत एवात्मनैवात्मानं संस्तभ्य धैर्यं लम्भयित्वा, दुरासदं दुःखेनासादयितुं परिभवितुं

१. BN² उपलभ्यानि
२. BN² omits निवृत्ति
३. IO गम्यते
४. BN² चञ्चलमनः
५. BN² विधाघमनसः
६. BN² तेन
७. IO कल्पैक
८. IO omits बुद्धिः
९. IO उन्मिषित
१०. IO लक्षी-

शक्यमेनं जहि घातय। कीदृशम्? कामरूपम्। कामो विषयेष्वभिलाषो रूपं यस्य स तथाविधः। पूर्वं हि कामक्रोधाद्यात्मनास्यावस्थितिरुक्ता। तेन यद्यप्ययं सुसूक्ष्मत्वाद्दुर्जयः, तथाप्यस्य पूर्वोक्तेन प्रकारेण कामात्मिकामवस्थितिं निघ्नंस्तद्विहनने समर्थो[1] भविष्यस्येवेत्यर्थः। एवं भगवता क्षत्रियोचितेनैव प्रकारेणार्जुनः प्रस्तुतोपदेशफलप्राप्तिप्रतिद्वन्द्विनोऽहङ्कारस्य निबर्हणे समुत्साहितः। त्वया हि महेन्द्रेणापि दुर्जया बहवः शत्रवः सहायनिरपेक्षेण बहुशो निपातिताः; तदेनमपि शत्रुमात्मैकसहायो निपातयितुमर्हसीत्योम्॥

विज्ञानतत्त्वतपनीयगुणप्रकर्षप्रख्यापनैकनिकषो निजकर्मयोगः।
यस्मिन्[2] नृणां प्रकटितः परमार्थसिद्ध्यै सोऽध्याय एष विवृतो विधिवत्तृतीयः[3]॥

इति श्रीमद्राजानरामकण्ठविरचिते वाक्यार्थान्वयमाले
सर्वतोभद्रनाम्नि गीताविवरणे
तृतीयोऽध्यायः



---

१. BN[2] समर्था भवि
२. IO and BS[2] अस्मिन्
३. IO adds the following

सन्दिग्धार्जुनबोधकर्तृभगवद्गीताख्यसच्छास्त्रके
सद्बोधाङ्कितरामकण्ठविवृते श्रीसर्वभद्राख्यया।
अध्याये वितते महामुनिवरैः कर्माभिधाने महा-
देवो नित्यविवेचनातिनिपुणो ह्यास्ते स्वयं चित्रकृत्॥

## ॥ अथ चतुर्थोऽध्यायः ॥

एवमस्य समस्ताध्यात्मशास्त्रसर्वस्वभूतार्थगर्भस्य प्रकरणस्य ज्ञानकर्मसमुच्चयलक्षणमभिधेयं परमात्मसमापत्तिलक्षणं च प्रयोजनं प्रतिपाद्य इदानीं सम्बन्धविषययोः प्रतिपादनद्वारेण अर्जुनस्यात्मनि पुरुषत्वमात्रप्रतिपत्तिव्यामोहनिवृत्तये परमकारणतामाविष्कुर्वन् भगवानुवाच—

एवं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनैव महता योगो नष्टः परन्तप ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं चैतदुत्तमम् ॥ ३ ॥

एवमनेनैव प्रकारेण यथा तुभ्यं प्रोक्तोऽयं योगः तथैव विवस्वते महायोगीश्वराय सवित्रे योगमेनमहं परमेश्वर एव कस्मिंश्चित्काले निजयोगैश्वर्यपरिकल्पितनिरतिशयप्रभावमयविग्रहः प्रोक्तवान् उपदिष्टवान् । कीदृशं योगम् ?

---

१. IO. BS[1] and BN[1] add च
२. BN[2] कारुणतां
३. IO प्राप्तं
४. BS[1] इह
५. IO, BS[1] and BS[2] सनातनः
६. All read ह्येतदुत्तमम्
BS[2] notes चैतदुत्तमम् as an alternative reading. See above, page 10.
७. IO and BN[2] प्रोक्तो यो योगः

अव्ययम्; परमकारणवन्न कदाचिद्व्येति क्षीयते यः। स हि जगत्सर्गादिलक्षणं कर्मानुतिष्ठन्नपि परमेश्वरः प्राक् प्रतिपादिताद्वयचिन्मा[1]त्रैकलक्षणस्वभावविमर्शैक-निष्ठतया ज्ञानकर्मसमुच्चयानुष्ठानात्मकस्यास्य योगस्य प्रथमोऽनुष्ठातेति तद्वद्योग-स्यास्याव्ययत्वमुक्तम्। अनेन परमकारणादेव प्रवृत्तेरस्य योगस्य प्राधान्येन सम्बन्धमुक्त्वा क्रमेणानुष्ठा[2]नभ्रष्ट[3]संप्रदायतया तमेव सम्बन्धं विवृणोति "विवस्वान् मनवे प्राह" इति। स विवस्वान् पुत्राय मनुसंज्ञाय आदिराजाय प्राह प्रोवा[4]च। प्राहेति लिटश्छान्दसे[5] आहादेशः। सोऽपि मनुरिक्ष्वाकुसंज्ञाय पुत्रा-यैवाब्रवीत्। एवं परमेश्वरादेव प्रभृति परम्परया योग्यपुत्रादिशिष्टै[6]रूपप्रबन्ध-प्र[7]वृत्त्या ख्यातं लोके प्रथितं सन्तम् अन्ये जनकप्रभृतयो राजर्षयो राज्यलक्षणं कर्म कुर्वाणा अपि, यथोक्तज्ञाननिष्ठत्वादृषयो मुनयः, इमं यथोक्तं विदुः; विदांचक्रुरि-त्यस्मिन्नर्थे छान्दसः प्रयोगः। महता कालेन युगसहस्रादिसङ्ख्येन लोकस्य क्रमापचीयमानप्रज्ञादिसर्वगुणत्वाद्योग्यप्रतिपत्त्य[8]भावान्नष्टोऽन्तर्धानमागतः परमकारण[9] एव व्यवस्थित इत्यर्थः। स एवाभ्रष्टस्वरूपोऽद्यास्मिन् काले मया परमेश्वरेणैव जगदुपकाराय यादवकुलावतीर्णेन ते[10] तुभ्यं पुरातनो नित्यो योगः प्रोक्तः। यतो मम भक्तोऽसि शुश्रूषुस्त्वम्; तथा सखा सुहृत्; अतो भ[11]क्तिसौहार्दलक्षण-

---

१. BN[1] and BN[2] चिन्मात्रस्वभाव-लक्षणैकविमर्श

२. BS[2] भ्रष्टानुष्ठान

३. IO and BN[2] omit भ्रष्ट

४. IO प्राह

५. IO छान्दस आदेशः

६. IO, BN[2] and BS[2] शिष्य

७. All except BN[2] प्रवृत्ता ख्यातं लोकप्रथितं

८. IO प्रतिपत्त्रभावात्

९. BS[2] notes as an alternative reading परापरकारण

१०. BN[2] omits ते

११. BS[2] notes भुक्ति as an alternative reading.

मुख्यशिष्यगुणसम्पन्नाय मया तुभ्यमुपदिष्टम् । यत उत्तमं सर्वरहस्यानां प्रकृष्टमेतद्रहस्यम् । एवमनेनास्य शास्त्रस्य सम्बन्धविषयावपि प्रतिपादितौ । निरुत्तरविज्ञानमयदिव्यचक्षुर्दानेन पुरस्तात्प्रत्यक्षीकरिष्यमाणपारमार्थिकस्वरूपस्यार्जुनस्य स्वात्मनि यदुकुलोद्भूतमनुष्यमात्रप्रतिपत्तिनिराकरणद्वारेण भगवता पारमैश्वर्यमात्मनः कथयितुं च[1] प्रस्तुतम् ॥

अत एव सञ्जातसंशयः **अर्जुन उवाच**—

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतं विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

भवतस्तव अस्मिन् कलिद्वापरसन्धौ सम्भूतत्वादपरमपकृष्टं जन्मोत्पत्तिः विवस्वत आसर्गाद्व्यवस्थितस्य परं प्रकृष्टम् इत्थं कथमेतद्बुद्ध्येय, त्वमैदंयुगीनजन्मा सुचिरातीतकालजन्मनो[2]ऽप्यस्मै सूर्यायैनं योगं प्रोक्तवानिति ॥

अत्र **भगवान्** उत्तरमुवाच—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥**

सत्यं मम तव चापरिसङ्ख्येयानि जन्मानि तत्तच्छरीर[3]परिग्रहेण व्यतीतानि अतिक्रान्तानि । तानि पुनस्तव चात्मनश्च समस्तान्येवाहं वेद जानामि, त्वं तु मम[4] आत्मनश्च[5] तानि न[6] जानासि ॥

१. BN[2] omits च
२. BN[1], BN[2] and IO जन्मने
३. IO शरीरे
४. BN[2] मम नात्म-
५. BN[1] and BN[2] omit च
६. BN[2] omits न

अतोऽहम्—

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

अजोऽव्यय[1]आत्मा नित्यत्वाज्जन्मविनाशरहितोऽपि; तथा सर्वभूतानां स्थावरजङ्गमानां [2]सर्गस्थितिविनाशादिषु यथेष्टकर्तृत्वादीश्वरः प्रभुरपि सन् [3]स्वां प्रकृतिं आत्मीयं परं [4]स्वभावमद्वयचिन्मात्रलक्षणमधिष्ठाय, तत्रैव स्थित्वा; तस्मात्स्वभावाद[5]प्रच्युतः; स्वमायया [6]स्वया स्वात्माधीनया मायया द्वैतावभासन[7]मात्रप्राणेन शक्तिविशेषेण हेतुभूतेन, संभवामि जन्मादिसत्तां परिगृह्णामि । अतो नित्यत्वादीश्वरत्वा[8]च्च [9]स्वेच्छापरिगृहीतत्वाच्च सर्वदेहिनां भूतान्भाविनो वर्तमानांश्च जन्मादिविकारान् सततमविप्लुतसर्वज्ञत्वशक्तिरहमेव जानामि ॥

इत्थं [10]स्वजन्मपरिग्रहस्य प्रयोजनमाह—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदा[11]त्मांशं सृजाम्यहम् ॥ ७ ॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

---

१. All except BN$^{2}$ अव्ययमात्मा
२. IO, BN$^{2}$ and BS$^{1}$ omit सर्ग
३. IO स्वं
४. BS$^{2}$ स्वभावमधिष्ठायाद्वयचिन्मात्रलक्षणं तत्रैव स्थिता
५. IO अच्युतः
६. BN$^{1}$ and BN$^{2}$ omit स्वया
७. BN$^{1}$ समात्र
८. BN$^{2}$ त्वाच्चेत्
   BS$^{2}$ omits च
९. All except BS$^{1}$ स्वप्रादुर्भावान् त्वादृशांश्च सर्व
१०. BN$^{1}$ स्वजन्य
११. BN$^{1}$ तदात्मानं

यदा यदा यत्र यत्र काले धर्मस्य वर्णाश्रमनियमविभक्तस्य तदाचारस्य ग्लानिरुपक्षयो भवति, ततश्च तद्विपरीतस्याधर्मस्य वर्णादिव्यवस्थाव्युत्थानहेतोर्दुष्टाचारस्याभ्युत्थानमुद्भवो भवति, तदा तत्र तत्र काले अहं परमकारणभूतस्यात्मनः कंचित्कंचिदंशं[1] शक्तिलेशं स्वेच्छापरिकल्पितजगत्क्रीडापरिरक्षणाय सृजामि उत्पादयामि। अतो देवासुरसर्गविभेदेन स्वयमवभासिते[2] जगति दैवसर्गभाजां शास्त्रोपदेशविषयभूतानां साधूनां सत्त्वगुणोत्कर्षनिर्मलप्रज्ञानां परित्राणाय सत्क्रियाविघातहेतुभ्यो विघ्नेभ्यो[3] रक्षणाय; तथा दुष्कृतां शास्त्रीयनियमातिक्रमात् जगत्स्थितिविप्लावकदुष्टकर्मकारिणामसतां[4] विनाशाय प्रध्वंसाय। अत एव धर्मस्य जातिदेशकालादिप्रविभक्तविशेषस्य सदाचारस्य संस्थापनाय सम्यक्प्ररोपणाय प्रतियुगं तेन तेनाकारेण समुद्भवामि उत्पत्तिमत्तां[5] दर्शयामि; न तु वस्तुतोऽहं[6] जन्मविनाशादिभावविकारकलङ्कस्पर्शमनुभवामि ॥

अत एव—

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

एवमुक्तेन प्रकारेण जन्मकर्म च यः प्रबुद्धो मे तत्त्वतः परमार्थतो जानाति, यत्र शरीरत्वेऽपि सति यथोक्तात्परतः स्वभावादप्रच्युतिः, यत्र तत्त-

---

१. BN[1] and BN[2] अंशलेशं
२. IO भासितो
३. BN[1] and BN[2] omit विघ्नेभ्यः
४. BN[1] and BN[2] दुष्टकर्मणां
५. BN[1] and BN[2] सत्तां
६. IO and BN[2] नाहं

त्क्रियाफलसंस्पर्शश्च, अत एव दिव्यम् अलोकसामान्यम्, स तादृशो यथोक्तविज्ञाननिष्णातमतिः देहं त्यक्त्वा, देहे अहंप्रतिपत्तिमुत्सृज्य, जन्म नैति नित्यस्वभावाभिव्यक्तेः जन्मविनाशवत्त्वव्यामोहं जहाति । अतो मामेति मत्स्वभावमापद्यते ॥

यत एतेन—

वीतरागभयक्रोधा मन्मया मामुपाश्रयाः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

यथोक्तज्ञानलक्षणेन निरतिशयशुद्धिहेतुना व्रतविशेषेण पूताः पवित्राः सन्तो बहवो योगिनो मद्भावं मामिकां सत्तामागताः मदभेदं प्राप्ता इत्यर्थः । यतो विज्ञानपरिशीलनाद्वीतरागभयक्रोधाः—रागो विषयेष्वभिलाषः, तथा तद्विघातहेतुभ्योऽशक्यप्रतीकारेभ्यो भयं त्रासः, तथा शक्यप्रतीकारेषु क्रोधः—इत्येते संसारदुर्गदुरुच्छेदनिगडभूता दोषा वीता विगतास्त्रुटिता येषां ते, अत एव मन्मया मदेकस्वभावाः, मद्व्यपाश्रया अहमेव व्यपाश्रयो निरपायत्वाद्विशिष्टोपाश्रयः स्थितिहेतुर्येषां ते तथाविधाः ॥

ननु प्रबन्धतो भगवतैकमेव तत्त्वं यथाप्रतिपादितविशेषणविशिष्टं परमार्थसत्त्वेन प्रतिपादितं तदेव चेदानीमहन्तया व्यपदिश्यते । तत्कथं केचिदेव मद्भावमागता इत्युच्यते—इत्यर्जुनस्य सम्यगगृहीतपारमेश्वरक्रीडाविधेर्विकल्पमाशङ्क्याह—

---

१. BN[2] and BS[2] असंस्पर्शः
२. BS[1] यथोक्तज्ञान
३. BS[1] मामुपाश्रिताः
४. IO adds हे

17

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

सत्यमेवाहं समस्तानामन्योन्यभिन्ननानाविधस्वरूपाणां फेनबुद्बुदकल्लोलकलापानामुदधिरिवोदयास्तमयनिलय एक[1] एव तादृशेन च मया निजमायाशक्त्या तत्तन्नियतसा[2]मर्थ्यावच्छिन्नदेहादिप्रतिष्ठिताहङ्कारत्वेन नानारूपा ये क्षेत्रज्ञा अवभासितास्तेषु मध्ये यथा येन प्रकारेण या[3]दृशेन सङ्कल्पेन ये केचन मां प्र[4]पद्यन्ते मां प्रार्थयन्ते तत्कालं मत्समापन्ना भवन्ति, तानहं तथैव तत्तत्संकल्पोचितफलदानरूपेण प्रकारेण भजामि संश्रयामि, यतः सर्व ए[5]व मनुष्यास्तत्तदर्थक्रियासंपादनार्थितावसरे मम सर्वेभ्यः सर्वमनोरथफ[6]लप्रसाधनैकचिन्तामणेर्वर्त्म[7] प्राप्तिहेतुं[8] निर्विकल्पोत्साहलक्षणं पन्थानमनुवर्तन्तेऽनुकुर्वन्ति यथाहं परेणोत्साहेनैक एव सर्वं करोमि जानामि च तथा ते प्रतिनियतं कार्यं ज्ञेयं च कुर्वन्तो जानन्तश्च मत्समापत्तिसंवेदनशक्तिशून्यत्वात् 'अहं करोमि' 'अहं जानामि' इति किञ्चित्कर्तरि किञ्चिद्ज्ञे च तादृशे स्वात्मनि कर्तृत्वादिकं मन्यन्ते । किमनेनोक्तं भवति? यथार्कालोकेनानुगृहीतदृष्टयस्तिर्यञ्चो बालादयश्च तत्तदर्थक्रियानिष्ठाः, ते ते स्वं स्वं विषयं पश्यन्ति, न च तत्रार्कालोकं कारणत्वेन मन्यन्ते, मूढत्वात्, यतस्तादृशेन व्यव-

१. IO omits एक
२. BS¹ तासक्त्याव
३. BS¹ तादृशेन
४. BS² प्रतिपद्यन्ते प्रार्थ
५. IO omits एव
६. IO फलासाध-
BS² फलप्रसादनैक
७. IO, BN¹ and BN² धर्म
८. BN² हेतु

हारेण व्युत्पन्नाः तथैव सर्वे[1] क्षेत्रज्ञास्तत्तदर्थक्रियार्थिनो मयैव तत्क्षणप्रार्थितेन स्वप्रकाशानुगृहीतसंविदो[2] दृष्टप्रयोजनमदृष्टप्रयोजनं[3] वा सर्वं कुर्वन्ति जानन्ति च, मायामोहितत्वादात्मानं तत्र कारणत्वेन मन्यन्ते, न च मां तत्र कारणत्वेन मन्यन्ते ॥

अत एव किं वाञ्छन्तस्ते[4] "मम वर्त्मानुवर्तन्ते" इत्याह—

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

दृष्टप्रयोजनेन कर्मणा तत्तदभिमतप्राप्तिलक्षणां सिद्धिं कर्मफलं प्रार्थयमानाः तथा अदृष्टप्रयोजनेन यज्ञादिना तत्तल्लोकान्तरभोग्यसुखप्राप्तिलक्षणफलाभिलाषिणः सन्तो देवता इन्द्रादिरूपा यजन्तो हविर्दानादिना पूजयन्तः । किमत्र तात्पर्यम् ? आ ब्रह्मणः कीटपर्यन्तं यो यः कश्चिद्येन येनाभिसन्धिना यद्यत्किञ्चन चिकीर्षति जिज्ञासते वा तत्तत्फलसम्पत्तेस्तत्[5]तत्कालमवश्यभाविनी[6] असंचेत्यमाना मत्समापत्तिरेवैकं कारणम् । यस्मात् अस्मिन् मानुषे लोके सर्वस्य प्रत्यक्षभूते कर्मजा तत्तत्सङ्कल्पमूलव्यापारसमुत्था सिद्धिः फलप्राप्तिः क्षिप्रं तत्कालमेव मत्समापत्तिबलादेव सम्पद्यते परमार्थतः कर्तुर्ज्ञातुर्वान्यस्यासम्भवात् ॥

---

१. BN[2] सर्व
२. BN[1] and BN[2] गृहीतेन
३. IO omits अदृष्टप्रयोजनं
४. IO वान्छन्ते
५. BN[1] and BN[2] omit तत्
६. BN[1] and BN[2] भविन्यः सं-

ननु त्वमेव चेदेकः कर्ता तत्क्षेत्रज्ञभावेन कृतैः कर्मभिस्त्वमेव तत्फलेन सम्बध्यसे। ततश्च क्षेत्र[1]ज्ञवत्सुखादिसम्बन्धस्तवापि प्रसक्तः—इत्यर्जुना[2]शङ्कां परिहर्तुकाम[3] आह—

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

सत्यं गुणविभागेन 'अयं सात्त्विकः' 'अयं राजसः' 'अयं तामसः' इत्येवंरूपेण स[4]र्गभेदमूलेन, तथा कर्मविभागेन ब्राह्मणेनाध्येतव्यं यष्टव्यं दातव्यमित्येवमादिरूपेण मया यथोक्तस्वरूपेणैकेन कर्त्रा चातुर्वर्ण्यं सृष्टम्। चत्वारो वर्णा ब्राह्मणादयो निर्मिताः; तस्यैवंविधस्य चातुर्वर्ण्यस्य स्वगुणकर्मविभागसमुचित[5]कर्मानुष्ठानरूपतत्तत्फलभाजः कर्तारं निर्मातारमपि मामकर्तारं तद्वृत्तादृक्कर्मफलसम्बन्धाभावात्कर्तृधर्मरहितं जानीहि। कुत इति हेतुगर्भं विशेषणमाह। कीदृशं सन्तम्? अकर्तारं विद्धि अव्ययं नित्यमेकस्मात्स्वरूपाद्यतो[6]ऽहं न व्येमि न व्यपगच्छामि, अद्वयचिन्मात्रस्वभावतामेव न जहामि, एवं चाव्ययं सन्तं मामकर्तारं विद्धि। क्षेत्रज्ञा हि म[7]न्मायोद्भाविता नित्यदेहाद्यहङ्कारमयास्त्रिगुणाः सङ्कल्पकारिणः सुखादिभिः फलैर्युज्यन्ते; न त्वहं गुणातीतस्वभावस्तै[8]र्जातु युज्यते[युज्ये] ॥

---

१. BS[1] and BN[1] ज्ञेत्रवत्
२. BN[1] and BN[2] शङ्कां
३. BN[1] and BN[2] इत्याह
४. IO, BN[1] and BN[2] मार्गभेद
५. IO, BN[1] and BS[2] कर्मानुरूप
BN[2] कर्मानुष्ठानरूपं
६. IO omits यतोऽहं
७. IO सन्मायो-
८. BS[1] तैस्तैः

ततश्च—

न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

कर्माणि पुण्यापुण्यलक्षणाः क्रिया न मां लिम्पन्ति, सुखदुःखादिलक्षण-स्वफलरूपेण कलङ्केन न मलिनयन्ति । यतो नित्यनिजानन्दतृप्तस्य मम कर्मणां फलेषु तत्तदुत्तरोत्तरप्रकृष्टस्वरूपेष्वपि न कामो नाभिलाषः । यथाप्रतिपादित-स्वरूपैकमयत्वेन सर्वमिदमनुपश्यतः । यश्च यथोक्तेन ज्ञानामृतनिर्झरेण निर्धौत-सकलविकल्पकलङ्कत्वान्निर्मलप्रज्ञो योगी इत्येवं यथोक्तस्वरूपं मामभिजानाति प्रति-पद्यते, स मद्वत्क्रियमाणैः कर्मभिर्न बध्यते न रागादिक्लेशपाशनियन्त्रितः क्रियते ॥

किञ्च

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

एवं यथाप्रतिपादिते[6] कर्तृत्वेऽप्यकर्तृत्वपर्यवसायित्वात्तत्त्वं ज्ञात्वाधिगम्य पूर्वैरपि मन्वादिभिर्मुमुक्षुभिः कर्म शास्त्रचोदितं कृतमनुष्ठितम् । तस्मात्त्वमपि

---

१. IO कर्मफले स्पृहा
BS[2] notes this as an alternative reading.
२. All except BS[1] omit अभि
३. IO सद्यः क्रिय-
४. IO adds सः
५. BS[1] adds तस्मादनया बुद्धया पवित्रीकृतस्त्वमपि अवश्यकर्त-व्यानि कर्माणि कुरु इत्याह
६. BN[1] and BN[2] प्रतिपाद्यते
७. BS[2] सायितत्वं

यथोक्तज्ञाननिष्ठत्वेन कर्मैव स्वजातिविहितं युद्धादिव्यापारमेवानुतिष्ठ, पूर्वैरतीत-विप्रकृष्टकालजन्मभिस्तैस्तैः पूर्वतरमादितरमनुष्ठितम् ॥

किंतु—

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

किं कर्मानुष्ठेयम्, किंचाकर्म परिहार्यम्—इत्यत्र प्रविभागज्ञाने कवयोऽपि द्रष्टारोऽपि मुनयो मोहिताः । तेऽपि सम्यगेतयोर्न विभागं जानते, तस्मादकर्म-परिहारेण तदनुष्ठेयं कर्म तुभ्यं प्रकर्षेणेदानीं कथयिष्यामि, यद्विदित्वा संसारबन्ध-लक्षणादशुभादकल्याणान्मोक्ष्यसे[2] मुक्तो भविष्यसि ॥

यतः—

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

सामान्येनानुष्ठेयतयोपदिष्टस्य कर्मणो बोद्धव्यं विशेषात्मकं वस्तु विद्यते, अकर्मणश्च कर्मपरिहारस्यापि बोद्धव्यं विद्यते, विकर्मणश्च विरुद्धस्यापि कर्मणस्त-थैव बोद्धव्यं विद्यते ॥

---

१. BN[2] कर्म २. IO मोक्ष्यसि

यतोऽस्य त्रिप्रकारत्वे व्यवस्थितस्य कर्मणो गहना दुरवधारतत्त्वी[1] गतिर्व्याप्तिः; सा च यथावधार्यते, तथा प्रतिपादयितुमाह—

**कर्मण्यकर्म यः पश्यत्[2]यकर्मणि च कर्म यः ।**

**स बुद्धिमान् मनुष्येषु स चोक्तः कृत्स्नकर्मकृत्[3] ॥ १८ ॥**

यथोक्तज्ञाननिष्ठतयानुष्ठीयमाने शास्त्रचोदितस्वव्यापारे यस्तत्त्ववित् अकर्म कर्माभावं[4] संसारबन्धलक्षणकर्म कार्याकरणात्पुत्रोऽप्यपुत्रवत्[5]पश्यति, तथा अकर्मणि यथा विहित[6]कर्मप्रतिषेधे पूर्वोपपत्त्या रागादिदोषानुषङ्गस्य दुरुच्छेदत्वात् बन्धलक्षणकर्मकार्यकरणात्कर्मत्वं पश्यति, ज्ञानदृष्ट्या निश्चिनोति स[7] मनुष्येषु मध्ये प्रशस्तया बुद्ध्या युक्तः; स एव च संपूर्णपुरुषार्थसम्पादकत्वात्कृत्स्नस्याविकलस्य कर्मणः कर्तानुष्ठातोच्यते; भोगमात्रफलं हि कर्म[8] कृत्स्नमविकलाङ्गमप्यनुष्ठितमपवर्गलक्षणफलं प्रत्यहेतुत्वान्न कृत्स्नं भवति । अतस्तदनुष्ठाता न कृत्स्नकर्मकृदित्यर्थः । एवमनेन श्लोकेन कर्मणश्चाकर्मणश्च यद्वोद्धव्यमस्ति तद्व्याख्यातम् ॥

अथ कर्मैवाकर्म भवतीत्येतत्पूर्वमुक्तमपि दृढप्रतिपत्तये स्मारयन्विवृणोति—

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।**

**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

---

१. IO तत्त्वावगतिः
२. IO and BS[2] पश्येत्
३. BN[2] कर्मवित्
४. BN[1] and BN[2] कर्माभाव
५. BN[2] अपुत्रत्ववत्
६. BS[2] notes two alternative readings निहित and विदित
७. BS[2] and BN[2] omit स
८. BS[1] omits कर्म

काम्यन्त इति कामाः कर्मफलत्वेन प्रार्थ्यमानास्ते ते भोगाः ; तेषु सङ्कल्पे[1] इच्छा; तेन रहिताः सर्वे समस्ता दृष्टानुश्रविकविषयनिष्ठाः समारम्भाः कर्मप्रवृत्तयो यस्य तं यथोदितं[2]यथोक्तात्मतत्त्व[3]ज्ञानरूपेणानलेन दग्धकर्माणम् ; दग्धानि संसाराङ्कुर-प्रसवसामर्थ्यहरणाद्भसीकृतानि कर्मलक्षणानि बीजानि येन तं तादृशं पण्डितं विद्वांसमाहुः परमार्थविदः । यतः सर्वात्मना कृतकृत्यत्वपर्यवसायिनी विद्वत्ता, सा च यथोक्तज्ञानवत एव सम्भवति । एवं कर्मण्येवाकर्म विद्वान् पश्यतीति व्याख्यातम् ॥

यतः—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥

तदेव विशिनष्टि । स एवंविधो योगी परमानन्दमयपरमस्वभावसुव्यवस्थित-बुद्धिर्नित्यतृप्तः सकलबाह्य[4]विषयरसपरिक्षीणकाङ्क्षः । अत एव निराश्रयः स्वरूप-व्यतिरिक्ताद्बाह्या[5]लम्बनान्निष्क्रान्तः कर्मफलासङ्गं कर्मणां[6] यज्ञदानतपःप्रभृतीनां फलं स्वर्गादिभोगलक्षणमासङ्गमासक्तिं तदेव प्रकृष्टं फलमिति तत्र लीनचित्तत्वं त्यक्त्वा सहजे कर्मण्यभिप्रवृत्तोऽनुष्ठाने व्यवस्थितो[7]ऽपि[8] नैव किंचित्करोति ॥

---

१. IO and BS[1] संकल्पाः
२. IO यथोदितं
३. IO omits तत्त्व
४. BS[1] adds रस
५. IO and BN[2] बाह्यात्
६. IO कर्मदान
७. IO, BN[2] and BS[2] व्यवसितः
८. IO and BN[2] omit अपि

तथाविधस्य योगिनः सर्वस्य कर्मणो बन्धलक्षणस्वकार्यसम्पादनासामर्थ्यात् यथोक्तस्य योगिनः प्रशंसार्थमेवाह—

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

प्रागेव व्याख्यातमेतत् । यद्यपि कर्माकर्मणोरेव बोद्धव्यं वस्तु व्याख्यातम्, तथापि विकर्मणोऽपि बोद्धव्यं वस्तु[1] तद्व्याख्यानेन व्याख्यातम् । यतः कर्मपरिहारस्य ज्ञान[2]शून्यस्य सतो यत्र बन्धकत्वमुक्तम्, तत्र वर्णाश्रमसमयविरुद्धस्य कर्मणो बन्धकत्वे का भ्रान्तिरिति तस्यापि सर्वात्मना परिहार्यत्वलक्षणं बोद्धव्यं वस्तु[3] व्याख्यातमेव ॥

इदानीं कर्म सर्वथा कर्तव्यमिति सामान्येन कर्ममात्रमनुष्ठेयत्वेनोपदिष्टम् । प्रागुक्तस्य[4] "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः" इत्यनेन सूचितां[5] यज्ञलक्षणविशिष्टरूपतां मोक्षैकफलत्वं च योगिस्वरूपप्रतिपादनद्वारेणैव प्रस्तावयन्नाह—

---

१. All except BS² omit वस्तु
२. IO and BN² omit ज्ञान. BS² notes it in the margin.
३. BS² omits वस्तु
४. All except BS¹ प्राक्तस्य
५. IO सूचितं

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

यथोक्तज्ञानेऽवस्थितचेतसः प्रतिलब्धप्रतिष्ठयज्ञस्य, अत एव निवृत्तविषयाद्य-सङ्गस्य; ततश्च मुक्तस्यात्मविवेकसमाधिसिद्धि[1]लाभाद्देहाद्यात्मप्रत्ययरूपान्महतो बन्धनान्निष्क्रान्तस्य सतः वक्ष्यमाणप्रभेदाय यज्ञाय यजमानाय[2] तदर्थं कर्म शास्त्र-विहितां क्रियामारभमाणस्य कुर्वत एव समग्रं कायिकवाचिकमानसिकभेदेन सङ्ग्रहात् त्रिप्रकारम्, अवान्तरभेदेन त्वपरिसङ्ख्येयम्, विलीयते विगलति, ब्रह्मप्राप्तिहेतुत्वाद्विनश्वरफलारम्भकत्वलक्षणं स्वरूपमस्य नश्यतीत्यर्थः ॥

कथं क्रियमाणमेव कर्म प्रविलीयते इति विवेकसमाधिसिद्धिनान्तरीयकां ब्रह्माद्वैतसिद्धिं कर्मप्रविलयकारणभूतां प्रतिपादयितुमाह—

**ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

तेन गतसङ्गादिविशेषणविशिष्टेन योगिना ब्रह्मैव गन्तव्यम् । अतः समग्रं तस्य कर्म प्रविलीयत इति सम्बन्धः । तदेतद्व्याख्यायते—तेन योगिना बृहत्त्वादिधर्म-योगात् ब्रह्मशब्दवाच्यं[3] परमार्थतत्त्वमेव योग्यता[4]वशान्निर्विकल्पतया प्रकाशमानं गन्तव्यं संप्रदानत्वेनोपस्थातव्यम्; न हि तथाविधस्य योगिनस्तत्तत्फलाभिसन्धिना तत्तद्देवतान्तरं संप्रदानतया गन्तव्यत्वमर्हति । कीदृशेन तेन ब्रह्मैव गन्तव्यम्?

---

१. IO omits सिद्धि
२. BN² यजनाय
३. IO, BN¹ and BN² वाच्यपरमार्थ
४. IO योग्यत्वान्निर्वि

ब्रह्मकर्मसमाधिना। समुन्मिषिते विज्ञानात्मके दिव्ये चक्षुषि यथोक्तब्रह्माभेदेन प्रथमानं कर्म ब्रह्मकर्म[1]; स एव समाधिर्निरुत्तरो योगो यस्य स तथा, तेन तादृशेन। कीदृशं ब्रह्म गन्तव्यम्? ब्रह्मणा ब्रह्माभिन्नस्वरूपतया स्वात्मानं मन्यमानेन; हुतं तर्पितं ब्रह्मै[2]रूपतया प्रतिपन्नेऽग्नौ जातवेदसि। कीदृशं ब्रह्मार्पणम्? ब्रह्मरूपतयैव प्रतीयमानमर्पणमाज्यपयःसोमादियागद्रव्योपकरणसाधनं हस्तादि यत्र तत्तादृशम्। तथा ब्रह्महविः ब्रह्मत्वेनैव प्रतिपाद्यमानं हविः हूयमानमाज्यादिद्रव्यं यत्र तत्तथाविधम्। इदमनेन प्रतिपादितम्—यद्यद्वस्तु यथा[3]यथा प्रकाशते त[4]त्तत् प्रकाशमानत्वादेव प्रकाशादभिन्नस्वरूपं स[5]त् परमात्मव्यतिरिक्तं परमार्थतः पदार्थजातं न किंचित्संभवति, इति तत्त्वविद्भिः स्वसंवेदनसंवे[6]द्यत्वान्निष्प्रकम्पोपपत्त्युपलब्धिप्रदर्शनक्रमेण व्यवस्थापितोऽप्ययमात्मा ऐश्वर्या[7]द्द्वयनयेन यस्य कस्यचित्प्रतिपत्तिगोचरतामुपगच्छति, परमेश्वरेणैव विहितनियमत्वात्; तदयमैश्वरो नियमः स्वेच्छावभासितान्योन्याभिन्नस्वरूपेष्वप्यपरिसङ्ख्येयेषु प्रमातृषु कंचिदेव स्वेच्छावशादसावनुगृह्णाति; तस्य चानुगृहीतमात्रस्य तत्त्वावलोकव्यवधायकसन्देहमहागिरीन्द्रनिर्दलनदम्भोळिधाराभक्तिरुन्मिषति। तत्प्रभावा[8]च्च यथोक्तं तत्त्वज्ञानं शास्त्रात्मकमाप्तोपदे[9]शादिनोपनमति। तस्मिंश्च विशुद्धश्रद्धासि[10]द्धसिन्धुनिर्धौतनिखिल-

---

१. BS² adds कर्मैव
२. IO and BS¹ ब्रह्मस्वरूप
३. IO omits यथा...तत्तत्
४. BN¹ and BN² ततः
५. BN¹ and BN² omit सत्
६. BN¹ and BS² संवेद्यत्वनिष्प्र
७. IO and BS² द्वयनयो न यस्य BN¹ and BN² द्वयमयो न यस्य
८. IO, BS¹ and BS² तत्प्रभावाश्च
९. BS¹ आत्मोप-
१०. BS¹ omits सिद्ध

विकल्पकलङ्कया परमया प्रज्ञया निरन्तरमनुशील्यमाने देहिदेहविवेकज्ञानलक्षण-मद्वैतपुरद्वारमपावृतं भवति। तत्र लब्धप्रवेशोऽस्मिन् ब्रह्मार्पणविधानेऽधिकृतो योगी भवति। अत उक्तम्—

"गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः[1] कर्म समग्रं प्रविलीयते॥"

तेन च ब्रह्मैव गन्तव्यमिति। यज्ञाख्यस्य कर्मणः प्राधान्याद्दृष्टादृष्टविषय-सकलक्रियोपलक्षणार्थत्वेन ग्रहणमिह वेदितव्यम्। यतः "पश्यन् शृण्वन्" इत्या-दिना सर्वासु क्रियास्वेतां ब्रह्माद्वैतभावनामभिधास्यत्येव[2]॥

इदानीं वर्णाश्रमविभक्ताधिकार्यवस्थादिविभेदात् येषु येषु यज्ञप्रभेदेषु एषा भावना योगिना विधातव्यानुष्ठातृमुखेन तां प्रतिपादयन् तेषां तावद्बाह्याभ्यन्तर[3]-साधनप्राधान्येन प्रकारद्वयं तस्यैव ज्ञानयज्ञकारणभूतप्रकारत्रयसहितं[4] श्लोक-त्रयेणाह—

**दैवमेवापरे यज्ञं योगिनः समुपासते।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति॥ २५॥**

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।**
**शब्दादीन्विषयानन्ये[5] इन्द्रियाग्निषु जुह्वति॥ २६॥**

---

१. IO याचरतः
२. BN[1] धास्यते च
३. BN[2] बाह्यान्तर
४. BN[2] द्वय
५. IO विषयाण्यन्ये संयमाग्निषु

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७॥

अपरे केचिद्योगिनः संप्रत्यनुत्पन्नतथोक्ततत्त्वज्ञानत्वात्क्रियामात्रसमाहिता[1] दैवमेव यज्ञं समुपासते, देवानामग्नीषोमप्रजापतीन्द्रादित्यादीनां प्राधान्येनेज्यमानत्वात् देवसम्बन्धिनं यागमनुष्ठानेन भजन्ते नान्यम्, यत्र ऋत्विगाज्यपयःसोमादिचेतनं बाह्यं द्रव्यमुपकरणम्। अपरे तेभ्योऽप्यन्ये तत्त्वविदस्तेनैव यज्ञेन तत्तदुपकरणभावावस्थितात्ममयेन यज्ञमात्मानमेव उपजुह्वति प्रीणन्ति। क्व? ब्रह्माग्नौ। ब्रह्म तत्त्वज्ञानम्, स एव परप्रकाशात्मकत्वात्सकलशुभाशुभकर्मफलदाहहेतुत्वाच्चाग्निः, तस्मिन्। एतदुक्तं भवति—ब्रह्मार्पणविधानविदो दैवमेव[2] यज्ञं ज्ञानयज्ञत्वमापादयन्ति। अथान्ये केचन योगिनश्चित्तवृत्तिनिरोधनलक्षणसमाधिनिष्ठा अबहिस्साधनसाध्यं यज्ञमनुतिष्ठन्तः श्रोत्रादीन्यक्षाणि तत्तद्ध्येयार्थसमाधिरूपेषु संयमेष्वेवाग्निषु जुह्वति, विषयेभ्यः प्रत्याहृत्य तेषु तेषु समाधिषु[3]लीनानीन्द्रियाणि यज्ञसम्पत्तिमभिमन्यन्त इत्यर्थः। अन्ये पुनः योगिनः शब्दादीन्विषयान् परिहारेण श्रोत्रादिष्विन्द्रियेषु जुह्वति। निषिद्धबहिष्प्रसरास्विन्द्रियवृत्तिष्वेव लब्धसंयमे चेतसि शब्दादीनामग्रहणमेवेन्द्रियेषु अग्निकल्पेषु हवनं मन्यमानास्तथाविधं यज्ञमनुतिष्ठन्तीत्यर्थः। अपरे केचन एवंविधस्य योगयज्ञस्य ज्ञातयज्ञत्वसम्पत्तये सर्वाण्यशेषाणि बाह्यानामाभ्यन्तराणां चेन्द्रियाणां कर्मणि[4] प्राणस्य च सामान्य-

---

१. IO मात्रसहिता

२. IO omits एव

३. BS[2] gives two alternative reading:—
समाधिषु लीनानि and समाधिनिष्ठानि लीनानि

४. BS[2] कर्माणि

रूपस्यैकस्य प्राणापानसमानोदानव्यानादिभेदप्रवृत्तानि समस्तानि कर्माणि आत्मसंयमयोगाग्नौ जुह्वति। आत्मनि प्रतिपादितलक्षणे परस्मिन् कारणे यः संयमः सम्यक् चित्तस्य निबन्धनं तदात्मको यो योगः समाधिः स एवाग्निः, तत्र तानि लीनानि कुर्वते। कीदृशे? ज्ञानदीपिते। आत्माद्वयलक्षणेन ज्ञानेन बोधेन दीपिते द्योतिते। किमुक्तं भवति? तेषु तेषु नानाविधेषु योगेषु मनःप्राणयोर्व्यापारान् हविर्विदात्मनिष्ठे समाध्यग्नौ निक्षिपन्तस्तादृशस्य योगयज्ञस्य ज्ञानयज्ञत्वमापादयन्तीत्यर्थः॥

एवं यज्ञानां व्यापारभेदेन चतुर्विधत्वं प्रतिपाद्य इदानीमाश्रमभेदप्रतिपादनद्वारेण यज्ञभेदान् प्रतिपादयितुं श्लोकद्वयं सार्धमाह—

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः॥ २८॥**

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः॥ २९॥**

**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।**

द्रव्येण हविरादिना यैर्ज्ञः पाकैयज्ञादिर्यागविधिर्येषां ते द्रव्ययज्ञाः; तत्तद्देवतायजनप्रधानक्रतुक्रियानुष्ठायिनः सम्भवन्तीति शेषः। ते च गार्हस्थ्याश्रम-

---

१. BN[1] and BS[2] निलीनानि
२. BN[2] यज्ञाः
३. IO पावक
BS[2] पाकयक्षादियाग

वर्तिनः प्राधान्येनात्राभिप्रेताः ; यतो गृहस्थानामेव द्रव्यसाधने देवयज्ञे मुख्यतयाधिकारः । तत्र पाकयज्ञाः सर्ववर्णसाधारणाः, यतः शूद्रस्यापि "पाकयज्ञैः स्वयं यजेतैको[1] विहितोऽस्य नमस्कारो मन्त्रः" इत्यादिना तेष्वधिकारो विहितः । तथान्ये तपोयज्ञाः तपसा तेन तेन वर्णविशेषविभक्तेन नियमेन यज्ञो यागविधिर्येषां ते प्राधान्येन वानप्रस्थाश्रमिणोऽत्र गृह्यन्ते, तेषामेव मुख्यतया तपोनिष्ठत्वात् । "आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम्" इत्यादिना शूद्रस्याप्यत्राधिकारात्तपोयज्ञेष्वधिकारः[2] । तथान्ये योगयज्ञाः योगेन यमनियमाद्यङ्गनिर्वर्त्येन[3] सवीजनिर्बीजरूपेण चित्तवृत्तिनिरोधैकलक्षणेन समाधिना यज्ञो येषां ते योगयज्ञाः, प्राधान्येन चतुर्थाश्रमिणः, तेषामेव प्राधान्येन योगपरत्वात् । अत्रापि शूद्रस्याधिकारो विहितः, यतो भगवता व्यासमुनिनैव चतुर्वर्णसाधारणान् धर्मान्निर्दिशता तन्मध्ये आत्मज्ञानमुक्तम् । तथा च जनकपराशरसंवादे—

" विशेषधर्मान् वर्णानां प्रब्रूहि भगवन् मम ।
तथा सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ "

इति प्रश्ने विशेषधर्मानुक्त्वा भवगान्[4] पराशरः—

" आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥

---

१. IO यजेत इति विहि
२. IO omits अत्राधिकारात्
BS[2] तत्र for अत्र
३. IO नियमाभ्यङ्ग
४. BN[1] भागता

स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ।

आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥"

अत्रैवान्यत्र—

"न चापि शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति ।

श्रुतिप्रवृत्तं न च धर्मम[1]श्नुते न चास्य धर्मप्रतिषेधनं कृतम् ॥"

अत्रैवान्यत्रापि—

"सर्वे वर्णा धर्मकार्याणि सम्यक् कृत्वा राजन् सत्यवाक्यानि चोक्त्वा ।

त्यक्त्वा धर्मं दारुणं जीवलोके यान्ति स्वर्गं नात्र कार्यो विचारः ॥" इति,

स्वाध्यायज्ञानयज्ञाश्चापरे, स्वाध्यायो वेदवेदाङ्गस्मृतीतिहासपुराणतर्कदण्डनीतिवार्तादिर्यथास्वं स्वस्य शास्त्रस्याध्ययनम् । तत्र प्राधान्येन ब्रह्मचर्या[2]श्रमिणोऽधिकृताः, यतो मुख्यतया तेषां स्वाध्यायनिष्ठत्वं व्यवस्थितम् । तत्र च कस्मिंश्चिदंशे कथंचिच्छूद्रस्याप्यधिकारः, यतः "स्वयं यजेत" इति पाकयज्ञेषु तस्याधिकाराभ्युपगमात् तदितिकर्तव्यताविज्ञानहेतोः कस्यचिच्छास्त्रावयवस्य केनचित्प्रकारेणाध्ययनमवश्यमेव प्रसक्तम् । तथा ज्ञानयज्ञैः[3] ज्ञानेन प्रबन्धप्रतिपादितात्माद्वैतबोधात्मना यज्ञो गृह्यते, ततः[4] शूद्रस्याप्यधिकारः ॥

---

१. BS[2] धर्ममुच्यते is noted as an alternative reading.

२. IO, BS[1] and BN[2] ब्रह्मचार्या-

३. IO and BN[2] यज्ञाः

४. BN[2] तत्र

तथा चोक्तम् इहैव पैरब्रह्मस्वरूपमात्मानं व्यपदिशता भगवता—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥" इति[2] ।

न चातिशयोक्तिमात्रमेतत्, यतो मुनिनैवोक्तं[3] मोक्षधर्मेषु । पिङ्गला-सुलभाद्यास्स्त्रियः तुलाधाराद्याश्च वैश्याः धर्मव्याधादयः शूद्रा आविर्भूततत्त्व-ज्ञानास्तत्रतत्रोदाहृताः । तदनेन ज्ञानयज्ञेन पूर्वोक्ता यज्ञभेदा ज्ञानयज्ञतामा-प्नुवन्तीत्युक्तं भवति । स्वाध्यायज्ञानयज्ञानां यतयः संशितव्रताः इति विशेषणं स्वाध्याययज्ञानामत्यन्तनियमपरत्वात्; ज्ञानयज्ञानां च[4] परमार्थ-निष्ठत्वान्मुख्ययतिलक्षणयोगाद्वेदितव्यम् । अथ प्राणायामयज्ञस्य साधारण्यात् पृथक्-स्वरूपं प्रतिपादयन्नाह—अपरे केचिद्योगिनोऽपाने पूरकवृत्तौ व्यवस्थिते शारीरे मरुति प्राणं रेचकवृत्तिव्यवस्थितं[5] वायुं जुह्वति, प्राणाख्यं वायुं हविर्भावेन कल्पयित्वापानं चाग्नित्वेन, यागविधिमनुतिष्ठन्तीत्यर्थः । रेचितः प्राणो यदापान-वृत्त्यात्मना परावर्तमानः स्वरूपं जहाति, तदापानेऽसौ[6] हुतो भवतीति कृत्वा "अपाने जुह्वति प्राणम्" इत्युक्तम् । अनेनैव क्रमेण प्राणेऽग्निभावेन परिकल्पितेऽपानं हवि-र्भूतमन्ये जुह्वति इति रेचकवृत्तिपूर्वकत्वेन पूरकवृत्तिविश्रा[7]न्तिरूपतया पूरकवृत्ति-

---

१. IO परं ब्रह्मस्व
   BN² परं ब्रह्मैव स्व
२. IO, BN² and BS² omit इति
३. BS² omits उक्त
४. IO omits च
५. IO स्थित
६. BN² तदापाने स हुतो
७. IO and BN¹ omit विश्रान्ति...वृत्ति
   BS² reads the passage in the margin.

पूर्वकत्वेन रेचकवृत्तिश्रान्तिरूपं प्राणापानक्रमद्वयं प्रतिपाद्य कुम्भकवृत्तिरूपं क्रमं प्रतिपादयितुमाह—अपरेऽन्ये प्राणापानयोर्द्वयोरपि गती व्यापारौ रुद्ध्वा स्तम्भयित्वा यावच्छक्ति प्राणायामपरायणाः, तथाविधानां रुद्धानां प्राणानामायामः चिरकालावस्थानात् दीर्घीकरणं परायणं निष्ठा येषां ते तादृशाः, प्राणायामपरायणाः। अनेन रेचकपूरकवृत्त्योरपि प्राणानामायाम एवोक्तो वेदितव्यः। ते चैवंविधा नियताहारा मात्राकालावच्छिन्नहितपवित्राशिनः सन्तः प्राणान् नानानाडीवाहिनो वायूनाज्यभूतान् मध्यमेषु प्राणेषु अग्निभूतेषु जुह्वति, तत्र लीनान् कुर्वते, मध्यमप्राणवृत्त्यवलम्बिनस्तिष्ठन्ति। अयं प्राणयज्ञक्रमः प्रतिपादितः। एषोऽपि पूर्वोक्तज्ञाननिष्ठतयानुष्ठीयमानो ज्ञानयज्ञत्वमापद्यते, यतः पूर्वयोर्द्वयोः प्रकारयोः प्राणोदयास्तमयसन्धिसमाहितत्वेन परमात्मसमापत्तिहेतुतामापद्यमानयोर्विज्ञानयज्ञता जायते। तृतीयेऽपि क्रमे मध्यमप्राणपरिणतचित्तवृत्तितयासौ जायते। अस्य च प्राणायामक्रमस्य योगाङ्गत्वेन व्यवस्थितस्यापि पुनर्वचनं केवलस्यैव यज्ञविशेषप्रतिपादनार्थं वेदितव्यम् ॥

एवमनुष्ठातृभेदेन यज्ञभेदान् प्रतिपाद्य सर्वेषामपवर्गफलत्वं यथा भवति तथा प्रतिपादयितुमाह—

**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**

---

१. IO प्राणायामः

२. BN[1], BN[2] and BS[1] अग्निर्भूतेषु

३. IO and BS[2] omit वृत्ति

४. BN[2] यामक्रमं

५. BS[2] किल्बिषाः is noted as an alternative reading.

एते यथोक्तविविधयज्ञानुष्ठातारः सर्वेऽपि समस्ता एव निर्विशेषतया सनातनं नित्यमक्षयं ब्रह्म परमात्मतत्त्वं यान्ति गच्छन्ति, तदेव सम्पद्यन्त इत्यर्थः। कीदृशा यज्ञविदः सन्तः? यदि यथाप्रतिपादितब्रह्मार्पणविधानक्रमेण यज्ञं यथोक्तं नानारूपं यागं जानन्ति निर्विकल्पतया प्रतिपद्यन्ते, ततस्तथाभूतेन[1] यज्ञविधिना क्षपितकल्मषा विनाशिताज्ञानलक्षणमुख्यमहापातकाः सन्तः। तथानुष्ठिताद्यज्ञाच्छिष्टं तादृग्यागविधानानन्तरमाहरणीयं यत्तदेवामृतं ब्रह्मार्पणविधानदृष्ट्या ब्रह्ममयत्वादमृतम्, अनुत्तरानन्दास्वादसुन्दरं सुधारसं भुञ्जते, परसंविन्मयस्वात्मपरिपोषाय चर्वयन्ति, ये तथाविधाः सन्तः यथोक्तं ब्रह्मलक्षणं पदं प्राप्नुवन्तीत्यर्थः। ब्रह्मार्पणज्ञानव्यतिरेकेणैतान् यागविशेषाननुतिष्ठन्तस्तेभ्यस्तत्तन्नानारूपं[2][3] परिमितं फलं प्राप्नुवन्तीत्यर्थात्प्रतिपादितं[4] भवति ॥

यस्तु केवलेन क्रियामात्रेण ज्ञानमात्रेण[5] वा ज्ञानक्रियासमुच्चयेन वा द्वयोरेकतमेनापि विधिना यज्ञे[6] न किंचिदनुतिष्ठति, तस्य

नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

अयज्ञस्योभयरूपतयापि यज्ञरहितस्यायमेव लोको दृष्टमेव नास्तिकत्वात्सर्वजनद्वेष्यस्य[7] सतो नास्ति, यदुक्तम्—

---

१. BN[1] and BN[2] तथाज्ञातेन. This is noted as an alternative reading in BS[2].

२. BN[1] तेभ्यस्ततो. This is noted as an alternative reading in BS[2].

३. BN[1] रूपं परिणतेभ्यः तत्तन्नाना_रूपं फलं
BN[2] रूपं मितं फलं

४. BN[1] and BN[2] प्रतिपादितः

५. All except BS[2] omit ज्ञानमात्रेण वा

६. All except BN[1] यज्ञं

७. BN[2] द्वेषस्य

"सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
नास्तिकोऽपि ह्युद्विजते जनः किंपुनरास्तिकः ॥" इति ।

तस्यैवंविधस्य पापशीलस्य कुतोऽन्य एतस्माल्लोकात्परः स्वर्गापवर्गात्मकफलभोगास्पदमदृष्टसंज्ञो भवति ॥

अथैतेषां सर्वयज्ञानां कर्मजत्वप्रतिपादनेन ज्ञानयज्ञत्वापत्तिं प्रतिपादयितुमाह—

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

एवं यथोक्तेन क्रमेण भूरिप्रकारा यज्ञा ब्रह्मणो वेदादेः शास्त्रस्य मुखे, तद्द्वारेणेत्यर्थः; वितताः स्वर्गतिविशेषप्रतिपादनक्रमेण विस्तारिताः; तांश्च सर्वान् कर्मजान् वाङ्मनःकायव्यापारनिर्वर्त्यत्वेक्रियासमुद्भवान्विद्धि, नान्यथैषामात्मलाभोपपत्तिरिति निश्चिनु। येऽपि हि बुद्धिमात्रसाधना यज्ञाः, तेषु तादृक्सूक्ष्मबुद्धिव्यापाराव्यभिचारः स्थित एव। ततः सहसृष्टत्वादशक्यपरिहाराणां कर्मात्मकानां यज्ञानां यथोक्तज्ञाननिष्ठतयानुष्ठानमपवर्गसिद्धिहेतुरित्येवं ज्ञात्वा सम्यक् प्रतिपद्य विमोक्ष्यसे स्वयमेव केवलीभविष्यसि, न निमित्तान्तरमपेक्षिष्यस इति। समुच्चयज्ञानस्य मोक्षं प्रति सौकर्यप्रतिपादनाय विमोक्ष्यस इति कर्मकर्तरिप्रयोगः ॥

---

१. IO, BN[2] and BS[2] स्वर्गविशेष
२. BS[1] निर्वर्त्यत्वात्
३. IO निश्चित्य
४. IO बुद्धिः
५. IO केवले

अथैतस्य ज्ञानस्य प्रशंसार्थमाह—

**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

द्रव्यमयाद्यज्ञादिति यथोक्तप्रतिपादितप्रभेदयज्ञोपलक्षणार्थं वेदितव्यम् । तेन सर्वेभ्यो यज्ञेभ्यो ज्ञानयज्ञः श्रेयान् प्रशस्यतरः । ज्ञानमयो हि यज्ञः सर्वान् द्रव्ययज्ञादीन्मोक्षफलान् सम्पादयति । तेन ज्ञाने सति सर्वयज्ञा ज्ञानयज्ञा[1] एव भवन्तीत्युक्तं भवति । सर्वयज्ञनिष्ठत्वेन हि ज्ञानयज्ञत्वं मोक्षफलम्, ज्ञानम् न तु पृथक् ; यस्माद्यथोक्ते ज्ञाने द्रव्ययज्ञादिविभागेन सर्वं समस्तं कर्म अखिलं स्वगत[2]विशेषापेक्षया समग्रं ज्ञाने परिसमाप्यते प्रविलयं गच्छति, कृतमपि दग्धबीजवत् स्वफलप्रसवसामर्थ्यं न भजते ॥

एवंविधं च—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

तज्ज्ञानं[3] तुभ्यं ज्ञानिनः परमात्मसमापत्तिलक्षणनिरुत्तरफलप्राप्त्युपायभूतबोधयुक्ता गुरव उपदेक्ष्यन्ति प्रतिपादयिष्यन्ति, किं शास्त्रमात्रज्ञानेनेत्याह । तत्त्वदर्शिनः यथाप्रतिपादितस्य परमार्थस्य स्वसंवेदनेन द्रष्टारः केन हेतुनोपदेक्ष्यन्ति[4] ? प्रणिपातेन पादप्रणामपूर्वेण सर्वात्मना प्रह्वत्वेन ; तथा परिप्रश्नेन परितः समन्तात्

---

१. BN[2] यज्ञः
२. IO स्वगति
३. BS[2] ज्ञानं तु ज्ञानिनः
४. BS[1] and BS[2] उपदेक्ष्यति

सर्वसंशयच्छेदार्थं यः प्रश्नः पुनःपुनः प्रार्थनापूर्वमनुयोगः तेन; तथा सेवया आसन्नस्वसमर्पणात् सर्वत्र निर्विकल्पया शुश्रूषया। निर्व्याजभक्तिश्रद्धाराधिता गुरवः एवंविधं महोदयमर्थमुपदिशन्तीति विद्धि निश्चयेन जानीहि ॥

कीदृशं तज्ज्ञानमित्याह—

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषाणि[1] द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

यज्ज्ञात्वा सम्यक् प्रतिपद्य[2] पुनस्तत्प्रतिपत्तेरुत्तरकालमेव सर्वस्यानुष्ठेये[3] वैरिवधलक्षणे स्वधर्मे एवाधर्मप्रतिपत्तिरूपेण प्रकारेण मोहं[4] विपर्ययलक्षणमज्ञानं न प्राप्स्यसि, येन च[5] ज्ञानेन करणभूतेन सर्वभूतानि चराचरप्राणभृतो मयि परमकारणे तथात्मनि स्थितानि द्रक्ष्यसि ज्ञास्यसि। किमुक्तं भवति? परमकारणाभिन्नात्स्वात्मनः सर्वभूतानां वास्तवमभेदमनेन ज्ञानेन साक्षात्करिष्यसि[6]। अत्र स्वयं ज्ञानमुपदिशन्नपि ज्ञानिनस्ते ज्ञानमुपदेक्ष्यन्तीति भगवान्यदाह, तत्र साक्षात्त्वानुभवलक्षणे विशेषज्ञानेऽर्जुनस्याभिकाङ्क्षोत्पादनं प्रयोजनम्। यतः क्रमेणोत्पन्नविशेषज्ञानजिज्ञासातिशयं भगवांस्तत्त्वमनुभावयिष्यत्येव[7] ॥

युद्धलक्षणे स्वधर्मेऽनुष्ठीयमाने कुत एव ते[8] पापसम्बन्धः, यतोऽस्य ज्ञानस्यायं प्रभावः—

---

१. BS[2] अशेषेण
२. BN[2] प्रतिपाद्य
३. IO, BN[2] and BS[2] सर्वमेवमवस्यानु-
४. IO and BN[2] मोह
५. BN[2] omits च
६. BS[1] करिष्यामि
७. All except BS[1] भावयिष्यतीव
८. BS[1] omits ते

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥

अपि चेदसि यद्यपि त्वं सर्वेभ्यः पापेभ्यः समस्तेभ्यः [1]पातकिभ्यो ज्ञातिगुर्वादिदुष्कृतकारित्वात् पापकृत्तमः तदपेक्षयातिशयेन दुष्कृतकारित्वात्, तथाप्यस्य [2]ज्ञात्यादिवधलक्षणस्य कर्मणः स्वधर्मत्वे [3]सति वृजिनं तज्जं पापं समस्तं सागरमिव दुर्लङ्घ्यं यथोक्तज्ञानलक्षणेन प्लवेन यानपात्रेण लङ्घयिष्यसि ॥

यतः—

[4]यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽ[5]र्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

यथा काष्ठानि दीप्ततरोऽनलो भूतिमात्रशेषाणि, [6]तथा तेनैव प्रकारेण सर्वाणि निःशेषाणि कर्माणि पुनः फलदानसामर्थ्यक्षपणाज्ज्ञानं निर्दहति । अनेन स्वधर्मत्वेनावस्थितानां परमघोराणामपि सर्वेषां कर्मणां नैष्फल्यापादनस[7]मर्थं ज्ञानमेतदित्युक्तम्, न तु शा[8]स्त्रविहितानाम्; यथोक्तं प्राक् "श्रेयान् स्वधर्मो विगुणः" इत्यादिना ॥

किंच अघोरस्यापि कर्मणो मोक्षलक्षणोत्तमफलप्राप्ति[9]पर्यवसायि[10]नानेन—

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

---

१. BN² पातकेभ्यः
२. BN¹, BS¹ and BS² ज्ञात्रादि
   IO ज्ञा:वादि
३. IO adds त्वं
४. IO तथैधांसि
५. IO अर्जुन
६. BN¹ and BS¹ omit तथा... सर्वाणि
७. BN² समर्थ
८. BN² शास्त्रावहि
९. BN¹ adds फल
१०. IO and BS² सायेन

यस्माज्ज्ञानेन तुल्यं पावनमन्यद्वस्तु जगति न सम्भवति, तच्चास्य पावनत्वं योगसंसिद्धः[२] ज्ञानसंस्कृतेन[३] कर्मसमाधिना सम्यक्सिद्धः प्राप्तपरमात्मसमापत्तिलक्षणप्रकृष्टफलस्सन्[४] कालेनाभ्यासतीव्रतानुसारिणा शीघ्रेण चिरेण वा स्वयमेवात्मनैव लभते स्वीकुरुते ॥

तस्य चैवंप्रभावस्य ज्ञानस्य लाभक्रममाह—

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

श्रद्धा आप्तोपदिष्टेऽर्थे निर्विकल्पफलसम्भावना, यद्वशात्प्राप्तफलस्येव[६] चेतसः संप्रसाद उत्पद्यते । सा च परमेश्वरप्रसादसुरपादपप्रथम[७]मञ्जर्या भक्त्या सहैवोत्पद्यते[८], तद्वान् तया युक्तः संशयात्मकघोरविघ्नविनाशात्तत्परः, नान्यचेताः । तथा संयतेन्द्रियः, प्राक्प्रतिपादितेन क्रमेण वशीकृतसकलाक्षवर्गः[९] परं[१०]मपावनं ज्ञानम् अभियुक्तः कुतश्चित्परमेश्वरेच्छाप्रेरितात्साक्षात्कृतपरमार्थादवाप्नोति । तच्च प्राप्य-नित्याभ्यासपरिशीलनात् सुदृढप्रतिपत्त्या स्वीकृत्य[११]ाचिरेणाल्पीयसैव कालेन परां निरुत्तरां शान्तिं सकलविप्लवविनाशनिश्चलं शमं स्वात्मोपलब्धिजनितां निर्वृतिमधिगच्छति प्राप्नोति ॥

---

१. BS[1] and BS[2] पावकं
२. IO संसिद्धौ
३. All except BS[2] add यथोक्तेन
४. BN[1] and BS[2] adds योगी
५. BN[2] and BS[1] तीव्रत्व
६. BN[2] एव
७. IO, BN[2] and BS[2] omit प्रथम-
८. BN[2] उत्पाद्यते
९. BS[1] and BS[2] अर्थवर्गः
१०. BN[1] and BN[2] परमं
११. BN[1] omits स्वीकृत्य

एतद्गुणविहीनस्तु—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

अज्ञो ज्ञानरहितो नश्यति, परापरफलप्राप्त्यभावात् संसार एव निमज्जति । कीदृशः स विनश्यति ? अश्रद्दधानः यः परमेश्वरानुग्रहाद्विना न किंचिच्छ्रद्दधाति सम्भावयति, यतः श्रद्धाविरहात्संशयात्मा सर्वत्र[1] निश्चयप्रतिपत्त्यभावात्सन्देहमयबुद्धिः । अतश्च तथाविधस्य सन्दिग्धबुद्धेर्नायं[2] दृष्ट एव लोकोऽस्ति । न च परः स्वर्गापवर्गलक्षणो दृष्टः । ततश्च सुखमपि तस्य नास्ति । संशयितस्य हि वैद्यादिना[3] आप्तेनोक्त[4]व्याध्यादिप्रतीकार[5]हेतौ भेषजादौ सन्दिह्यमानमतेर्व्याध्यादिनाशाभावादयमेव लोको नास्ति, कुतः परः[6], सुखं वा लोकद्वयोपभोग्य[7]मिष्टफलं भविष्यति ?

यः[8] पुनरेतद्व्यतिरिक्तलक्षणः[9], तम्—

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥**

योगेन यथोक्तेन ज्ञानसंस्कृत[10]कर्मसमाधिना संन्यस्तानि अनित्यसुखात्मकफलाभिसन्धिविरहात् त्यक्तानि क्रियमाणान्येव तिरस्कृतानि कर्माणि[11] येन तादृशम्;

---

१. BS² adds सर्वत्र
२. BN² बुद्धेनायं
३. IO वैश्या-
४. IO and BN² उक्तं
५. BN² प्रतीकारं
६. All except BS² परम्
७. All except BN² भोग
८. BN² यतः
९. BN² लक्षणस्तत्र
१०. IO and BS² omit ज्ञानसंस्कृत
११. BN² ; कर्म येन

तथा ज्ञानेन सदसत्पदार्थनिश्चयप्रतिपत्तिरूपेण यथोक्तेन बोधेन संछिन्नः निकृत्त-मूलः संशयः सन्देहो येन तं तादृशम्। अतः सत्यात्मप्रतिपत्तिवशादात्मवन्तं न कर्माणि शुभाशुभानि निबध्नन्ति, सुखदुःखलक्षण[1]फलदानेन न[2] स्वतन्त्रीकुर्वन्ति ॥

यत एवम्—

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः[3] ।
छित्त्वैनं[4] संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

॥ इति चतुर्थोऽध्यायः ॥

तस्मात्[5]प्रबन्धप्रतिपादितात् कारणात्। योगं शास्त्रविहितेषु कर्मसु यथोक्तज्ञानसंस्कृतेषु समाधिं यथोक्तमातिष्ठ समाचर। अत्रोत्तिष्ठ प्रोद्युक्तो भव। किं कृत्वा? एवं सर्वदोषैकहेतुं संशयं यथोक्तेन ज्ञानखड्गेन छित्त्वा मूलादेव निर्पाट्य[6]। कीदृशम्? हृत्स्थं हृदयगतमज्ञान[7]संभूतं मोहप्रभवम्। अनेन हृदयगत[8]त्वेन मोहप्रभवत्वेन चादूरवर्तित्वमसारमूलत्वं च सुच्छेदत्वप्रतिपादनार्थमेतदुक्तमित्योम् ॥

---

१. BN[2] omits लक्षण
२. BN[2] omits न
३. BN[1] and BN[2] आत्मना
४. IO and BS[2] एवं
५. BS[1] and BN[2] omit प्रबन्ध
६. BN[2] and BS[2] निपात्य
७. IO omits अज्ञानसंभूतं
८. BN[2] गतेन

कल्याणैकनिकेतनस्य जगतां घोराघविध्वंसिनो
धर्मस्यास्य सुरापगाम्भस इव ब्रह्मात्मकस्योद्भवम् ।
आख्यायात्मन एव यत्र भगवान् पार्थाय मायातिगं[1]
स्वं माहात्म्यमसूचयत्स विवृतोऽध्यायश्चतुर्थः क्रमात् ॥

इति श्रीमद्राजानकरामविरचिते[2] वाक्यार्थान्वयमाते
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
चतुर्थोऽध्यायः ॥



१. IO सर्वातिगं
BN² and BS² note this as an alternative reading.

२. BN² रामरचिते
BS² रामकविरचिते

## ॥ अथ पञ्चमोऽध्यायः ॥

---

अथ द्वितीयाध्यायपरिसमाप्तौ बुद्धिप्रशंसावाक्यानि, प्राक् च कर्मयोग-वचनानि श्रुत्वा तेषां च परस्परविरुद्धत्वं मन्यमानेनार्जुनेन

"ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन"

इत्यादिना प्रश्नो यः कृतोऽभूत्, स भगवता यद्यपि निर्णीत एव [1]तृतीये, तथापि चतुर्थाध्यायपरिसमाप्तौ—

"योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्"

इत्यत्र योगसंन्यासशब्दौ श्रुत्वा संन्यासं त्यागं मन्यमानः पुनरुत्पन्नसंशयः

**अर्जुन उवाच—**

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**[2]यः श्रेयानेतयोरेकः तन्मे ब्रूहि [3]विनिश्चितम् ॥ १ ॥**

हे कृष्ण कर्मणां त्यागं प्रशंससि स्तौषि । [4]पुनश्च तेषामेव योगम् अनुष्ठानेन स्वीकारं स्तौषि । तदेतयोर्विरुद्धयोः कर्मत्यागस्वीकारयोः संन्यासयोग-शब्देनोक्तयोर्यौगपद्येनानुष्ठानं तावन्न सम्भवति ; अतो द्वयोर्मध्यादेकं संन्यासो वा योगो वा य एव श्रेयान् प्रशस्यतरः तन्मे निःसन्देहतया ब्रूहि ॥

---

१. All except BN[2] द्वितीये
२. IO, BS[1] and BS[2] यच्छ्रेयान्
३. IO, BS[1] and BS[2] सुनिश्चितम्
४. BS[1] omits पुनश्च...स्तौषि

अथ शब्दविशेषमात्रजनितं संशयमर्जुनस्य परिहर्तुम्

**भगवानुवाच—**

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु[1] कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥**

सत्यं द्वावप्येतौ कर्मणां संन्यासयोगौ त्यागस्वीकारौ भिन्नानुष्ठातृपुरुषानुष्ठीयमानापवर्गलक्षणाभ्युदयसंपादकौ भवतः । यतः केवलज्ञानवादिनः सर्वात्मना कर्मणां त्यागेनापवर्गमिच्छन्ति, समुच्चयवादिनस्तु कर्मणामत्यागेनानुष्ठानेनेति[2] । द्वयोरपि फलश्रुतिरस्ति । किंतु तयोः संन्यासयोगयोर्मध्यात्संन्यासात्त्यागात् तमपेक्ष्य कर्मयोगो विहितकर्माचरणं विशिष्यते, उक्तवक्ष्यमाणहेतुपर्यालोचनया प्रकृष्यते ॥

यथा विशिष्यते तथाह—

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धाद्विमुच्यते[3] ॥ ३ ॥**

समुच्चयानुष्ठाता कुर्वन्नपि कर्माणि नित्यं संन्यासी यदा[सदा] त्यक्तकर्मा बोद्धव्यः । कोऽसौ? यः न किंचिद्द्वेष्टि, न किंचित्काङ्क्षति । कस्मात्स नित्यसंन्यासीत्याह—यस्मान्निर्द्वन्द्वः द्वेषाकाङ्क्षशब्दप्रतिपादितात् द्वेषरागलक्षणात् द्वन्द्वान्निष्क्रान्तः; कर्माण्यपि[4] कुर्वन् सुखमक्लेशं बन्धात्संसारलक्षणात् दुर्गान्मुच्यते, स्वयमेव मोक्षमाप्नोति । तदिदमत्र तात्पर्यम्—संसारकाराकुहरस्थानां रागद्वेषावेव दुरुच्छेदौ

---

१. BN[1] omits तु
२. BN[1] and BN[2] omit इति
३. BS[1] प्रमुच्यते
४. BN[1] कर्मण्यपि

बन्धनपाशौ, तावेव यथोक्तात्मज्ञानासिना येन छिन्नौ, तस्य क्रियमाणान्यपि कर्माणि अकृतकल्पानीत्यसौ नित्यसंन्यासीत्युक्तः। यस्तु परिहरन्नपि कर्माणि रागद्वेषौ छेत्तुं न प्रभवति, स संन्यस्तकर्मापि[१] कर्मकृदेव, तत्कृतस्य तत्फलस्य बन्धस्याविरामात्। यथा च सर्वकर्मणां परित्यागेऽनुपपत्तिः[२], केषांचन वा त्यागे बन्धकारणभूतरागद्वेषानुपरमः, तथा प्रागेव भूयोभूयः प्रतिपादितं प्रतिपादयिष्यते च ॥

इत्थं च समुच्चिते ज्ञानकर्मणी प्राक्साङ्ख्ययोगशब्दाभ्यां ये प्रतिपादिते, त एव संन्यासयोगशब्दाभ्यामुक्ते; ततः किं ते संशयकारणमित्याह—

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

साङ्ख्यं यथाप्रतिपादितात्मतत्त्वज्ञानम्। योगः तद्[३]विरहविधानविहितबन्धसामर्थ्यानां विहितानां कर्मणामनुष्ठानम्। तौ नित्यमन्योन्यावियोगप्रतिलभ्यसंपूर्णस्वरूपत्वादभिन्नौ। बालास्तत्त्वज्ञानव्यवहारव्युत्पत्तिरहितत्वाद्बालिशाः। पृथक् भिन्नपुरुषानुष्ठेयतया विविक्तावस्थानौ। प्रवदन्ति व्याचक्षते। न तु पण्डिताः परमार्थविदः। यत एकमपि साङ्ख्यं योगं वा सम्यग्यथाप्रतिपादितेन रूपेणास्थितः समाश्रितः[४] पुमान् उभयोर्द्वयोरपि साङ्ख्ययोगयोः फलं कैवल्यलक्षणं विन्दति लभते। किमुक्तं भवति? यथोक्तसाङ्ख्य[५]परसंज्ञविज्ञानसमाश्रयणं[६] प्रबन्धप्रतिपादितोपपत्त्या यथाविहितकर्मानुष्ठानरूपं योगमन्तरेण यथोक्तफलपर्यवसायि न भवत्येव ॥

---

१. IO omits अपि
२. BN[2] त्यागानुपपत्तिः
३. BS[1] and BN[2] तद्विरह
४. IO adds सन्
५. BN[1] संख्यापर
६. IO श्रयण

योगोऽपि साङ्ख्यरहितस्तथैवेति तदेव द्रढयितुमाह—

**यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरनुगम्यते ।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

साङ्ख्येन ज्ञानेन सम्बद्धाः पुरुषा लक्षणया साङ्ख्या इत्युक्ताः । तद्वत् योगसम्बन्धाद्योगाः[1] । तैरेवंविधैः सांख्यैर्यथोक्तज्ञानवद्भिर्यत्स्थानं विश्रान्तिपदं प्राप्यते, निरुत्तरोपेयतया समाश्रीयते, तदेव योगैरनुगम्यते, पश्चात्कालतया स्वीक्रियते । ज्ञानपूर्वत्वादनुष्ठानस्य यत्साङ्ख्यैः प्राप्यते, तद्योगैरनुगम्यत इत्युक्तम् ; न पुनः कैवल्यलक्षणैकफलसम्पादने तुल्यहेतुत्वात्तयोर्भेदोऽस्ति । ततः साङ्ख्यं योगं चैकमेव यः पश्यति जानाति[2] स एव पश्यति । तस्यैव सज्ज्ञानात्मिका[3] दर्शनशक्तिः, न तु यो ज्ञानेन केवलेनैव मोक्षः कर्मयोगेन सर्वेणापि बन्ध इति पश्यति ॥

तदाह—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

अयोगतः[4] अयोगात् । यथोक्तनीत्या कर्मानुष्ठानसमाधानाद्विना संन्यासः पुनर्बन्धसम्बन्धाभावफलः कर्मत्यागः प्राप्तुमासादयितुं दुःखम्, कृच्छ्रेणाप्यते[5] इत्यर्थः ।

---

१. BS[1] योगैः
२. IO omits जानाति
३. BS[1] अज्ञानात्मिका
IO संज्ञानात्मिका
BS[2] notes as an alternative reading संविज्ञानात्मिका
४. IO अयोगातो
५. IO, BS[2] and BN[2] कृच्छ्रं

यस्माद्योगयुक्तः योगे[1] कर्मसमाधौ युक्तो[2] यथोक्तज्ञानैकतानतया नित्य[3]सम्बद्धः सन् मुनिर्भूत्वा शीघ्रमेव ब्रह्म परमात्मलक्षणं परं तत्त्वमधिगच्छति । किमुक्तं भवति? ज्ञाननिष्ठत्वेन स्वकर्मानुष्ठानं मुनित्वकारणम्, ब्रह्मप्राप्तिलक्षणस्य फलस्य [4]च्छलाविसंवाद्युपायभूतत्वात् । [5]न तु केवलं ज्ञानमात्रम्, सर्वात्मना [6]कर्मत्यागानुपपत्तेः, तस्यानुपायत्वात् ॥

[7]कस्माद्योगयुक्तस्यैव ब्रह्म सुप्रापमित्याह—

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

यतो योगयुक्तः कुर्वन्नपि कर्माणि न लिप्यते, ततो न चिरेण ब्रह्माधिगच्छतीति सम्बन्धः । तदेतद्व्याख्यायते । योगे ज्ञानकर्मसमुच्चयानुष्ठानसमाधौ युक्तस्तत्परतया नित्यसमाहितो योगी संसारिपुरुषाविशेषेण समाचरन्नपि स्वकर्मबन्धहेतुना तत्फलेन सुखाद्यात्मना न लिप्यते न मलिनात्मतां नीयते, यतोऽसौ विशुद्धात्मा अहंप्रत्ययैकलक्षणो[8]ऽयं निसर्गनिर्मलचिन्मात्रस्वरूप आत्मा तस्यैतावत्यशुद्धिः यदनाद्यविद्यावशाद्द्वयैकस्वरूपे जात्यादिविविधावच्छेदभाजि प्रतिनियते देहमात्रे स्वात्मप्रतिपत्तिः तदभावमात्रमेवास्य विशुद्धिः । इत्थं विशुद्ध आत्मा यस्य

---

१. $BN^2$ योगी
२. IO, $BS^1$ and $BS^2$ मुक्ते
३. $BN^2$ नित्यं
४. IO अच्छविलाविसं
५. IO omits न तु...पायत्वात् $BS^2$ and $BN^2$ read it in the margin.
६. $BN^1$ and $BN^2$ omit कर्म
७. IO omits कस्मात्
८. $BS^1$ लक्षणो यो

स तथाविधः सत्यस्वभावप्रतिष्ठिताहम्भावतया प्राप्तस्वाभाविकप्रसाद इत्यर्थः। ततश्च विजितात्मा जितेन्द्रियश्च[1]। अत्रात्मेन्द्रियशब्दाभ्यां ज्ञानक्रियाप्रपञ्चो विवक्षितः, स उभयात्मापि[2] विजितः, स्वशक्तित्वेन स्वेच्छाविधेयप्रवृत्तिनिवृत्तित्वाद्वशीकृतो येन स[3] पदद्वयेन तथोक्तः। एवं हि योगयुक्तः कर्मयोगी शुद्धात्मा सत्क्रियासु वर्तमानो[4]ऽपि मन्यते। येयमकृत्रिमप्रकाशात्मकस्वभावपरामर्शैकरूपा ममाव्यतिरिक्ता शक्तिः सा[5] एव स्वेच्छानिर्मितज्ञेयकार्यस्वभावविषयप्रकाशनाय प्रसरन्ती ज्ञान-क्रियाभेदेन द्विप्रकारतयावभासते। तस्याश्च ज्ञानरूपो यो भेदः सोऽन्तःकरणवर्गः, यः क्रियारूपः स बहिष्करणवर्ग इति। सूर्यस्य यथा प्रभारूपा शक्तिः किरण-चक्रात्मनावभासते, तथैवेयं मम[6] शक्तिरेवान्तःकरणबहिष्करणभावेन[7] विजृम्भते। न च प्रकाशमानत्वेन[8] सम्बद्धैराभ्यन्तरबाह्यरूपैर्विषयैः कलुषीकर्तुं पार्यते। न हि दिनकरकिरणाः प्रकाश्यैर्नीलपीतादिभिर्भावभेदैः स्वाभासेनोपरञ्जयितुं[9] शक्यन्ते। स्वतन्त्रा एव तान् प्रकाशयन्ति। [10]तथैवैते अन्तःकरणबहिष्करणरूपाः[11] शक्तिभेदा मम इत्येवं विजितात्मा जितेन्द्रियश्च॥

नन्वेवमपि विशुद्धात्मतादिव्याख्यातविशेषणविशिष्टत्वं नोपपद्यते। कर्म-योगिनो यतो विषये[12] प्रवृत्तिः, तेभ्यश्च निवृत्तिः उपादेयत्वं हेयत्वं च विना न

---

१. BN² omits च
२. IO omits अपि
३. IO omits स पदद्वयेन
४. BN² प्रवर्त
५. All except BN¹ स
६. IO adds स्वरूपं
७. BN¹ and BN² add स्व
८. IO प्रकाशमानेन
९. BN² स्वभासेन
१०. BN² तथैव ते
११. BS¹ omits बहिष्करण
१२. IO and BS² येषु

सम्भवति, तत्सम्भवे च रागद्वेषकलङ्को दुर्निवारः; तस्मिन् सति कुतो विशुद्धात्मत्वादीनि[१]? अत्र परिहारार्थं हेतु[२]गर्भं विशेषणमाह—सर्वभूतात्मभूतात्मा इति। सर्वाणि भू[३]तान्यशेषाः स्थावरजङ्गमा विषयभावमापन्नाः पदार्थाः; तेषामात्मभू[४]तः स्वरूपत्वं प्राप्त आत्मा स्वभावो यस्य स तथाविधः। किमत्र तात्पर्यम्? कर्मयोगी कि[५]ल येषु विषयेष्वन्तर्बहिष्करणवृत्तिद्वारेण प्रवृत्तिनिवृत्ती भजते, तेषु तस्य यथोक्तज्ञाननिष्णातप्रज्ञत्वादेवंविधासु स्थिरा प्रतिपत्तिः। यथा य इमे चेतनाचे[६]तनरूपाः पदार्था विषयभावमापन्नाः ते संवेद्यमानताव्यतिरेकेण न तत्तत्स्वरूपं प्रतिल[७]भन्ते। ततः स्वसंविदेव तेन तेन रूपेणावभासते। तत्त्वतो नैतद्वस्त्वन्तरं किंचिदिति परमेश्वरप्रसादापनीतमायातिमिरत्वादेकस्मिन् परमार्थसत्यात्मतत्त्वे निर्वृते निवृत्तद्वित्वावभासविभ्र[८]मया सम्यग्दृशा सर्वमन्तःकरणबहिष्करणविषयात्मकं पदार्थजातं पर[९]मात्मस्वरूपादत्यन्तमभिन्नतया निभालयन् योगयुक्तः सहजासु शास्त्रविहितासु क्रियासु प्रवर्तमानो न शुद्धात्मत्वादिविशेषणव्यभिचारं भजते॥

---

१. BN² त्वादन्यत्र

२. IO omits this word.

३. IO भूतानि शेषाः
BN¹ and BN² भूतान्यशेषाणि

४. BN¹ and BN² भूताः
BS² भूततत्स्वरूपत्वं is noted as an alternative reading.

५. IO omits किल

६. BN² omits अचेतन

७. BN, BS¹ and BS² प्रतिलम्बन्ते

८. IO विभ्रमायाः

९. BS² परमार्थस्वरूपात् is noted as an alternative reading.

तमेतं कर्मयोगिनः समाधिमासन[1]प्राणजयप्रत्याहाराद्यभ्यासपरिकर्मनिरपेक्षं यथोपस्थितविषयसंस्पर्शेऽप्यविलुप्त[2]परवैराग्यं सर्वथा[3] सर्वस्य सुलभपरमात्मप्रतिष्ठालाभलक्षणं[4] निरतिशयरूपं[5] फलं वितत्य प्रतिपादयितुमाह—

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्छ्वसन्[6] ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

अतोऽसौ युक्तो व्याख्यातस्वरूपः कर्मयोगसमाहितः कुर्वन्नपि न लिप्यते, यतो नैव किंचित्करोमीति मन्यते । सर्वासु क्रियासु लोकवद्वर्तमानोऽपि नैष्कर्म्यफलमेव प्रतिपद्यते—इति सम्बन्धः । किं कुर्वन्नेवं मन्यते ? पश्यन्नित्यादिना सर्वेन्द्रियवृत्तीः प्राणवृत्तीश्च[7] प्रवर्तयन्नपि इति । धारयन् एवंविधामस्य कर्मयोगस्य यथोक्तफलप्राप्त्युपायभूतां धारणामुद्वहन् । कथम् धारयन् ? दर्शनादिक्रियासु प्रवृत्तान्यपि इन्द्रियाणि प्राणाश्च इन्द्रियार्थेषु स्वेषु स्वेषु विषयेषु वर्तन्ते[8], सम्बन्धमात्रं तैरनुभवन्ति[9]; न तु तेषु स्वविषयसम्बद्धेषु नित्यनिरतिशयचित्प्रकाशस्वभावस्य मम लोकवद्राग-

---

१. BN[1] and BN[2] आसन्न
२. IO लुप्त परं
३. IO omits this word.
४. IO and BN[2] लक्षण
५. IO, BN[2] and BS[2] omit रूपं
६. BN[1] स्वपन् जपन्
BN[2] स्वपन् स्वपन्
IO श्वसन् स्वपन्
BS[2] श्वसन् जपन्
७. IO omits च
८. IO वर्तते
९. IO भवति

दिकलङ्कस्पर्शोऽन्तः सम्भवतीति। "पश्यन्" इत्यादिना "निमिषन्" इत्यन्तेन ग्रन्थेन सर्वेन्द्रियप्राणवृत्तयः संगृहीताः । तथा च बुद्धीन्द्रियवृत्तयः श्रवणस्पर्शनदर्शनरसनघ्राणरूपाः क्रममनपेक्ष्य "पश्यन्" इत्यादिना "अश्नन्" इत्यन्तेन पदपञ्चकेन प्रतिपादिताः। एवमेव वचनग्रहणगमनविसर्गप्रजननरूपाः[2] कर्मेन्द्रियवृत्तयः 'प्रलपन् गृह्णन् गच्छन् विसृजन्' इति[3] पदचतुष्टयेन प्रतिपादिताः। यतः 'विसृजन्' इति पदेन विसर्गजननरूपे[4] द्वे वृत्ती प्रतिपादिते[5]। 'स्वपन्' इत्यनेन मनोवृत्तिः[6] प्रतिपादिता; स्वापावस्थायां हि मन एव वृत्तिमनुभवति, नेन्द्रियाणि। 'उन्मिषन्निमिषन्' इति पदद्वयेन बुद्धिवृत्तिः प्रतिपादिता, निश्चयात्मिका हि बुद्धिवृत्तिरिति। सा[7] भावविषयत्वेन भवन्ती उन्मेष[8]शब्देनोक्ता; अभावविषयत्वेन भवन्ती[9] निमेषशब्देन। भावाभावौ हि बुद्धिवृत्तिरेव निश्चिनुते। अहङ्काररूपा तु वृत्तिः 'पश्यञ्छृण्वन्' इति कर्तृतया व्यपदिष्टे पुरुष एव वर्तते—इत्येता अन्तर्बहिष्करणवृत्तयः। 'श्वसन्' इत्यनेन प्राणवृत्तिः प्रतिपादिता, प्राणधारणमेव हि श्वसनमिति[10]। तदिदमस्य वाक्यस्य तात्पर्यम्—"यस्मिन् सर्वम्" इति व्याख्यातस्वरूपस्य परस्य तत्त्वस्यात्मन एव परमेश्वरस्य तादृक्स्वभावपरामर्शमात्रात्मिका या शक्तिरव्यतिरिक्ता सैव तदिच्छावभासितज्ञेयकार्यात्मकजगत्क्रीडनकविषयत्वेन प्रसरन्ती तन्मायाजनितविपर्ययदर्शनानां सांसारिकपुरुषाणां

---

१. IO omits प्राण
२. BN² प्रजनरूपाः
३. BN¹ and BN² add आदि
४. BS² and BN² प्रजनरूपे
५. BN¹, BN² and BS¹ प्रतिपाद्यते
६. IO adds न
७. BN¹ and BN² स्वभाव
८. IO उन्मिष
९. BS² adds इति
१०. IO श्वसन्निति

सङ्ग्रहेण ज्ञानक्रियारूपा[1] अन्तर्बहिष्करण[2]प्राण[3]वृत्तिभेदेन चतुर्दशमार्गप्रसृतत्वेनावभासमाना संसारबन्धहेतुत्वेन पर्यवस्यति; परमेश्वरानुग्रहादेव[4] उन्मिषितपरिमृष्टद्वैतकलङ्कनिर्मलनिजज्ञानचक्षुषां [5]सर्वव्यवहारव्यापृतानामपि यथोक्तस्वभावमात्रपरामर्शैकरूपतया यथोक्तकर्मयोगिनामवभास[6]माना परमात्मसमापत्तिलक्ष[7]णमोक्षफलप्राप्त्यर्थमेव कल्पते इत्यतो युक्तो नैव किंचित्करोमीति मन्यते इत्याद्युक्तम् ॥

इदानीमेतदेव प्रकटयितुमाह—

**ब्रह्मण्या[8]धाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

ब्रह्मणि परमात्मनि सर्वाणि क्रियमाणानि कर्माण्या[9]धाय तच्छक्तित्वेन विनिवेश्य, अत एव [10]सङ्गं [11]स्वरूपव्यतिरिक्तत्वेनावभासमानेषु विषयेषु निमग्नचित्तत्वं लौकिकं [12]त्यक्त्वा यथोक्तया ज्ञानदृशा परमेश्वरभावानुप्रविष्टो यः करोति, सर्वाः क्रियाः समाचरति, स लौकिकवत् पापेन कर्मफलरूपेण सुखाद्यात्मना न लिप्यते, न

---

१. BS[1] adds अपि
२. BN[1] omits प्राण
३. BN[2] प्रवृत्ति
४. BS[2] and BN[2] add तु
५. IO सर्वस्य
६. IO मानपर
७. BN[2] लक्षणा
८. IO and BN[2] आदाय
BS[2] notes this as a reading.
९. IO and BN[2] आदाय
१०. BN[1] and BN[2] सङ्ग
११. IO adds स्वरूपसङ्गं
१२. BN[1] and BS[1] omit this word.

कलुषीक्रियते । कथम्? अम्भसा सलिलेन निर्व्यवधानतया सुसंश्लिष्टमपि कमलदलमिव ॥

यत एवमतः—

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मसिद्धये[1] ॥ ११ ॥

कायग्रहणेन कर्मेन्द्रियाणि, मनोबुद्धिग्रहणेनान्तःकरणम्, इन्द्रियग्रहणेन बुद्धीन्द्रियाण्यत्र गृह्यन्ते । एतैः केवलैस्तद्विषयादहङ्काराद्यपरिग्रहाद्विशुद्धैः पृथग्भूतैर्वा कर्म यथास्वं व्यापारं शास्त्रचोदितया शरीराद्यव्यभिचारितया च दुस्त्यजं योगिनः कर्मयोगसमाहिताः कुर्वन्ति अनुतिष्ठन्त्येव; किंतु यथोक्तस्य सत्यस्यात्मनः सिद्धये अहन्तया प्रतीतिनिष्पत्तये सङ्गं त्यक्त्वा कुर्वन्ति । किमुक्तं भवति? सङ्गत्याग एव संन्यासः, न कर्मत्यागः ॥

स च सङ्गत्यागः कर्मफलत्यागात्प्रबन्धप्रतिपादिताद् भवतीत्याह—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

यो ज्ञाननिष्ठतया कर्मणि युक्तः सन् अनभिसन्धानेन कर्मफलं त्यक्त्वा नैष्ठिकीं निष्ठायां परस्यां काष्ठायां स्थितां[2] शान्तिं द्वैतप्रत्ययलक्षणक्षोभरहितसत्यात्म-

---

१. BN[1] and BN[2] शुद्धये. BS[2] notes this as an alternative reading.

२. BN[1] and BN[2] स्थितं

स्वरूपविश्रमात्मकं प्रशमं समधिगच्छति। यस्तु निसर्गदुस्त्यजे कर्मणि सर्वदा प्रवृत्तस्सन् युक्तो न भवति, यथोक्तेन क्रमेण समाहितो न भवति, सोऽवश्यमेव फलसङ्गित्वाद्बध्यते संसारे नियम्यते ॥

अथैवंविधयोः कर्मयोगसंन्यासयोरध्यायेऽस्मिन् प्रबन्धप्रतिपादितयोरुपसंहारावसरे स्वरूपानुवादपूर्वं तदनुष्ठातुर्नैष्ठिकीं फलसिद्धिं स्फुटीकर्तुमाह—

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देहे नैव कुर्वन्न कारयन् ॥ १३ ॥

इह मनःशब्देन बुद्धिरेव विवक्षिता ; तच्च द्विविधं मनः, लौकिकं योगिसम्बन्धि च; तत्राचिन्त्येश्वरमायाशक्तिवशादुद्भूतद्वैतप्रत्ययतिमिरमयं लौकिकम्, येन लोक एकमेव परमार्थसतत्त्वं नानात्वेन मन्यते। योगिसम्बन्धि तु येन भगवदनुग्रहाविर्भावितविद्याशक्तिविमलीकृतेन योगिनः सर्वभावान् यथोक्तपरमात्मैकरूपतया मन्यन्ते, तदेवंविधमुभयात्मकत्वं मनसो मुनिनैवानुगीतासु भगवद्वचसैवार्जुनबोधायैवेतिवृत्तविरचनक्रमेण प्रदर्शितम्, यदाह—

"उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम्।
आवयोः श्रेष्ठमाचक्ष्व छिन्धि नो संशयं विभो ॥

---

१. BS[2] विश्रामा
२. BS[1] and BN[2] विसर्ग
३. All except BS[1] omit यथो... न भवति
४. BN[1] वध्यते
५. IO omits संसारे नियम्यते
६. BN[1] and BN[2] omit योग
७. BN[1] सत्तत्वं
८. BS[2] योग
९. BN[1] and BN[2] भूत्वात्मानं

मन इत्येव भगवांस्तदा प्राह सरस्वतीम् ।
अहं कामदुघा तुभ्यमिति तं प्राह वागथ ॥"

स तामाह—

"स्थावरं जङ्गमं चैव विद्धि[1]युभे मनसी मम ।
स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥" इति ।

एवंविधेन सुस्थिरपरमात्मस्वरूपमनन[2]नैकनिष्ठत्वात् स्थिरतया स्थावर-शब्दोक्तेन परमेश्वराभ्या[3]सवशवर्तिना मनसान्तःकरणेन सर्वकर्माणि चित्तवाक्काय-निर्वर्त्याः सर्वाः क्रियाः शास्त्रचोदिताः शरीराव्यभिचारिणीश्च संन्यस्य बन्धहेतु-नाना[4]फलाभिसन्धित्यागाद्ब्रह्मण्येव निक्षिप्य तेनैव क्रमेण वशी जितात्मा स्वीकृत-स्वभावः सन् कर्मयोगी सुखमास्ते जोषमवतिष्ठते, निसर्गनिवृत्तनिखिलक्लेशसम्पर्क-निरुत्तरानन्दमये स्वात्मनि विश्राम्यतीत्यर्थः। कीदृशः सन्नास्ते? अस्मिन्नेव पुरे देहे एव अधिष्ठानसामान्याद्गृहत्वेन निरू[5]पिते। अत एव कीदृशे? नवद्वारे; चक्षुःश्रोत्र-घ्राणछिद्राणि षड्द्वाराणि दर्शनश्रवणघ्राणक्रियाप्रवृत्तिवर्त्मानि; त[6]था मुखपायूपस्थानि त्रीणि रसनविसर्गक्रियाप्रवृत्तिवर्त्मानि इति नवद्वाराणि, यस्मिन् तत्राद्वयचिन्मात्र-परमात्मस्वभावविश्रान्तत्वात् सर्वाः क्रियाः सर्वाणि कार्याणि स्वरूपमात्रत्वेन प्रति-

---

१. BN¹ विद्ध्यते
BN² विद्धेते. These two readings are probably mistakes for विद्ध्येते

२. BN², BN² and BS² omit मनन

३. IO and BN² अभ्यास

४. BN¹ omits नाना

५. BN¹ निरूप्यते

६. IO, BN² and BS² omit तथा...वर्त्मानि

पद्यमानो न कुर्वन् इतरशरीरिवत् कर्माभिमानमनैनुभवन्। केचित्किल प्रतिशरीरं भिन्नान् शरीरिणः स्वाभाविकेन प्रतिनियतेन कर्तृत्वेन युक्तान्मन्यन्ते; तथा न कारयन्नान्यान्प्रयोजयन्; अपरे हि केचन सन्निधिमात्रेण जडायाः प्रकृतेः क्रिया-प्रवृत्तौ प्रयोजकमात्मानं मन्यन्ते। अस्य तूभयथापि कर्तृत्वं प्रतिषिध्यते॥

अयं हि परमात्मसमापन्नत्वान्न करोति न कारयति; अत एव परमात्म-स्वरूपं सारयन्नाह—

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥ १४॥**

यस्मादद्वयचिन्मात्रैकस्वभावप्रैतिष्ठत्वात्प्रभुरीश्वरः परमात्मा वास्तवेन रूपेण लोकस्य तन्मायामहिमोद्भावितपरभेदस्य जीववर्गस्य न कर्तृत्वम्; तासु तासु क्रियासुँ प्रतिनियतफलास्वनुष्ठातृत्वं सृजति; नापि पुण्यपापलक्षणानि कर्माण्यसौ कस्यचित्सृजति; नैँ च सुखाद्यात्मकैः तत्फलैः संबन्धम्; अतस्तत्स्वरूपसमापन्नः कर्मयोगी तादृश एव भवतीति पूर्वश्लोकेन सङ्गतिः॥

ननु यद्येवं यथोक्तस्वरूपमात्रनिष्ठत्वादीश्वरो न करोति न कारयति, तत्कुतोऽयं जगद्व्यवहार इत्याह—स्वभावस्तु प्रवर्तत इति। स्वभावशब्देन प्रकृत्य-

---

१. BS[1] अनुभवत्
२. IO प्रतिष्ठित्वात्
३. IO, BN[2] and BS[2] add प्रति-नियतासु
४. BS[1] omit न च...संबन्धं

परपर्याया मायाशक्तिरेवाचिन्त्यस्वरूपोच्यते। सा प्रवर्तते, अनन्तभावभेदोद्भूत-विचित्रजगद्गन्धर्वनगरावभासनाय प्रसरति। सा हि वास्तवसर्वभावाभेदाख्यातिमात्र-जीविता प्राक्प्रतिपादितया अविद्यया[1] सर्वमिदमाभासयति। एवमवभासमान-मप्येतत्तत्त्वज्ञानदृशा परामृश्यमानं यथोक्तपरमार्थ[2]परमात्मस्वरूपान्न व्यतिरिच्यते॥

ततः परमेश्वरस्य प्रतिनियतकार्यकर्तृत्वादिः न वास्तवो धर्मः; तस्मान्माया-कृत एव बन्धमोक्षविभ्रमोऽयमिति प्रतिपादयितुमाह—

नादत्ते कस्यचित्पापं न चैवं[3] सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ १५॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥ १६॥

विभुः यथाप्रतिपादितस्वरूप ईश्वरो न कस्यचिज्जन्तोः परमार्थतः पापं बन्धकारणभूतं कल्मषमादत्ते [4]अपहरति, येनासौ जन्तुस्तदपहरणादपवर्गलक्षणं श्रेयः प्राप्नोति। न च मोक्षकारणं सुकृतं कस्यचिदादत्ते, येनासौ [5]तदादानात्संसार-बन्धलक्षणमश्रेयः प्राप्नोति। कस्तर्हि बन्धहेतुर्जन्तूनां मोक्षहेतुर्वेत्याह—अज्ञानेन पारमार्थिकपरमात्माभेदाप्रथनमात्रस्वरूपेण ज्ञानाभावेन मिथ्याज्ञानेन सन्तमसेनेव;

---

१. BN[1] and BN[2] अनित्यया
२. BS[2] notes परमार्थ as an alternative reading.
३. BN[2] न चैवं
४. BS[1] परिहरति
५. IO तदादा[तदादानादा]त्मानं संसार

पदार्थस्वरूपं ज्ञानं यथाप्रतिपादिततत्त्वप्रथनात्मको[1] बोधः; आवृतं संप्रति तिरस्कृतम्; तेन हेतुना सर्वप्राणिनः मुह्यन्ति शरीरादावात्मप्रतिपत्तिग्रहणलक्षणविपर्ययज्ञानमेय[2]-दृष्ट्यो बन्धमनुभवन्ति। येषां पुनस्तद्यथाप्रतिपादितमज्ञानं यथोक्तेनात्मनो ज्ञेयस्य तत्त्वस्य ज्ञानेन नाशितमपध्वंसितम्, तेषां परमेश्वरानुग्रहाद् यथोक्तकर्मयोग-संन्यासानुष्ठानाधिकृतानां योगिनां तज्ज्ञानं परं प्रकृष्टमुपेयं परमात्मस्वरूपलक्षणं वस्तु प्रकाशयति प्रथयति। कथम्? आदित्यवत्। य[3]थादित्यो भगवान् समयाभ्युदितः सन् दुर्निवारमपि सान्द्रमन्धकारं प्रभामात्रेण पर्यस्यन् दृश्यं वस्तु सर्वं निःसंशयतया प्रकटीकरोति, तथैव ज्ञानमेतदीश्वरानुग्रहेच्छावसरोन्मिषितं सत्स्वरूपतिरोधान-कारणमज्ञानं तिरस्करोतीत्युपमानार्थः ॥

तदेवंविधं यत् परवस्तुप्रकाशात्मकमज्ञानध्वंसकं च ज्ञानम्, तदभ्यासफल-प्रतिपादनायाह—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञान[4]निर्धौतकल्मषाः ॥ १७ ॥

बुद्धिर्नाना[5]भूतबोध्यवस्तुसाधनभूतं कारणं प्राधान्यात्। तया समस्तः करणवर्ग उपलक्षितो बोद्धव्यः। आत्मशब्देन च बोद्धा पुरुष उच्यत इति। तत्र यथोक्ते ज्ञाने एव पर्यवसिता बुद्धिर्येषां ते त[6]द्बुद्धयः। तथा तत्रैव ज्ञाने आत्मा येषां ते

---

१. BS[1] त्मके बोधे
२. IO, BN[1] and BN[2] omit मय
३. BS[1] and BN[2] तथा
४. BS[2] निर्धूत is noted as an alternative reading.
५. IO and BS[2] omit भूत
६. IO and BN[2] omit तद्बुद्धयः... येषां ते

तदात्मानः, यथोक्तज्ञाननिष्ठाहंप्रतीतय इति सकललोकव्यवहारनिबन्धनं बुद्ध्यात्मलक्षणं द्वयमद्वैतज्ञानमयं येषां ते तथाविधाः। तथा निष्ठाशब्देन परमोपेय[1]वस्तुसीमात्रोच्यते। परायणशब्देन च तत्प्राप्त्युपायो विवक्षितः, येन तत्परः[2]। यत इति तज्ज्ञानं यथोक्तं निष्ठा येषां ते तन्निष्ठाः। तदेव परायणं येषां ते तत्परायणाः—इत्युपेयोपायलक्षणं[3] द्वयं योगिव्यवहारविषयम्। यथोक्तज्ञानात्मकमेव येषां ते एवंविधाः तत्त्वज्ञाननिबन्धनसकलसंसारापवर्गविषयपदार्थमात्राः[4]; अत[5] एवंविधेन ज्ञानेन निर्धौतं निःशेषेण प्रक्षालितमज्ञानरूपं कल्मषं पापं येषां ते तथाविधा योगिनः। अपुनरावृत्तिं गच्छन्ति, अभूयःसम्भवं मोक्षमाप्नुवन्तीत्यर्थः॥

अथेदृशानां योगिनां सकललोक[6]विलक्षणां चित्तवृत्तिं प्रतिपादयितुमाह—

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥ १८॥**

विद्या शास्त्रम्; विनयः तदर्थानुष्ठानविषयो नियमः[7]; ताभ्यां संपन्नः[8] समृद्धो यो ब्राह्मणः, तस्मिन्। तथा गवादिषु तिर्यक्षु भयाहारमैथुनमात्रपर्यवसित-

---

१. BS² परमे परमोपेय
IO परमेय

२. BN¹ तत्परमप्यत इति
BN² तत्परमगम्यते व्यते इति

३. IO and BS² लक्षण

४. IO, BN¹ and BN² सार्थाः

५. BN¹, BN² and BS² add एवं

६. IO, BS¹ and BN¹ लोकाविलक्ष-

७. IO, BN² and BS² नियमविशेषः

८. All read संबद्धः. The reading given above is noted as an alternative one in BS² alone.

सर्ववृत्तिषु ; तथा श्वपाके मनुष्यभावेऽपि तिर्यक्प्राये ; पण्डिता यथोक्ततत्त्वज्ञान-प्रबुद्धाः ; समदर्शिनः समं सामान्यमेकमशेषविशेषणासंस्पृष्टस्वभावं चिन्मात्रं द्रष्टुं प्रतिपत्तुं शीलं येषां ते तथाविधाः । किमनेनोक्तं भवति ? ये समुज्जृम्भितदिव्यज्ञान-चक्षुषः ते मायोपहत[1]दृष्टिभिर्नानात्वेन परिदृश्य[2]मानं समस्तं भावजातं ब्रह्मैकरूपतया नित्यमालोकयन्ति । न चैवं मन्तव्यम् । यथा ते ब्राह्मणादौ[3] विहितं समाचारं श्वपचादिषु प्रयुञ्जते, श्वपचादिषु विहितं ब्राह्मणादिषु इति विकर्मणि स्थिताः सन्तः पारमेश्वरीं जगद्व्यवस्थां व्युत्थापयन्ति ॥

ते[4] हि यथास्थितमेव जगद्भावविस्तारं ब्रह्मात्मकं पश्यन्ति, न तु व्युत्थान-माचरन्तीति तामेव समदर्शितां विवृणोति[5]—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ १९ ॥**

यो ब्रह्मवित् आगमतो यथोक्तब्रह्मतत्त्ववेदी स्थिरबुद्धिः[6] प्रबलैरपि विकल्पैर-प्रकम्प्यमतिः, अत एवासंमूढः हेयोपादेयवस्तुनोरसन्दिग्धबुद्धिः सन् तस्मिन् शास्त्राधिगते ब्रह्मणि परमात्मनि स्थितः सततपरिशीलनाद्विश्रान्तः स प्रियाप्रियप्राप्त्या

---

१. BS[1] उपहित
२. All except BS[2] परिमृश्यमानं
३. BN[2] ब्रह्मणादौ
४. IO omits ते हि...पश्यति
५. BN[1] and BN[2] add here the following verse:—
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥
६. BS[1] स्थिरतत्त्वबुद्धिः

प्रहर्षोद्वेगौ विषमदर्शित्वपिशुनौ संसारिपुरुषोचितौ न भजते । ततो ब्राह्मणगवादिषु पण्डिताः समदर्शिन इत्युक्तम् ॥

ईदृशे च ब्रह्मणि स्थितिः सर्वथा बाह्यविषयपरिहारेणैव भवतीति केवलज्ञानवादिनां पक्षः। स पूर्वोक्तोपपत्त्या न सम्भवति, कथंचिद्वा संभवन्नपि सच्छल इति शास्त्रविहितविषयनिष्ठतैव ब्रह्मणि स्थितिर्निर्विप्लवेति समुच्चयपक्षमेव निर्वाहयितुमाह—

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यः [यत्] सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमव्ययमश्नुते ॥ २० ॥

आत्मनि परस्मिंस्तत्त्वे स्वभावसिद्धं यत्सुखं नित्यानन्दलक्षणो धर्मः तद्बाह्यस्पर्शेष्विदन्तावधार्येषु शब्दादिष्वविरुद्धेष्वसक्तात्मा सम्यग्ज्ञानवशादात्मैकनिष्ठत्वे [2]सत्यनिमग्नान्तःकरणो [3]योगी विन्दत्युपलभते[4] । स योगयुक्तात्मा योगे कर्मसमाधौ युक्तात्मा ज्ञाननिष्ठतया नित्यनिमग्नान्तःकरणः सुखमक्लेशेनाव्ययमविच्छिन्नं कृत्वा ब्रह्म[5] परमकारणमश्नुते स्वात्मतया व्याप्नोति ॥

कथं बाह्यस्पर्शेष्वात्मवर्तिसुखं योगी विन्दतीति प्रतिपादयितुमाह—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २१ ॥

---

१. BS[2] संसारपुरु
२. BN[1] and BS[2] नित्यावहितान्तः-करणः
BN[2] सत्यनियमान्तःकरणः
३. BN[1] and BN[2] योगी...करणः
४. IO उपलमेत
५. BN[3] omits ब्रह्म

हिशब्दो हेतौ। यस्माद्ये संस्पर्शजाः शब्दादिविषयसम्पर्कजन्मानो भोगाः कामाः, ते जन्मविनाशयुक्तत्वादनित्याः सन्तः प्राप्तेषु सत्सु वियोगजस्य दुःखस्य व्यभिचारादप्राप्तेषु च प्रार्थनात्मकस्य दुःखस्याव्यभिचाराद्दुःखयोनय एव; दुःखमेव ते जनयन्ति; ततस्तेषु भोगेषु बुधो ज्ञानवान् न रमते न प्रीतिमनुभवति। किमनेनोक्तं भवति? कर्मयोगी सत्यं संसारिपुरुषवदिन्द्रियैर्विषयान् भजते; न तु तज्जनितेन सुखेनासौ सुखितो भवति ॥

स हि स्वाभाविकात्मवर्ति सुखमनुभवतीति बुधस्यैवंविधस्यैवं योगित्वं च प्रतिपादयितुमाह—

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात्[2]।**
**कामक्रोधोद्भवं वेगं स योगी स सुखी मतः ॥ २२ ॥**

य इहैवास्मिञ्छरीरे तिष्ठन् तदव्यभिचारविषयसम्बन्धवशाद्रागद्वेषादिजं संरम्भ[3]मात्मैकनिष्ठतया सोढुमवधीरयितुं देहत्यागादर्वागेव शक्नोति प्रभवति स योगी समाहितः। स च सुखी निरुत्तरानन्दलक्षणसमाधिफलत्वात्; यतः तत्त्वविदोऽन्ये हि केवलज्ञानवादिनो विषयेभ्यः पलायमाना योगमभ्यस्यन्ति, तेषामन्तरप्रेप्सुषु तेष्वाततायिषु सत्सु इहैव देहे दुर्लभो योगस्तत्फलं चेति। यदि परं ते देहत्यागे तदवाप्स्यन्ति। यस्तु कर्मयोगी सत्स्वेव विषयेष्वविलुप्तात्मस्थितिः स जीवन्नेव मुक्त इति स एव योगी, स एव च[4] सुखीत्युक्तम् ॥

---

१. BS[2] एवं
२. BN[1] BN[2] and BS[2] विमोचनात्
३. IO, BN[1] and BN[2] संदर्भ BS[2] notes this as an alternative reading.
४. IO omits च

अत एव तत्स्वरूपमाह—

अन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति ॥ २३ ॥

सुखं तत्तत्क्रियाफलभूता निर्वृतिः[1]। आरम्यतेऽस्मिन्नित्यारामः, सुखानुभवाधिकरणम्। ज्योतिः तदुभयव्यक्तिहेतुः[2] प्रकाशः; तत्त्रितयमप्यन्तरात्मन्येव यस्य स तादृशः, सर्वत्र संवेद्यमाने वस्तुनि विगलितानात्मप्रत्ययः। अत एव ब्रह्मभूतः ब्रह्म परमात्मस्वरूपं प्राप्तः। परमं योगं निरुत्तरं समाधिम[3]धिगच्छति प्राप्नोति ॥

यस्मात्—

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २४ ॥

ये महात्मानः छिन्नद्वैधाः त्रुटितद्वैतप्रत्ययात्मकसंसारबन्धशृङ्खलाः; यतः क्षीणकल्मषाः, विनष्टाखिलाज्ञानमयमहापातका ऋषयः सम्यग्दर्शिनः; अत एव स्वरूपव्यतिरिक्तं वस्तुजातमपश्यन्तः सर्वभूतानामात्मन इव हिते अनुकूले वस्तुनि रता अभिनिविष्टाः; ते निर्वाणं तापत्रयेणासंस्पृष्टत्वात्[4] प्रशान्तं ब्रह्म परं तत्त्वं लभन्ते प्राप्नुवन्ति; न तु ये व्यतिरिक्तत्वेन विषयान्मन्यमानास्तेभ्यः पलायन्ते। ते हि द्वैतबन्धादनिर्मुक्ता एव ॥

---

१. BN[2] निवृत्तिः
२. BN[2] हेतु
३. IO omits अधि
४. BN[1], BN[2] and BS[2] असंस्पृष्टे

एतदेव विशिनष्टि—

कामक्रोधविमुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २५ ॥

ये रागद्वेषादिदोषविरहितत्वेन यतचेतसः निगृहीतान्तःकरणाः, न तु विषयवियुक्तत्वेन तेषां विदितात्मनां विज्ञातपरमकारणस्वरूपाणां मुख्यलक्षणयुक्तानां यतीनां परमयोगिनां यथोक्तं निर्वाणं ब्रह्माभितः सांमुख्येन वर्तते ॥

ततो नैष्कर्म्ययोगिनः सकाशात् कर्मयोगिनो विशेषं प्रतिपादयितुमाह—

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २६ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २७ ॥

य एवंविधो मुनिर्यतिस्सन् मोक्षपरायणः मोक्षपरमेति तत्प्राप्तिकामः, न तु मुक्तः, हेयोपादेयवस्त्वालम्बनचित्ततया रागद्वेषादिदोषाविर्भावावियोगात् । यस्य तु इच्छाभयक्रोधाः पूर्वव्याख्याता दुर्वाराश्चित्तदोषाः सदा नित्यमेव निसर्गनिर्दोष-

---

१. IO omits यत...युक्तत्वेन

२. IO, BN[1] and BN[2] मुनिः यः स मुनिः

३. BN[1] and BN[2] मोक्षं

४. IO दोषाधियोगात्
BN[1] दोषाभियोगात्. This is noted as an alternative reading in BS[2]
BN[2] दोषावियोगात्

स्वात्ममात्रप्रतिष्ठत्वा[१]द्विशेषेणापुनरावृत्तिलक्षणेन गताः प्रध्वस्ताः, स तादृशः कर्मयोगी मुक्त एव ; यतोऽस्यात्मनः सामान्यसंविल्लक्षणा स्वभावश्रद्धाशक्तिर्यदा[२] मायावशात् स्वरूपाविमर्शिनी सती नानादेहाद्यहंप्रत्ययनिरुद्धा हेयोपादेयवस्त्वनुसारिणी विषयत्वमनुभवति, तदा रागादिदोषोपरक्तं चित्तमिति सैवोच्यते ; यदा तु तैर्दोषैर्विद्यावशाद्वियुज्यते, तदा नित्यानन्[३]तनिरुपमनैर्मल्यैकलक्षणं स्वरूपं प्रतिपद्यमाना संविन्मात्र[४]रूपैवावशिष्यते, यदुक्तम्—

> " चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
> तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ "

तदेवं सत्स्वेव विषयेषु रागादिदोषोन्मेषशून्यत्वात्परमा[५]र्थसमापन्नः कर्मयोगी जीवन्नेव मुक्तः । यस्त्वेतद्व्यतिरिक्तलक्षण एवंविधो योगी, स[६] परं मोक्ष[७]प्रवण एव, न तु मुक्तः । कीदृशः? यतेन्द्रियमनोबुद्धिः । यतानि निगृहीतानि इन्द्रियाणि करणानि मनश्चित्तं सङ्कल्पात्मकं बुद्धिरध्यवसायात्मिका येन स तादृशः । किं [८]कृत्वा? एवंविधः बाह्यान् [९]ग्राह्यत्वेन व्यतिरिक्ताञ्छब्दादीन् स्पर्शानिन्द्रियैः स्पृश्यमानत्वात् स्पर्शशब्दवाच्यान् विषयान् बहिः कृत्वा । इन्द्रियैरग्रहणेन चेतसो व्यतिरिच्येत्यनेन विशेषणेन[१०] इन्द्रियाणां विषयेभ्यः प्रत्याहारलक्षणं योगाङ्गं प्रतिपादितम् । तेन च

---

१. BN[1], BN[2] and BS[1] प्रतितिष्ठित्वात्
२. IO and BN[1] add च
३. IO नित्यानन्द
४. BS[1], BN[1] and BN[2] रूपैर्वा
५. IO and BN[2] परमात्म
BS[2] notes this as an alternative reading.
६. IO, BS[2] and BN[2] omit सः
७. IO मोक्ष एव प्रवण एव
८. IO कृत्वानेवंविधः
९. BN[1] and BN[2] बाह्यत्वेन
१०. BS[1] विशेषेण

पूर्वभावीन्यासनप्राणजयादीन्यङ्गान्याक्षिप्तानि। अन्यत्किं कृत्वा? भ्रुवोरन्तरे भ्रूमध्ये चक्षुर्दर्शनशक्तिं कृत्वेति। अनेनापि धारणालक्षणं योगाङ्गमुक्तम्। भ्रूमध्यलक्षणे देशे तेजोमात्रालम्बनतया चित्तस्य बन्धो ह्यनेनोक्तः। किंच नासाभ्यन्तरचारिणः[1] नासायाः सव्यापसव्यनाडीद्वयात्मकस्य सुखावयवस्याभ्यन्तरे चरितुं शीलं ययोस्तौ तथाविधौ प्राणापानसंज्ञौ शरीरौ मारुतौ समौ यौगपद्येन तुल्यरूपतया वहनात्समानौ। सम्पाद्येत्यनेनैकाग्रबुद्धिसम्पाद्यं ध्यानलक्षणं योगाङ्गमुक्तम्। एकवस्त्वालम्बने[2] ह्यन्तःकरणे ध्यानसम्पत्तिः तद्बलाद्विषुवद्गतिं प्राणापानौ समाश्रयत इति, त्रिविधेन कर्मणा यतेन्द्रियमनोबुद्धिर्योगी प्रत्याहारधारणाध्यानपर्यन्तं योगाङ्गं कर्म प्राप्तो भवति। न तु बुद्धेरत्यन्ततिरोधानाभावात्[3]समाधिमसौ[4]वधिरूढः। स ह्यस्य देहविमुक्तिं विना न सिध्यति आदेहस्थितेर्बुद्धिवृत्तिसंस्कारशेषस्य सत्त्वाभ्युपगमात्॥

एवं चित्तवृत्तिनिरोधलक्षणयोगाभ्यासनिष्ठस्य योगिनः सकाशात् सदा स्वरूपप्रतिष्ठसंवित्कर्मयोगी विशिष्टः प्रतिपादितः। स हि—

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां[5] शन्तिमृच्छति॥ २८॥**

मां निर्वाणं ब्रह्मशब्देनोक्तमनुत्तरमुपेयं परमात्मानं ज्ञात्वा आत्मत्वेन प्रतिपद्य[6] शान्तिं निःशेषविकल्पक्षोभविरतिलक्षणां निर्वृतिमृच्छति गच्छति, मत्स्वरूपज्ञाना[7]-

---

१. BN[1] and BN[2] चारिणौ
२. BS[2] आलम्बनं
३. IO, BN[1] and BN[2] निरोधाभावात्
४. IO omits असौ
५. BN[2] मा
६. IO प्रतिपाद्य
७. All except BN[1] सत्स्वरूप

देव मुच्यत इत्यर्थः । कीदृशं मां ज्ञात्वा? यज्ञतपसां भोक्तारम् । इह नानायज्ञतपः-प्रभृतयः क्रियाः शास्त्रेणानुष्ठेयतया चोदिताः; तासामज्ञानमोहिता अनुष्ठातारः । परमार्थविदस्तु कर्तृ[1]भेदाभावात्सर्वक्रियाफलानामहमेवैकः कर्ता च[2] भोक्ता चेति यज्ञतपसां भोक्तारम् । तथा [3]सर्वलोकमहेश्वरं [4]सर्वस्य कस्यचिज्जन्तुजातस्य क्रीडामात्रप्रयोजनतया स्वेच्छामात्रेणैव नानात्वेनावभासितस्य महेश्वरम्, तासु तासु क्रियास्वेकविनियोक्तृत्वात्परमं प्रभुम् । तथा परमार्थतो भेदाभावात्सर्वेषां भूतानां सुहृदम् । सर्वदा [5]निसर्गनिर्दोषस्वात्ममात्रप्रतिष्ठितत्वान्न कस्यचिद्द्विष्टम्; नाप्यनुरक्तम्[6]; एवंविधं मां ज्ञात्वा मद्वदेव कर्मसु प्रवर्तमानः कर्मयोगी शान्ति मुक्तिमाप्नोति[7]; पूर्वस्माद्योगिनो विशिष्टत्वमेवास्य वितर्क्य[8] प्रतिपादितमित्योम् ॥

यत्रैकतां यमुनया गगनापगेव संन्यासधीरुपगता सह योगबुद्ध्या ।
अध्यायमेनमधिगच्छत सर्वतीर्थसारं [9]प्रयागमिह पञ्चममा[10]शु सिद्ध्यै ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
पञ्चमोऽध्यायः ॥



---

१. BN[2] कर्तृत्व
२. BN[1] and BN[2] omit च
३. BS[1] सर्वभूत
४. BN[1] and BN[2] read सर्वस्य... महेश्वरं after प्रभुं in the next line.
५. BS[1] निमग्न
६. BS[1] नाप्यनुक्तं
७. IO omits इति
८. IO, BN[2] and BS[2] omit वितर्क्य
९. IO and BS[1] प्रयोगं
१०. BS[2] and BN[2] आत्मसिद्ध्यै

## ॥ अथ षष्ठोऽध्यायः ॥

---

आत्मज्ञानविहितकर्मसमुच्चयानुष्ठानरूपस्य सकलप्रकरणसिद्धान्तस्य प्रथमेनाध्यायेन प्रस्तावनामात्रमुपक्रान्तम्। द्वितीयेन ज्ञानकर्मणोः स्वरूपमुपदर्शितम्। तृतीयेन तयोरेव ज्ञानकर्मणोर्भिन्नानुष्ठातृविषयत्वभ्रान्तिरपाकृता। चतुर्थेनैवंविधसमुच्चयानुष्ठानरूपस्य योगस्य परस्मात्कारणात्प्रवृत्तिरुपदर्शिता, कर्मणश्च नानारूपत्वम्। पञ्चमेन ते एव ज्ञानकर्मणी संन्यासयोगाविति प्रदर्शितम् ॥

इदानीं तयोर्ज्ञानकर्मणोः समुच्चयेनानुष्ठातव्यतयोपदिष्टयोः किं सर्ववर्णाः सर्वाश्रमाश्चाधिक्रियन्ते, उत नियताः केचन—इति संशयनिरासार्थं सर्वसाधारण्यमस्य प्रतिपादयितुमध्यायान्तरेणाह[1]—

श्रीभगवानुवाच—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥

कर्मफलं तस्य तस्य कर्मणो[2] यज्ञादेः क्रियमाणस्य फलं स्वर्गादिभोगात्मकमनाश्रितोऽनभिसन्धानादनालम्भितः सन् यः पुमान् कार्यं शास्त्रेण कर्तव्यमिति वर्णाश्रमनियमेन चोदितं[3] कर्म[4] करोति अनुतिष्ठति स संन्यासी त्यागवान्। योगी

---

१. BS[2] आह भगवान्
२. BN[1] omits कर्मण:
३. BS[1] चोदित
४. BN[1] and BN[2] omit कर्म

च समाहित उच्यते। तेन सर्ववर्णाः सर्वाश्रमिणश्चात्र मोक्षफलसमुच्चयानुष्ठाने अधिकृता इत्युक्तम्। कर्मफलानभिसन्धानमात्रं च[1] संन्यासलक्षणम्। तद्वच्च विहित-कर्मानुष्ठानं च योग इति संग्रहेण सकलप्रकरण[2]प्रतिपाद्योऽर्थः सिद्धान्तीकृतः। ततश्च तथाप्रतिपादितात्मज्ञानैकतानान्तःकरणतया व्यतिरिक्तसुखात्मै[3]कफलनिरभि-काङ्क्षः सन् रागादिदोषनिर्मुक्तस्वभावत्वादधिकारकालात्प्रभृति प्रस्तुतं कर्म योऽनुतिष्ठति स ब्राह्मणोऽस्तु क्षत्रियो वैश्यः शूद्रो वा, ब्रह्मचारी गृहस्थो वान-प्रस्थो यतिर्वा; सर्व एव संन्यासी योगी च भवति। न पुनर्निरग्निरेव, अक्रिय एव वा। निरग्न्यक्रियशब्दाभ्यां ब्रह्मचारी यतिश्च लक्ष्यते। यतः केचिदनयोरेवा-श्रमयोरपर्यालोचितपरमार्थत्वान्नैष्कर्म्याभिमानिनो मोक्षहेतुत्वं मन्यमाना ब्रह्मचारि-यत्योरेव संन्यासितां योगितां च प्रतिजानते। यो हि ब्रह्मचर्यादेव परिव्राजक-धर्ममाश्रितः सदा[4]रपरिग्रहाभावादनाहिताग्निः सन् मूलादेव परिहृतयज्ञादिक्रियो[5] ब्रह्म-चारी एकः संन्यासी च योगी च तेषां मतः। यो वा आश्रमत्रयानुष्ठिताः स्वाध्याय-यागदानाध्यापनयाजनप्रतिग्रहादिकाः सकलाः क्रियाः परित्यज्य निराशिषमाश्रम-माश्रितः सयतिर्द्वितीयः संन्यासी च[6] योगी च तेषां[7] मतः॥

द्वयोरप्यनयोरेव बन्धहेतूनां क्रियाणां त्यागे सति मोक्षफलभागित्वात् तदेतत्केवलज्ञानवादिमतमनुपपन्नमेवेति प्रतिपादयितुमाह—

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन॥ २॥**

१. IO omits च
२. IO and BN[2] omit प्रकरण
३. BN[1] and BN[2] त्मकं
४. BN[1] सदाचार
५. IO, BS[1] and BS[2] क्रयः
६. IO, BN[1] and BS[2] omit च
७. IO and BS[1] add च

एते ज्ञानमात्रवादिनः संन्याससंज्ञया नैष्कर्म्यरूपं यमर्थं कथयन्ति तं योगं कर्मानुष्ठानमेव त्वं जानीहि, यस्मात्संन्यासं विना योगस्तेषु नास्ति। किंतु स संन्यासः संकल्पस्य फलाभिलाषायैवोपपद्यते, न तु कर्मणः सर्ववर्णेषु सर्वाश्रमेषु च कर्माविरहात्। यौ किल यतिब्रह्मचारिणौ परिव्राजकौ कर्मत्यागित्वेनाभिमतौ, तौ गृहस्थवानप्रस्थोचितं कर्म त्यजतः। स्वं तु यतित्वादिसिद्धिकारणं कंचित्कर्मविशेषमनुतिष्ठत एव। यथेष्टाचरणे हि तयोर्विकर्मस्थतैव[1] पर्यवस्यति। तस्मात्सङ्कल्पमात्रसंन्यासित्वात्संन्यासित्वं सिद्ध्यतीति योगी यः सर्वदा[2] सर्वथा स्वानन्दामृतनित्यतृप्तपरमात्मलक्षणे ब्रह्मणि प्ररूढाहंप्रत्ययतया संन्यस्त[3]कर्मफलसङ्कल्पः स योगी कार्ये कर्मणि समाधिमान् भवति, नान्य इति यथोक्तयोः संन्यासयोगयोरेकपुरुषानुष्ठातृनिष्ठयोः सर्वे वर्णाः सर्वाश्रमिणश्चाधिकृता अनेन श्लोकेन प्रतिपादिताः॥

किंत्वनुष्ठातुर्यथोक्त[4]विषयारुरुक्षावस्था च संभवतीति च तत्कृतं तस्य भेदं प्रतिपादयितुमाह—

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते॥ ३॥**

मुनेर्झगिति प्राप्तमात्रज्ञानत्वान्मनननिष्ठत्वादनुष्ठातुर्यथोक्त योगमारुरुक्षोः आरोढुकामस्य तत्र निर्विप्लवां निष्ठां लिप्समानस्य कर्म वर्णाश्रमक्रमागता सा सा क्रिया कारणं योगारोहहेतुः। तस्यैव तथाविधस्यैव कारणभूतं कर्माजहत एव

---

१. BN² स्थितैव
२. IO omits सर्वदा
३. BN² संन्यासकर्म
४ IO and BN² add योग
BS² notes योग in the margin.

"पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्"¹ इत्यादिना पूर्वोपदिष्टनिर्व्यवधाननित्याभ्यासवशात् योगारूढस्य योगे लब्धप्रतिष्ठ²चित्तत्वे सति परमात्मसमापन्नस्य शमः सङ्कल्पविकल्पक्षोभक्षयः कारणं प्रयोजकं निमित्तम्। किमुक्तं भवति? आगममात्रेण प्राप्तोपदेशस्य प्रथमकल्पित³स्य योगिनो योगप्रतिष्ठालाभोत्सुकस्यापि तत्प्राप्तिकारणं कर्मैवोपेयतया वर्तते। तस्मिंश्च श्रद्धादराभ्यां सम्यगनुष्ठिते ज्ञाने च प्र⁴मादकाष्ठां प्राप्ते तत्कर्मात्यजत एव शमः परमोपेयत्वात्कारणं सम्पद्यते ॥

अत एव प्रशान्तस्य योगारूढस्य लक्षणमाह—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसङ्कल्पसंन्यासी योगरूढस्तदोच्यते⁵ ॥ ४ ॥

यदा हि यस्यामेवावस्थायां इन्द्रियार्थेषु वि⁶रुद्धेषु विषयेषु इन्द्रियैः स्पृश्यमानेष्वपि कर्मस्वेवं⁷ तत्प्राप्तिहेतुषु यज्ञतपःप्रभृतिषु क्रियमाणेष्वपि नानुषज्जते सहजानन्दतृप्तित्वान्नासक्तिं भजते; केवलं ⁸पवन इव पदार्थजातं स्पृशन्नपि स्वभाव-

---

१. BS² add अश्नन् गच्छन् The following verse is found in the margin in BS².—

न लिङ्गाज्जायते सृष्टिः न भगान्न च रेतसः।
स्वच्छन्दोच्छ......सृजत्यात्मानमात्मना ॥

but there is no indication as to where it should be read in the text.

२. BN² प्रतिष्ठितचित्तत्वे

३. All except IO कल्पिकस्य

४. IO, BN² and BS² प्रसादकाष्ठां

५. BS¹ and BN² तदुच्यते

६. BN² अविरुद्धेषु

७. IO, BS² and BN² कर्मसु वा

८. BN² पवन इव is read after जातं

व्योमप्रतिष्ठ एव भवति; तदा सर्वेषां सङ्कल्पानां फलाभिसन्धीनां संन्यासित्वात् त्यागित्वाद्योगारूढः योगी कार्यसमाधावारूढो लब्धप्रतिष्ठ उच्यते ॥

तदेवंविधस्य परमप्रशान्तब्रह्मसमापत्तिकारणस्य योगा[1]रूढत्वस्य नात्मव्यतिरेके[2]णे बाह्यं किंचित्सा[3]धनं भवितुमर्हति। अतः—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः।
[4]अजितात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

जितात्मनः प्रशान्तस्य प[5]रात्मसु समा मतिः।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥

दुर्वारद्वैतप्रत्ययपवनपरिक्षोभितभीषणविकल्पकल्लोलसह[6]स्रसङ्कुलापारगम्भीरभवसागरनिमग्नमात्मानं स्वभावं आत्मनैव यथोक्तज्ञानोपदेशप्रत्युदितोत्साहेन उद्धरेत्। यथोक्तयोगलक्षणं तीरदेशमारोपयेत्। न त्वेनं विस्मृतस्वबलतया [7]उपेक्षितं तत्रैवा-

---

१. IO योगारूढस्य

२. BS[2] व्यतिरिक्तत्वेन is noted as an alternative reading.

३. BN[1] and BN[2] किंचित्कारणं

४. BS[1] अनात्मनस्तु
BN[1] जितात्मनस्तु

५. IO and BS[1] परमात्मा

६. IO, BS[1] and BS[2] सहस्रमङ्गला

७. BN[1] and BN[2] उपेक्ष्य तत्रैव
BS[2] notes as an alternative reading उपेक्ष्य तं

24

वसादयेत् मज्जयेत् । यतोऽस्योद्धरणावसादहेतुतयोपकारी प्रतिकूलं चात्मैव नान्यः । कथमित्याह—तस्य पुरुषस्य सम्बन्धिन आत्मन आत्मैव स्वभाव एव बन्धुः, सर्वापत्प्रतीकारकृत्स्वजनः । यदुक्तम्—

" आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हिततरस्तस्माद्य एनं वारयिष्यति ॥ " इति ।

कस्यात्मैव बन्धुः ? येन पुरुषेण स आत्मा [1]स्वस्वभावः आत्मनैव ज्ञाना-मृताभ्यवहाराभ्यासलब्धबलेन जितः प्रत्यवमर्शगोचरापादनाद्वशीकृतः; येन त्वसावात्मा [2]प्रमादपरेण सतोपेक्षितः [3]सन्नजितो न वशीकृतः, तस्य तथाविधस्यायं शत्रुत्वे सर्वेच्छाव्याघातकारित्वे वर्तते । तथा चोक्तम्—

" न तत्कुर्यादसिस्तीक्ष्णः सर्पो वाथ विषोल्बणः ।
अरिर्वा नित्यसंक्रुद्धो यदात्मा [4]दुरधिष्ठितः ॥ " इति,

यथोक्तस्यात्मजयस्य[5] फलमाह । जितो यथोक्तेन प्रकारेण वशीकृत आत्मा येन तस्य जितात्मनः । अत एव प्रशान्तस्य स्वस्वभावनिर्दोषपरमात्मसमापत्ति-वशान्नि[6]र्वृत्तविकल्पविप्लवस्य । परेषु व्यतिरिक्तत्वेन प्रतिपन्नेषु सर्वदेहिषु ; तथा आत्मन्यहन्तया प्रतीयमाने; तुल्या सामान्यसंविदेकस्वरूपग्राहिणी मतिर्भवति । तथा शीतोष्णसुखदुःखादिषु बाह्याभ्यन्तरनिमित्तजेषु द्वन्द्वोपप्लवेषु । तथा परेण प्रयुज्य-

---

१. BS[1] and BN[1] स स्वभावः
२. BN[1] and BN[2] प्रसाद-
३. BN[1] and BN[2] सन्नवशीकृतः
४. BS[2] दुरविस्मृतः
५. BS[1] and BN[2] ज्ञानस्य
६. BS[2] निर्वृत

माने माने पूजायाम्[1]; तथावमाने पराभवे; तथैव समाना मतिर्भवति। न तस्य सर्वगतादेकस्मात्स्वभावनिर्विकारात्परमात्मनोऽहंप्रतीतिर्व्यतिरिच्यते। नानाविधेषु विकारकारणेषूपस्थितेष्वपि तस्य सत्ये स्वात्मन्यनुसन्धानं लोकवन्न विच्छिद्यत इत्यर्थः॥

स चैवंविधो योगारूढ उच्यते इत्याह—

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः॥ ८॥

ज्ञानं शास्त्रतः स्वरूपावगममात्रम्; विज्ञानं शास्त्रावगतस्य तत्त्वस्य साक्षात्कारः; ताभ्यां तृप्तो निराकाङ्क्ष आत्मा स्वभावो यस्य स तथा। अत एव कूटस्थः प्राप्तपरमार्थनित्यात्मप्रत्ययत्वात् कूटस्थः शैलादिवन्निष्प्रकम्पः, यतो विजितेन्द्रियः वशीकृतबाह्यान्तःकरणः, न तु तद्वशः। एवं लोभादिदोषरहितत्वात्समौ लोष्टाश्मानौ मृत्पिण्डपाषाणौ काञ्चनं च हेम यस्य स तथाविधो युक्तो योगारूढ उच्यते॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥ ९॥

यस्य सुहृदरिप्रभृतिषु प्रीतिद्वेषहेतुषु नानाविधेषु अन्योन्यभिन्नरूपेषु जन्तुषु समा ब्रह्मलक्षणनिर्विशेषैकतत्त्वदर्शित्वा[2]देकरूपा बुद्धिः स विशिष्यते

---

१. BS[1] and BS[2] प्रजायां　　　　　२. BN[1] दर्शितत्वात्

नैष्कर्म्ययोगिनः सकाशात्प्रकर्षं लभते। स हि यद्वस्तुसमाधिप्रतिपक्षत्वात्परिहरति, यच्च तदानुगुण्यात्स्वीकुरुते ताभ्यां तस्य द्वेष्यप्रियाभ्यां रागद्वेषौ प्रकाश्येते। यस्तु सर्वसाम्यं प्राप्तः, स क्रियासु वर्तमानोऽपि समबुद्धित्वाद्ब्रह्मभूत एवेति विशिष्यत इत्युक्तम्। सुहृदादीनां भेदो व्याख्यायते—सुहृद्यः स्वभावतः शोभनहृदयः। मित्रं मैत्रीकरणनिर्वृत्तसौहृदम्। अरिः शत्रुः, कारणवशात् द्वेष्टा, द्वेष्यश्च। द्वेष्यस्तु विनापि कारणमप्रियः; उदासीनः न मित्रं न शत्रुः, मध्यस्थो यः केनापि प्रकारेण मित्रत्वममित्रत्वं चाश्रयितुमर्हति। बन्धवो ज्ञातयः। साधवः शास्त्रोदितसदाचार-निरताः। पापाः तद्विपरीता दुष्टाचारसङ्कल्पाः। तेषु सर्वेषु समबुद्धित्वमस्य कर्मयोगिन एव बोद्धव्यम्। यच्छत्रुभावं प्रतिपन्नेषु शास्त्रचोदितत्वात् न्यायवधादिकर्मप्रवृत्तावपि निर्विकारैकात्मनिष्ठत्वम्। न तु शत्रौ शास्त्राविहितत्वादन्याय्यामित्रप्रतिपत्तिः। यद्येवमभविष्यत् तत्तत्र तत्रात्मज्ञानमर्जुनस्योपदिश्य "तस्माद्युद्धस्व" इत्युपसंहारे नाभ्यधास्यत। तस्मात्कर्मयोगिनः तत्तद्वर्णाश्रमक्रमागतां तां तां शास्त्रचोदितां क्रियामनतिक्रमत एव सर्वसाम्यभावनात्र विवक्षिता॥

अत एवाह—

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः॥ १०॥**

---

१. IO and BN[2] omit प्रियाभ्यां
२. BS[1] and BN[2] omit द्वेष्यश्च
३. BN[1] omits न
४. BN[1] and BN[2] नियताः
IO omits निरताः...चार
५. IO and BS[2] अन्यायामित्र
६. BN[2] omits तत्र
७. BS[1] संहारो ना
BN[2] and BN[2] संहारेणाभ्य-
८. BS[1] and BN[1] add तु

इहैवास्मिन्नेवं[1] विविधक्रियाकारिणि शरीरे वर्तमानैस्तैः सर्गः पुनर्भवो जितोऽधःकृतः येषां यथाप्रतिपादिते साम्ये सर्वभावाभेदे मनश्चित्तं[2] लब्धप्रतिष्ठम्[3], ब्रह्मैकं हि वैषम्यकारणभूतरागादिरहितत्वान्निर्दोषम्[4]। अतस्तदेव समं सर्वदा सर्वथा सर्वत्र विशुद्धसंविन्मात्रैकस्वरूपम्। तस्माद्ये साम्ये स्थितास्ते ब्रह्मण्येव स्थिता इत्युक्तम् ॥

अथ यथोक्तसाम्यानतिक्रमसमाहितस्य चित्तवृत्तिनिरोधलक्षणमपि योगमितरक्रियावदहोरात्रमध्ये व्यवस्थापिताभ्यासकालं[5] विशिष्टेतिकर्तव्यतान्वितमपि कर्मयोगिनः श्लोकषट्केनाभ्यनुजानन्नाह—

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ११ ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ १२ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १३ ॥

समं कायशिरोग्रीवं धारयन्नचलः स्थिरः[6] ।
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १४ ॥

---

१. IO and BS[2] एवंविधाक्रियाकारिणि
२. BN[1] and BS[2] add स्थितं
३. IO प्रतिष्ठितं
४. BN[2] गर्हितत्वात् BS[2] notes this as an alternative reading.
५. BN[1] and BS[2] व्यवस्तिाभ्यास
६. BS[2] स्थिरः is noted as an alternative reading.

प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो[1] युक्त आसीत मत्परः ॥ १५ ॥

युञ्जन्नेवं सदात्मानं मद्भक्तोऽनन्यमानसः ।
शान्ति निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १६ ॥

क्रमेणैतद्व्याख्यायते । योगी प्रबन्धप्रतिपादितप्रतिपादयिष्यमाणस्वरूपेण प्रस्तुतव्याख्यानयोगान्तरविलक्षणपरिकर्मणा सर्वकालदेशाविरोधिना समाधिविशेष-निरपेक्षेण समस्तान्तर्बहिष्करणप्राणवृत्तिष्वप्यविरुद्धप्रसरेण कर्मयोगेन योगवान् शास्त्रविहितत्वात् आत्मानमन्तःकरणं जीवात्मानं वा सततं प्रत्यहं[4] व्यवस्थापित-नियतकालातिक्रमेण रहस्यैकाग्र्यबाधकरहिते देशे स्थितः[5]। यत एकाकी केवलः; तथा यतचित्तात्मा[6] यतं निगृहीतं चित्तं मनो येन तादृश आत्मा क्षेत्रज्ञो यस्य स तथाविधः सन् परमात्मनि समादधीत, चित्तवृत्तिनिरोधलक्षणमपि योगमनुतिष्ठे-दित्यर्थः । किंतु निराशीः आशिषः फलाशंसा अतो निष्क्रान्तः मोक्षलक्षणेऽपि फले प्रार्थनादैन्यरहितः। तथा अपरिग्रहः सर्वत्र ममत्वाभिमानरहितः[7]। तथा मच्चि-त्तत्वादिवक्ष्यमाणधर्मयुक्तो युञ्जीत—इत्यनेन कर्मयोगसमाधानाप्रमत्तेनायं योगोऽभ्यस-नीय इत्युक्तम् । अस्येदानीं परिकर्माभिधीयते । किं कृत्वा युञ्ज्यात्? आत्मनः शुचौ देशे यत्याद्यपेक्षया पुण्यसरित्परिसरगिरिगुहादौ। गृहस्थापेक्षया सूपलिप्त-

---

१. IO, BS[1] and BS[2] मच्चित्ते
२. IO समस्तान् बहि-
३. IO and BS[2] प्यनिरुद्ध
४. BN[1], BN[2] and BS[2] प्रत्यह
५. BS[1] and BN[2] स्थिते
६. BN[2] breaks off with यतचित्त
७. All except BN[1] समत्वा-

विविक्तसदनादौ। विशुद्धे स्थाने आसनं समाधिविष्टरं[1] प्रतिष्ठाप्य स्थितिं प्रापय्य। कीदृशम्? स्थिरं निश्चलम्। तथा सुखवत्त्वार्थमुच्छ्रायनिम्नत्वातिशयरहितम्। तथा चैलं[3] वस्त्रम्; अजिनं मृगादिचर्म; कुशा दर्भाः; तदुत्तरं तत्प्रधानम्; तेन गृहस्थस्य [4]चैलाजिनोत्तरम्। यत्यादेः कुशोत्तरम्। एवं तत्र स्थिरसुख आसन उपविश्य एकाग्रं ध्येयत्वेन परिगृहीतैकवस्तुनिष्ठं मनश्चित्तं कृत्वा; अत एव यतचित्तेन्द्रियक्रियः, यता निषिद्धबहिष्प्रसराः चित्तेन्द्रियाणां मनसोऽक्ष्णां च क्रियाः संकल्पविकल्पशब्दादिग्रहणरूपाणि कर्माणि येन तथाविधः सन् योगं चित्तवृत्तिनिरोधात्मकं युञ्ज्यात् समादधीत। किमर्थम्? आत्मविशुद्धये। आत्मनोऽन्तःकरणस्य बाह्योपरागलक्षणमलक्षालनाय। क्षेत्रज्ञस्य वा देहाद्यहंप्रत्ययरूपकलङ्कपरिमार्जनाय। एवं चित्तसमाधानमभिधाय तत्साधनभूतं कायसंस्थानमाह। कायः कण्ठादधःशरीरम्; शिरो मूर्धा; ग्रीवा कन्धरा; कायशिरोग्रीवं तत्सममवक्रमृजु धारयन् बिभ्रत्। तथारूपोऽप्यचलो निष्प्रकम्पोऽङ्गमेजयत्वादिचित्तविक्षेपकारणरहितः स्थितः। तथा स्वं नासिकाग्रं घ्राणप्रान्तं संपश्यन्। अत एव च दिशः काष्ठा अनवलोकयन् अपेक्ष्य[अनवेक्ष]माणः। दिक्षु दृग्विक्षेपपरिहारार्थं नासिकाग्रसन्दर्शनमुक्तम्, न तु तल्लक्षीकर्तव्यमित्यभिप्रायः। इत्थं विहितसमस्तसमाधिपरिकरस्य परमात्मसमापत्तिलक्षणमोक्षप्राप्तिहेतुं विशेषणं प्रतिपादयितुमाह। प्रशान्तात्मा प्रशान्तः सन्देहादिविकल्पक्षोभरहित आत्मा अन्तःकरणं यस्य स तथा। सर्वमात्मत्वेनावगम्य सर्वतश्चराचराद्भूतजाताद्विगतभीः निवृत्त-

---

१. IO विष्टारं
२. BS[2] सुखत्वार्थं
३. All except BS[1] चेलं
४. All except BS[1] चेला
५. IO मनस्तोऽक्ष्णाणां
६. BN[1] मूल
७. IO रूपोऽप्यचलो
८. BS[2] अपेक्षणमाणः
९. BN[1] लक्षीकरणकर्तव्यं

साध्वसः। तथा ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणः कामसंकल्पवर्जनं व्रतम्; तस्मिन् स्थित इति सर्वार्थविषयप्रार्थनारहितत्वमनेन विशेषणेनोक्तम्। इत्थं मनः संयम्य सर्वतश्चित्तं निगृह्य मय्येव परमात्मन्येकस्मिंस्तत्त्वे चित्तं संवेदनं यस्य स तथाविधो युक्तः समाहितः सन् तत्परः तथाविधाद्योगादनन्यविषयमना आसीत तिष्ठेत्। एवमेतद्विशेषणविशिष्टः सदा प्रत्यहमात्मानमन्तःकरणं युञ्जन् समादधानः सन् मद्भक्तः मामेवात्मत्वेन समाश्रितः। अत एवानन्यमानसोऽन्यस्मिन् विषयान्तरे न[1] यस्य मानसम्, मामेव भक्तो मत्समापत्तिमेव च समाधिफलत्वेन प्रतिपन्नः सन् मत्संस्थां मयि वर्तमानां शान्तिं स्वाभाविकसर्वविकाररहितत्वलक्षणं प्रशममधिगच्छति स्वीकुरुते। कीदृशीं शान्तिम्? निर्वाणपरमां निर्वाणं शरीरादावनात्मन्यात्मप्रत्ययादिक्षोभविरतिरूपा निर्वृतिः। परमं प्रकृष्टफलतया स्थितं यस्यां सा तथोक्ता, ताम् ॥

इत्थमस्य योगस्य कर्मसमाधिलक्षणमहायोगान्तर्वर्तिनो यथोक्ताद्वैतात्मज्ञाननिष्ठतयानुष्ठेयतयाभ्यनुज्ञातस्यान्यदपि परिकर्म प्रतिपादयितुमाह—

**योगोऽस्ति नैवात्यश्नतो न चैकान्तमनश्नतः।**
**न चातिस्वप्नशीलस्य नातिजागरतोऽर्जुन ॥ १७ ॥**

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १८ ॥**

एष यथोक्तो योग एवंविधस्यानुष्ठातुर्नैवास्ति, नैव सम्भवति। कीदृशस्य? अत्यर्थमश्नतः, सौहित्यपर्यन्तं[2] भुञ्जानस्य। तथा एकान्तं सर्वथा अनश्नतोऽपि नास्ति।

---

१. IO and BS[2] नियम्य मानसं २. IO सौहृत्यपर्यन्तं

तथातिस्वप्नशीलस्य नित्यं निद्रारतस्य ; तथा सदैव जाग्रत उन्निद्रस्यापि नास्ति । अत्यशनाद्धि कायगौरवशूलाभिष्यन्दादयो दोषाः चित्तमकर्मण्यं संपादयन्ति । अत्यन्तानशनाश्च [नाच्च] धातुक्षयादयः शक्तिहानिमावहन्ति[1] । अतिस्वप्नादालस्यादय उद्योगभङ्गम् । अत्यन्तनिद्रापहारादजीर्णादयो दौर्मनस्यादिकमापादयन्ति । अतो युक्ताहारविहारस्य युक्तो हितमात्रा[2]कालावच्छिन्नत्वादुपपन्न आहारो भोजनं विहारः चङ्क्रमणादिर्यस्य तादृशस्य ; तथा कर्मसु दृष्टादृष्टविषयेषु व्यापारेषु युक्ता[3] चित्त-शरीरानवसादित्वपर्यवसायिनी चेष्टा मनःकायव्यापारो यस्य तस्य तादृशस्य ; तथा युक्तौ[4] यथाकालभावित्वान्न्याय्यौ[5] स्वप्नबोधौ निद्राजागरौ यस्य तस्य ; तादृशस्य योगिन एष योगो दुःखहा भवति, अभ्यस्यमानः क्लेशं हन्ति, सुखेन संपाद्यत इत्यर्थः । विकरणानियमोऽत्र छान्दसः । संस्कृतंमन्यास्तु पाठान्तराणि योजयन्ति ॥

एवमाहारविहारनियमसुक्त्वा सिद्धिलक्षणं योगस्याह—

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १९ ॥**

यदास्य योगिनः समाध्यभ्यासकाष्ठां प्राप्तस्य चित्तं विनियतं निगृहीतं सत् सप्रज्ञातसमाधिभूमिकाः वितर्कविचारानन्दास्मितानुगताः अतिक्रान्तं सत् स्थूल-सूक्ष्मेषु ध्येयेषु लब्धसंयमत्वात्तानि त्यक्त्वा एकस्मिन् ध्येये आत्मन्येव स्वभाव

---

१. IO आपादयन्ति
२. IO मात्रः
३. BS[1] and BN[1] युक्त
४. All except BN[1] युक्तो
५. BS[2] न्यायौ

एवावतिष्ठते, अवस्थितिं प्रतिष्ठांसंयमं लभते, तदा तस्यां दशायामात्मैकाराम-त्वात्सर्वेभ्यो व्यतिरिक्तेभ्यो भोगेभ्यः स्पृहारहितो निरभिकाङ्क्षः असौ युक्तः संपन्ननिर्बीजसमाधिरित्युच्यते ॥

तस्यात्मध्याननिष्ठस्य योगिचित्तस्यैव योगशब्दवाच्यस्योपमानमाह—

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनि ॥ २० ॥**

आत्मनि निरुत्तरे ध्येये योगं समाधिं युञ्जानस्य योगिनः सर्वतः प्रत्याहृतत्वात् यतं निगृहीतं चित्तं येन तादृशस्य सा उपमा तदुपमानं तत्त्वज्ञैः स्मृतम् । यथा दीपः प्रद्योतको निवृत्तवातदेशे स्थितः सन्नेङ्गते न प्रकम्पते, तथैवात्मालम्बने समाधौ स्थितं योगिचित्तं न प्रकम्पत इत्युपमानवाक्यमध्याहार्यम् । अनेन दीपोपमानेन प्रत्यासन्नप्रबलविपक्षत्वाद्यत्नसंरक्षणीयत्वं योगिचित्तस्य प्रतिपादितम् ॥

---

१. IO and BN[1] प्रतिष्ठां

The following verse is found in the margin in BS[2] but no indication is found therein as to be where the verse should be inserted·

द्वौ भागौ पूरयेदन्नैः तयोरेकं प्रपूरयेत् ।
मारुतस्य प्रचारार्थं यदुक्तमवशेषयेत् ॥

२. BS[1] उपमेय

३. BS[1] and BN[1] प्रत्यासन

४. All except BS[2] यत्र

अथास्य परस्य योगस्य लक्षणमाह—

यत्रोपरमते चित्तं निरुद्धं योगसेवनात्[1] ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २१ ॥
सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्च्यवति तत्त्वतः ॥ २२ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः[2] ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २३ ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २४ ॥

तं योगसंज्ञितं समाध्याख्यमर्थं विद्यात् जानीयात्। कं तम्? यत्र यस्मिन्निरुद्धं निवृत्तबहिष्प्रचारतया नियमितं चित्तम्[3]; योगसेवनाद्योगस्य समाधेः प्राप्यस्यान्यस्य सेवनादाश्रयणात् उपलब्धपरमोपेयत्वात्[4]। तत्रैव विश्रान्तं सद्योगान्तरविषयं प्रयत्नमुत्सृजति, तस्यैव योगस्य निरुत्तरत्वात्। अत एव तस्यामवस्थायां योगी[5] यत्रात्मनैवात्मानं पश्यन् स्वसंवेदनेन स्वरूपमनुभवन् आत्मनि स्वभाव एवाधिकरणभूते तुष्यति परां प्रीतिं प्रतिपद्यते, तं योगं विद्यादिति सम्बन्धः। तदानीं हि निवृत्तसकल-

---

१. BS[1] and BS[2] सेवया
　BS[2] notes सेवनात् also.
२. IO omits this ardha.
३. BN[1] नियमितं निश्चितं
४. BN[1] परमेऽपि यत्नात्
५. IO omits योगी

बाह्योपरागं[1] चित्तमात्मसमापन्नं सत् शुद्धसंवेदन[2]लक्षणतद्धर्मत्वेनावतिष्ठते। तथा यत्रात्यन्तिकमनन्तं निरुपमस्वरूपानुभवचमत्कारमयं सुखं सहज आनन्दोऽभिव्यज्यते। कीदृशं सुखम्? अतीन्द्रियम्; श्रोत्रादीनि बाह्यानीन्द्रियाण्यतीतमतिक्रान्तम्। अत एव बुद्धिग्राह्यं बुद्ध्या तात्कालिकया बोधलक्षणयात्मनः स्वश[3]क्त्यैव ग्राह्यं संवेद्यम्। अयं योगी वेत्ति जानाति, तं योगं विद्यात्। तथा यत्र स्थितो यस्मिन् लब्धविश्रान्तिरयं योगी तत्त्वतः परमार्थरू[4]पात् परमा[5]र्थान्न च्यवते न वियुज्यते; तथा यं योगमासाद्य ततोऽधिकं तस्मादुत्कृष्टमपरमन्यं लाभमिष्टप्राप्तिं योगी न मन्यते न बुद्ध्यते। अत एव प्रागुक्तम्, यत्र स्थितस्तत्त्वतो न च्यवत इति। अत एव यस्मिन् स्थितस्संरूढो निवृत्तेतरव्यापृतिः सन् योगी गुरुणापि केनचिन्मानसेन शारीरेण वा दुःखेन न विचाल्यते, न ततो[6] व्युत्थाप्यते, तं योगसंज्ञितमर्थं विद्यात्। कीदृशम्? दुःखसंयोगवियोगं दुःखं विषयेष्विन्द्रियप्रवृत्तिजनितो राजसः क्लेशः; तेन संयोगः, संसारिदशायां सम्बन्धः; तस्माद्वियोगो विरहः तं हेयवस्तुप्रार्थनाजन्म[7]दुःखेन सम्बन्धाभाव एव वियोग इत्यर्थः। स एवंलक्षणो योगः परः समाधिर्निरुत्तरानन्दलाभलक्षणमहाफलहेतुः निश्चयेन निःसन्देहत्वेनानिर्विण्णचेतसानुद्विग्नमनसा योक्तव्यः समाधातव्यः। अलब्धभूमिकस्य हि योगिनः प्रथमं सन्देहः; आरुरुक्षतश्चाभ्यासदशायां क्लेशः संभाव्यते—इति निश्चयेनानिर्विण्णचेतसा स योक्तव्य इत्युक्तम्॥

---

१. BN[1] रागः
२. IO संवेदलक्ष-
३. BN[1] शक्तिग्राह्यं
४. IO स्वरूपात्
५. BS[2] परमात्मरूपात्
६. IO तत्त्वतो
७. IO जन्मना

एवं बाह्यविषयपरिहारक्रमेण चित्तवृत्तिनिरोधलक्षणां समाधिसिद्धिमभिधाय पुनरपि प्रकृतकर्मयोगक्रममेव समाश्रयंस्तत्सिद्धिं प्रदर्शयितुमाह—

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २५ ॥

शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २६ ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २७ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २८ ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ २९ ॥

क्रमेणैतद्व्याख्यायते । शनैःशनैः उत्तरोत्तरविशेषारोहेण[1]क्रमेण न[2] सहसैवोपरमेत्, बाह्येषु विषयेष्वासङ्गात् । तथा देहादावात्माभिमानात् निवर्तेत[3] । केन साधनेन? बुद्ध्या, सम्यग्ज्ञानेन । कीदृश्या? धृतिगृहीतया । धृतिः परमात्मन्यहङ्कारावष्टम्भलक्षणं धैर्यम्, तया गृहीता स्वीकृता या बुद्धिस्तया तादृश्या । सात्त्विकी हि

---

१. IO रोहक्रमेण
२. BN[1] adds तु
३. IO निवर्तते

धृतिर्या बुद्धिं धारयति, सात्र योगे साधनत्वमर्हति। तस्या धृतेर्लक्षणं वक्ष्यति—

"धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥"

पूर्वं किं कृत्वोपरमेत्? मनसैव परेण मोक्षविषयेणैव चेतसा प्राक् स्थावर-संज्ञयोक्तेन[2] संकल्पप्रभवान् विषयग्रहणव्यग्रजङ्गममनःसमुत्थान् सर्वान् दृष्टानुश्रविक-भेदेन समस्तान्; तथा प्रत्येकमशेषान्[3] अविद्यमानसंस्कारमात्रान् कामान् भोगां-स्त्यक्त्वा परिहृत्य। तथा तेनैव मनसा, न तु विषय[4]विषयेण इन्द्रियग्रामं करणवर्गं समन्ततः सर्वेभ्यो विहितेभ्योऽपि शब्दादिभ्यो विनियम्य रागादिदोषपरिहारात्मना विशेषेण निगृह्य—इत्यनेन प्रस्तुत[5]समुच्चयानुष्ठानसाध्यकर्मयोगविषयं कर्मत्यागस्ये-न्द्रियनियमस्य[6] च पूर्वोक्तक्रममेव स्मारयति। एवमनेन क्रमेणात्मसंस्थं मुख्य आत्मनि ब्रह्मापरनाम्नि सम्यक् स्थितं लब्धविश्रान्ति मनोऽन्तःकरणं कृत्वा संपाद्य तद्व्यतिरिक्तं वस्त्वन्तरं न किंचिद्ध्यायेत्। तदानीं हि सर्वं ब्रह्मरूपयैव प्रकाशते, एवंविधे-नाभ्यासक्रमेण यतो यतो यस्माद्यस्मात्कुतश्चिद्धन्धनभूतादाभ्यन्तराद्बाह्याच्च मनश्चेतो निश्चरति निर्गच्छति, तस्मात्तस्मान्नियम्य प्रतिषिध्यात्मनि परमकारण एव वशं नयेत्, तत्रैव निबध्नीयात्। यतः स्वभावत एतच्चञ्चलं चपलम्, तथा प्रार्थितेऽपि विषये न चिरमवतिष्ठत इत्यस्थिरम्; यस्मात्तस्मिन् आत्मवशं नीते सति एनं योगिनं प्रशान्तमनसं विषयसुखोन्मुख्यक्षोभविरतिनिर्वृतचेतसं[7] सन्तं स्वयमेवोत्तमं नित्य-

---

१. All except BN[1] यस्याः
२. IO युक्तेन
३. IO अशेषतः
४. IO omits विषय
५. IO and BS[2] omit प्रस्तुत
६. BS[1] कामत्याग
७. BN[1] निर्वृत्तचेतसं
IO omits निर्वृत...नित्य

निरवद्यस्वभावत्वादुत्कृष्टं सुखं सहज आनन्द उपैति उपगच्छति। कीदृशं योगिनम्? शान्तरजसम्; शान्तं विलीनं रजोविषयप्रवृत्तिहेतुर्गुणो यस्य; अत एव ब्रह्मभूतं परमात्मसमापन्नम्; यस्मादकल्मषं अविद्यमानाज्ञानलक्षणकिल्बिषकलङ्कम्। एवमनेन यथोक्तेन क्रमेण प्रबन्धे[1]प्रतिपादितेन नियतमानसः संय[2]तान्तःकरणो योगी सर्वदा सर्वास्ववस्थासु "पश्यन् शृण्वन्" इत्यादिना प्रतिपादि[3]तैः स्वात्मानं युञ्जन् समादधानः सुखेनासनप्राणायामप्रत्याहारध्यानधारणादिक्लेशाभावादनायासेन ब्रह्मणा परमात्मना संयोगमभेदमत्यन्तं नित्यमेवाधिगच्छति प्राप्नोति ॥

इत्थं सिद्धनिरुत्तरसमाधेः कर्मयोगिनो लोकोत्तरं व्यवहारं प्रतिपादयितुमाह—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ३० ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यमि स च मे न प्रणश्यति ॥ ३१ ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३२ ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३३ ॥

---

१. BS[1] पूर्वमेव
२. BS[2] प्रयातान्तःकरणो
३. BN[1] दिता

यथोक्तेऽस्मिन् कर्मयोगे युक्तः समाहितः सर्वत्र सर्वदा सर्वथावहिताचित्तो योगी आत्मानं अद्वयचिन्मात्रैकलक्षणयोग्यस्वरूपं सर्वभूतेषु परस्परं भिन्नत्वेनावस्थितेषु चराचरेषु प्राणिषु स्थितं पश्यति। यदात्मनः सामान्यचिन्मात्रं रूपमेकं तदात्मकान्येव भूतानि प्रेक्षते इत्यर्थः। तथोक्त[1]स्वरूपे स्वात्मनि सर्वभूतानि विगलितान्योन्यभेदानि पश्यतीत्यात्मनः सर्वभूतानां चाभेदद[2]र्शनं प्रतिपादितमेव। अभेददर्शनप्रतिपादनपरमेतत्। यथा चैतत्संभवति तथा प्रतिपादितमेव प्राक्; तथापि स्मृत्यर्थं पुनरुच्यते। आत्मा नामायं सुखदुःखग्राह्यग्राहकमूढत्वशून्यत्वादिसकलकल्पविरहविशुद्धसंवित्प्रकाशैकलक्षण[3]ः; तस्य संवेदितृत्वं नामाव्यभिचारी गुणः; तेन यद्यत्संवेत्ति तत्तत्संवेद्यमानमेव तेन तेन रूपेणात्मानं लभते। संवेद्यमानता च निर्विकल्पावस्थापूर्विका भवति। तेन यद्यत्किंचिद्यदा यदा यत्र यत्र येन येन प्रमात्रा संवेद्यते तत्तदद्वयानन्तचिन्मात्रस्वरूपमित्यात्मनः संवेदितुः, वेद्यानां च सर्वभूतानां नास्ति वास्तवः कश्चिद्भेदः। केवलमचिन्त्य[4]परमेश्वरमायोद्भावितो वेद्यवेदकविकल्पः सर्वमिदमन्योन्यं विभिन्नतयावभासयति। स च परमेश्वरप्रसादादुन्मिषितया विद्याख्यया दिव्यया दृशा तत्त्वविद्भिस्तादृशो विभाव्यमानो यदा विगलति, तदा भिन्नसेतुसागरसलिलवत् सर्वमिदमात्मतयैव ऐकच्येनावभास[5]ंते। ज्ञानकर्मसमुच्चयानुष्ठानात्मनि चास्मिन् महायोगे प्रत्युदितविद्याशक्तिरेवाधिकृत इति कर्मयोगी सर्वत्र स्थावरे जङ्गमे च भूतग्रामे समदर्शनः, अद्वैतात्म[6]कतत्त्वैकदर्शीत्युक्तः। यश्चात्मा सोऽहमेवेत्यभेदं भगवान् प्रतिपादयितुमाह—यो योगी सर्वत्र भावजाते मां यथोक्तात्म-

---

१. BS[1] यथोक्त
२. BS[1] omits दर्शनं...अभेद
३. IO लक्षणस्य
४. BS[2] पारमेश्वर
५. BS[1] अवभासयते
६. BS[2] आत्मतत्त्वैक

तत्त्वैकरूपमुक्तयोपपत्त्या पश्यति; मयि च सर्वं तथैव पश्यति; तस्य तत्त्वदर्शिनो: अहं न प्रणश्यामि, नादृश्यो भवामि; सोऽपि मे स्वरूपभूतत्वान्न प्रणश्यति, नादृश्यत्वमापद्यत इति कर्मयोग¹सिद्धस्य योगिनः स्वात्मनश्चाभेदप्रतिपादनपरमेतद्भगवद्वचनम्। किंच यो योगी सर्वत्र सर्वस्मिन् देहप्रभृति सुखं दुःखं वान्यं वा कंचित्प्राणिधर्ममुक्तयोपपत्त्या संवेद्यमानस्य संविदात्मकत्वापत्तिरूपतश्च समं संविन्मात्रैकस्वभावं पश्यति बुद्धयते। कथम्? आत्मौपम्येन आत्मानमुपमानीकृत्य स्वानुभववदित्यर्थः—स सर्वथा सर्वेण² केनचिल्लोकसाधारणेन प्रकारेण वर्तमानोऽपि मयि वर्तते, मदभिन्नः 'अहमेवासौ' इत्यर्थः। स एवंविधो योगी सर्वास्ववस्थास्वविलुप्तनिरुत्तरसमाधिफलास्वादो दुर्वारविघ्नवृन्दानुबन्धदुःसाधयोगाङ्गानुष्ठाननिष्ठोपलभ्यसमाधिफलपूर्वोक्तयोग्यपेक्षया परमो निरुत्तरातिशययुक्तः ईश्वरवत् सर्वसाम्यदशाधिरूढत्वात् जीवन्मुक्त इत्यर्थः॥

अथ संप्रत्यननुभूतत्वादस्य सर्वसाम्यप्रतिपत्तिफलस्य समाधेरसम्भाव्यतां मन्यमानः **अर्जुन उवाच—**

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं पराम्॥ ३४॥**

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥ ३५॥**

---

१. IO and BN[1] omit योग २. BS[2] adds सर्वेण

हे कृष्ण! योऽयं समनन्तरं कर्मयोगलक्षणः अन्ययोगविलक्षणो योगस्त्वया प्रोक्तः, एतस्य परां स्थितिं प्रकृष्टां प्रतिष्ठां न पश्यामि, न तर्कयामि, चञ्चलत्वात् अनवस्थितत्वात्; यस्मात्तत्साधनं मनश्चञ्चलं प्रकृतिचपलम्, अतः प्रमाथि प्रमथनशीलम्, यतः कृच्छ्रलब्धामपि भूमिकामुन्मार्गप्रवणत्वादाशु विनाशयति, न च तद्व्यावर्तयितुं शक्यम्; यतो बलवत् अस्य विषयान्प्रत्यभिधावतः शैलेन्द्रशिखरविशीर्यमाणसलिलौघवत् दुर्धरं बलम्; यतो जन्मसहस्राभ्यस्तेषु विषयरसेषु दृढासक्तत्वात् दृढम्; तस्यैवंविधस्यास्य मनसो निग्रहमुत्पथात्प्रतिषेधं सुतरां दुष्करं दुःसाधं संभावयामि। कस्येव? वायोरिव। यथा वायुः स्वाच्छन्द्येन दिक्षु प्रसरन्निगृहीतुमशक्यः, एवमेतन्मनः॥

अथैतदभ्युपगमपूर्वकमस्यैवमुत्तरं भगवानाह—

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ ३६॥

नास्त्यत्र संशयः इदं चलं स्वभावचपलं मनः दुःखेन निगृहीतुं शक्यते; किंत्वभ्यासेन वैराग्येण चोपायद्वयेन गृह्यते नियम्यते। अभ्यासश्चात्र कर्मयोगः "पश्यन् शृण्वन्" इत्यादिप्रागुक्तक्रमेण सर्वेन्द्रियवृत्तिषु विहितविषयौन्मुख्येन

---

१. BS[2] यदि तत्सा
२. IO धार्यतः
३. BN[1] adds दृढासक्तेषु
४. IO प्रतिषेधनं
५. IO omits दुष्करम्
६. IO and BS[2] शक्य एव
७. BS[1] यथैत
८. IO and BS[2] पूर्वमुत्तरं
९. BN[1] योगे

प्रवर्तमानासु सर्वप्राणवृत्तिषु च शरीराव्यभिचारित्वात्तथैव प्रवर्तमानास्वप्युपदेशानुसारिणा क्रमेण यथोक्ते स्वात्मनि निवेशनात्मकस्थितिलाभविषये यत्नः वैराग्यं चानिषिद्धविषयस्पर्शानुभूयमाने सुखे सहजानन्दनिरुपमास्वादाविस्मरणादनासङ्गः ; ताभ्यामेवंविधाभ्यां कर्मयोगा[1]धिकृतपुरुषैकगोचराभ्यामेतत्सुचञ्चलमपि चित्तं नियन्तुं शक्यमेव ॥

[2]अत एव—

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३७ ॥

यतो व्याख्याताभ्यासवैराग्यलक्षणसाधनाभावादसंयतात्मना अनियमितान्तःकरणेन पुरुषेण एष योगो दुष्प्रापो दुर्लभः ; वश्यात्मना विधेयान्तःकरणेन पुनः पुरुषेण यतता नित्यमविच्छिन्नोत्साहतया प्रयत्नं कुर्वता उपायतो यथोक्तज्ञानलक्षणादुपायात् स्वीकर्तुं शक्य एव ॥

अथोपायस्य ज्ञानरूपस्य श्रुतिमात्रावगतत्वा[3]दभ्यासवैराग्ययो[4]श्चात्यन्तदुःसाधत्वादात्मनश्च संसारिधर्मानुपरमाद्योगस्य दुरवापस्य योगं प्रत्युपायत्वं स्यान्न वेति संशयानः अर्जुन उवाच—

[5]अयतः श्रद्धयोपेतो योगाच्चलितमानसः ।
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥ ३८ ॥

---

१. BN[1] योगादिकृत
२. IO अत आह
३. All except BS[2] त्वाद्यभ्यास
४. BS[2] notes an alternative reading without च
५. IO and BS[1] अयतिः

अनेकचित्तोऽविश्रान्तो मोहस्यैव वशं गतः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३९ ॥

आप्तोपदिष्टादुपायान्निःसंशयतया फलस्य संभावना श्रद्धा इति किलोक्ता; तयोपेतः श्रद्धावान् ; अत एव सतां सत्पुरुषाणामुत्तमफलार्थिनां पुंसां पन्थानं प्रेप्सुरपि यदि योगादुक्तलक्षणात्समाधेश्चलितमानसः विच्युतचित्तवृत्तिः, अत एवायतोऽयत्नशून्यः ; ततश्च ब्रह्मणः परस्योपेयस्य तत्त्वस्य पथि प्राप्त्युपायरूपे मार्गे प्रमूढः प्रकर्षेण मूढः सम्यग्ज्ञानरहितः ; अतश्चोपायानिश्चयादनेकचित्तः विकल्पाकुलत्वात्प्रतिक्षणं चञ्चलत्वाद्बहुविधमनोवृत्तिः ; अत एवाविश्रान्तो न क्वचिल्लब्धस्थितिः ; यतो[अतो] मोहस्यैवाज्ञानस्य वशं गतो विधेयतां प्राप्तः स्यात् । तदेतया दोषसामग्र्या योगसंसिद्धिं समाधिलाभमप्राप्तः सन् कां गतिं गच्छति? तस्यैवंविधस्य श्रद्धामात्रैकालम्बनस्य परिशिष्टोपायरहितस्य देहादूर्ध्वं कीदृशे योन्यन्तरे[4] गमनमित्यर्थः ॥

तदेव पृच्छति—

कच्चिन्नोभयविभ्रंशाच्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विनाशं वाधिगच्छति ॥ ४० ॥

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ४१ ॥

---

१. All except BS[2] विभ्रान्तो
२. IO and BS[1] अप्राप्तोप-
३. IO चित्त
४. BN[1] योन्यन्तरा
५. BN[1] कश्चिन्नोभय
६. IO विभ्रष्टः

केचिदित्यभीष्टप्रश्ने । अपि नामैवं श्रद्दधानः पुरुषः स्वर्गापवर्गलक्षणस्य गतिद्वयस्यापि भ्रंशादभावादेकतरगतिं प्रत्याशासंभवे छिन्नाभ्रमिव पवनविशीर्णो जलदो यथा विनश्यति तद्वत् पुनःसन्धानमापद्यते, उत गतिद्वयोपायनिश्चया-भावात् अप्रतिष्ठः निरवलम्बनस्सन् आत्यन्तिकमेव विनाशं प्राप्नोति, अपुनरु-त्थानायैव संसारश्वभ्रे पततीति? एतमेवंविधं सन्देहं मम विनाशयितुमर्हसि, यतस्त्वत्तः सर्वसंसारिगतिवेदिनः सर्वज्ञादन्योऽस्य यथोक्तस्य संशयस्य परिहर्ता न संभाव्यते, यत उक्तं भगवता—"बहूनि मे व्यतीतानि" इत्यत्र श्लोके सर्वजन्तूनां नानागतिवेदित्वम् ॥

अथैवंविधसंशयच्छेदाय भगवानुवाच—

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४२ ॥**

तस्यैवंविधस्य भोगापवर्गलक्षणसिद्धिबीजभूतश्रद्धागुणसंस्कृतचित्तस्य पुंसः क्वचिदपि विषये विनाशः सर्वदुर्गतिहेतुः ज्ञानभ्रंशलक्षणस्तिरोभावो न विद्यते ; क्व न विद्यते, इहामुत्र वा ? इहेति दृष्टानुश्रविकभोगाधिकरणे संसार इत्यर्थः । अमुत्रेत्येतस्मादन्यत्र स्वात्मप्रतिष्ठाहेतावपवर्ग इत्यर्थः । यतः कल्याणवान् कुशला-भिनिवेशी न कश्चिद्दुर्गतिमज्ञानदूषितत्वाद्दुष्टां योनिं प्राप्नोति । श्रद्धावतश्च

---

१. BN[1] कश्चिदिति
२. IO भ्रंशाभावात्
३. IO संसार
४. BS[1] omits अस्य

कल्याणकारित्वमवश्यमेव स्थितम् । श्रद्धा[1] हि नाम परमेश्वरप्रसादकल्पद्रुमस्य बीजकणिका ; तं भोगापवर्गलक्षणफलसम्पत्तिसमृद्धमकृत्वा न निवर्तते, केवलं मृदु-मध्य[2]ाधिमात्रत्वादितारतम्यात्कालविशेषापेक्षिणी स्वकार्यं निवर्तयति ॥

यत एवमतः—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४३ ॥

अथवा योगिनामेव जायते श्रीमतां[3] कुले ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४४ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
ततो भूयोऽपि यतते संसिद्धौ कुरुनन्दन ॥ ४५ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४६ ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्ध[4]स्ततो याति[5] परां गतिम् ॥ ४७ ॥

योगभ्रष्टो योगात्[6] यथोक्तज्ञाननिष्ठतया शास्त्रविहितस्वकर्मानुष्ठानलक्षणात् समाधेर्भ्रष्टः, परमेश्वरसमापत्तिलक्षणं फलमप्राप्यैव विच्युतः सन् श्रद्धाबीजे सत्यपि

१. IO, BS[1] and BS[2] श्रद्धादि नाम
२. BS[2] मध्यादि
३. BS[1] धीमतां This is noted as an alternative reading in BS[2] also.
४. IO, BS[1] and BN[1] संसिद्धिः
५. BS[1] and BN[1] यान्ति
६. BN[1] omits योगात्

ईश्वरेच्छावशादेव संप्रति तीव्रसंवेगाभावाद्यत्नादिसहकारिसामग्रीवैकल्याद्धि काला-न्तरापेक्षिफलः सन् पुण्यकृतां प्रकृष्टयज्ञदानतपःप्रभृतिशुभकर्मकारिणां सम्बन्धिनो लोकान् तत्कर्मोचितभोगाधि[1]करणभूतानि भुवनानि प्राप्य आसाद्य, तत्र च तत्कर्मानु-रूपाः शाश्वतीः समाः सहस्रसङ्ख्यानि वर्षाण्युषित्वा निवासमनुभूय ततस्तादृश-कर्मफलोपभोगान्ते कर्मभूमावस्यां शुचीनां श्रीमतां श्रद्धाभिजनकर्मणां लक्ष्मीवतां कुले अन्वये अभिजायते जन्म लभते। येन भोगाभिवाञ्छालेशकलु[2]षितचित्तत्वा-दसम्यगनुष्ठि[3]तात्कर्मयोगाद्भ्रंशं[4] प्राप्तः, तस्यैषा गतिर्निर्दिष्टा। यस्य त्वपवर्गप्रवणत्वेऽपि सति कुतश्चित्प्रतिबन्धात्कर्मयोगः सम्यङ् न निर्वृत्तः, स इमां गतिमाप्नोतीति पक्षान्तरोपन्यासेनाह। अथवा योगभ्रष्टो योगिनां यथोक्तकर्मसमाधिनिष्ठानाम्, अत एव धीमतां प्रकृष्टज्ञानयुक्तत्वात्प्रशस्य[शस्त]बुद्धिमतां कुले अन्वये अभिजायते समु-त्पद्यते। ईदृशमेतदेवंविधानां योगिनां कुले जन्म दुर्लभतरं कर्मयोगभ्रष्टमन्तरेण न केनचित्प्राप्तुं शक्यम्। तस्मिंश्च जन्मनि तं बुद्धिसंयोगं तादृशं बुद्ध्या ज्ञान-संस्कृतया[5] धिया सम्बन्धं लभते। कं तम्? पौर्वदेहिकम्। पूर्वस्मिन् देहे भवम्; यत्र ज्ञानक्रियासमुच्चयानुष्ठानरूपो योगः तेनाश्रितस्सन्न निर्वाहितः। तत्र किल तथाविधयोगसमाश्रयणहेतुभूतज्ञानसंस्थितया बुद्ध्या सम्बन्धोऽस्याभूदेव। स च परमेश्वरानुग्रहं विना न भवति। स च परमेश्वरानुग्रहो नादत्तफलो विरमति। अतः कुतश्चिद्विघ्नलेशात्कंचित्कालं विलम्ब्य पुनरभिव्यज्यत ए[6]व। ततस्तद्बुद्धियोगमाहा-

---

१. BN[1] भोगादिकरण

२. BN[1] कलुषचित्त
BS[2] कलुषितत्वात्

३. IO अनुष्ठितत्वात्

४. BS[1] and BN[1] भ्रंशः

५. BS[1] संस्कृतया

६. BS[2] एवं

त्यात् भूयः पुनरपि प्रयत्नमारभते। संसिद्धिनिमित्तं[1] योगफलावाप्त्यर्थं यस्मात्तेनैव पूर्वजन्मसम्बद्धेन मन्देनाप्यभ्यासेन योगविषयेण संस्कारात्मनावस्थितेनावशोऽपि अनिच्छन्नपि ह्रियते आत्मसात्क्रियते। कस्मात्तेनाभ्यासयोगेन ह्रियत इत्याह— यस्मात् कर्मसमाधिलक्षणस्य योगस्य जिज्ञासुरपि स्वरूपं ज्ञातुकामोऽपि[2] शब्दब्रह्म शास्त्रात्मकं तत्त्वमतिवर्तते ऽतिक्रामति, निश्चयाभावाद्योगविषया प्रवृत्तिरेव न संभवति। संशयितस्य च शास्त्रमुपकारकम्। अतो योगजिज्ञासुः शब्दब्रह्मातिवर्तत इत्युक्तम्। स पुनर्योगी प्रयत्नादुद्योगाद्यतमानो योगं[3]मनुतिष्ठन् तदनुष्ठानसंस्कारवशाच्च संशुद्धकिल्बिषः प्रक्षालिताज्ञानमयकलङ्को बहुभिर्जन्मभिः परां काष्ठामधिरूढे तादृशि ज्ञाने ततोऽनन्तरं संसिद्धः सम्यक् प्राप्तप्रापणीयः, परां गतिं परमात्मसमापत्तिलक्षणां प्रकृष्टां भूमिं प्राप्नोति, यतः परं गम्यान्तरं न विद्यते॥

एवंविधस्य कर्मयोगिनः प्रशंसार्थमाह—

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥ ४८॥**

सुतीव्रस्यापि तपोमात्रस्य अन्तवत्फलत्वात्तपस्विभ्यो योगी नित्यनिरुत्तरानन्दमयसमाधिमानधिकः प्रकृष्टः; ज्ञानिभ्योऽपि केवलज्ञानमात्र[4]शरणेभ्यः; तथा कर्मिभ्यो यज्ञादिकेवलकर्मवद्भ्योऽधिकः। तस्मात्त्वं यथोपदिष्टं योगं स्वीकृत्य

---

१. IO and BS[2] add प्रयत्नविशेषणमेतत् after निमित्तं BN[1] adds it after अवाप्त्यर्थं
२. BN[1] and BS[1] कामोऽपि
३. BN[1] योगमव
४. IO omits मात्र

सर्वोत्कृष्टो योगी भव । ये केचन योगिनो दर्शनभेदात् संभवन्ति, तेषामप्ययमेवंविधो योगी प्रकृष्टतम इति प्रतिपादयन्नध्यायमुपसंहरति—

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४९ ॥**

समस्तानां योगिनां मध्ये स योगी युक्ततमोऽतिशयेन युक्तः समाहितो मम मतः । कोऽसौ ? यः श्रद्धावान् सर्वसिद्धिहेतुभूतया श्रद्धया युक्तः सन् मद्गतेनान्तरात्मना यथाप्रतिपादितज्ञानगत्या मां परमात्मानमीश्वरमेकं[1] तत्त्वं परमोपेयतयागतेन प्रपन्नेनान्तरात्मनान्तःकरणेन भजते, वाङ्मनःकायव्यापारान्मत्परानेव कुर्वन् मद्भक्तो भवति । यथोक्तज्ञानविधिना यथोक्तमत्स्वरूपावगमपूर्वं मामेव य उपास्ते स एव समाहिततम इत्योम् ॥

याता यस्याङ्गभावं दधति यदि परं योगतामन्ययोगाः
तं योगं ज्ञानकर्मव्यतिकरसुकराभ्यासवैराग्यगम्यम् ।
सम्यक् संप्राप्तकामैः परमगुरुरिति श्रद्धया पर्युपास्यः
षष्ठोऽध्यायोऽयमार्यैरवहितमतिभिस्त्यक्तसर्वान्यकार्यैः ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
षष्ठोऽध्यायः ॥



---

१. IO आत्मानमेकमीश्वरं

## ॥ अथ सप्तमोऽध्यायः ॥

---

एवं यदङ्गभावमापन्नानां योगान्तराणां योगत्वसिद्धिः तस्य ज्ञानकर्मसमुच्चयरूपस्य निरतिशयस्य योगस्यानुष्ठातुर्मद्भक्तस्य कैर्मयोगिनोऽपि सतस्तत्त्व ज्ञेयशेषो विद्यत एवेत्यात्मन एव जगत्कारणत्वादि प्राक्सूचितप्रायं ज्ञेयान्तरं स्फुटतया प्रतिपादयितुं भगवानुवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रितः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

षष्ठाध्यायपरिसमाप्तौ मद्गतेनान्तरात्मना यो मां भजति स युक्ततम इति यदुक्तम्, तदेवै मय्यासक्तमना मैदाश्रितश्च इत्यनेन पदद्वयेनेहानूदितम्। ततश्च मत्स्वरूपं ज्ञात्वा मां भजंस्त्वं यथा येन प्रकारेण सन्देहरहितं कृत्वा समग्रं संपूर्णस्वरूपं मां ज्ञास्यसि प्रतिपत्स्यसे, तदिदानीं शृणु । अयं हि जगत्प्रपञ्चः स्वतःसिद्धनित्यप्रधानपरिणामतया कैश्चित्प्रतिपन्नः; अन्यैः परमाणुपाकप्रभवत्वेन; इतरैः क्षणिकज्ञानसन्तानभ्रमजन्यतया; परैश्चान्यथा च—इति किमत्र तत्त्वं स्यादित्यस्ति संशयस्यावकाशः । तन्निश्चयार्थं चेदं वक्ष्यमाणमवधारय ॥

---

१. IO परमयोगिनोऽपि.
BS[2] notes this as an alternative reading.

२. All except BS[1] omit तदेव

३. IO and BN[2] समाश्रित
BS notes this an an alternative reading.

त[1]दवधारणादेव च समग्रं मत्स्वरूपज्ञानं भविष्यतीत्याह—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा न[2] पुनः किंचिद् ज्ञातव्यमवशिष्यते ॥ २ ॥

इदं समनन्तरप्रस्तुतं जगत्प्रपञ्चपरमार्थप्रतिपत्तिविषयं मत्स्वरूप[3]साकल्यसंवित्तिविषयं च ज्ञानम्; उपपत्त्युपन्यासरूपं शास्त्रम्; तदुभयसाक्षात्कारहेतुना विशिष्टेन ज्ञानेन सहितमशेषतः कथयिष्यामि, यत्प्रतिपद्य भूयो बोद्धव्यं वस्त्वन्तरं न किंचिदे[4]वशिष्यते, यदवगमाद्विदितसकलवेद्यः कृतकृत्यो भविष्यसीत्यर्थः ॥

एतयोश्च ज्ञानविज्ञानयोर्मत्संवेदनमेव फलं पर्यवस्यति; तच्च परमरहस्यत्वान्न सर्वसुलभम् । यतः—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

इह निरवधौ प्राणिसर्गप्रपञ्चे मनुष्यत्वमेव तावद्दुर्लभम् । ते हि मनुष्याः कर्मभूमिलब्धजन्मानश्चतुर्वर्गसिद्ध्यधिकारिणः । तेषां मनुष्याणां सहस्रेषु मध्ये कश्चिदेव तथाविधकर्मपरिपाकवशादुत्पन्नसंसारविरागः । सिद्धये अपुनर्जन्माभावलक्षणप्राप्तये । य[5]तते तत्तदुपायाहरणप्रयत्नपरो भवति ; न तु तावत्सिद्धिं प्राप्नोति ।

१. IO तदेव
२. BN[1] and BS[1] नेह भूयोऽन्यद्
३. BN[1] स्वरूपं
४. BS[2] नावशिष्यते
५. IO omits यतते

तेषामपि यतमानानां सिद्धानां तत्तद्दर्शननिश्चितमोक्षलक्षणां सिद्धिं प्राप्तानामपि मध्ये कश्चिदेव प्रकृष्टपुण्यपरिणामवशादवाप्तमदनुग्रहाविर्भावितयथोक्तनिरतिशय-श्रद्धाभक्तिप्रसाधितविवेकजज्ञानप्रभावाद्यथाप्रतिपादितस्वरूपं मां वेत्ति, आत्मत्वेन प्रतिपद्यते ॥

तज्जगत्स्वरूपप्रतिपादनपूर्वमुपदेष्टुमाह—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

योऽहं सततचिन्मात्रस्वरूपाप्रच्युत एव अचिन्त्यनिजमायाशक्तिमाहात्म्यात् जडचेतनविभागेन द्विरूप इवावभासमानो जगत्क्रीडामिमां निर्वर्तयामि । यस्य[1] मे सुखदुःखमोहात्मकतया सर्वभावानुगतसत्त्वादिगुणत्रयरूपा जडा या प्रकृतिः सेयमष्टधा अष्टाभिः प्रकारैर्भिन्ना विभागं प्राप्ता । के तेऽष्टौ प्रकाराः? भूमिरित्यादि । तत्र भूम्यादिभिः पञ्चभिरप्ययं क्रमनिर्दिष्टैः प्रकारैः कारणभूतानि सूक्ष्माणि निर्दिष्टानि वेदितव्यानि । तैश्च[2] कार्यभूतानि[3] पञ्च स्थूलभेदानि एकैकापायपञ्चादि-गुणानि संगृहीतानि । बुद्धिकर्मेन्द्रियवर्गश्च दशसङ्ख्या इति भूम्यादिभिः पञ्च-भिस्तत्त्वविंशतिराक्षिप्ता । मनश्च सर्वेन्द्रियनायकम् । बुद्धिर्निश्चयात्मिका । अहंकारो

---

१. BS² तस्य
२. BS¹ omits तैश्च कार्यभूतानि
३. BN² adds पृथिव्यादीनि

देहादिष्वनात्मभूतेष्वात्मप्रत्ययः—इति त्रिविधमन्तःकरणमिति त्रयोविंशतिसंख्यः कार्यकारणवर्गः; तदनुगुणं च त्रैगुण्यात्मकं प्रधानं कारणमिति तत्त्वचतुर्विंशतिरूपा जडत्वेनावभासमाना प्रकृतिः। इयं चापरा वक्ष्यमाणजीवभूतप्रकृत्यपेक्षया स्थूला, यतोऽसो जडा वेद्या परतन्त्रा विनश्वरी सती चेतनाद्वेदकात्स्वतन्त्रात् नित्याश्च जीवतत्त्वादपकृष्टाः। अत एवाह—इत उक्तायाः प्रकृतेः पुनरन्यां विलक्षणां परां प्रकृष्टां जीवभूतां मायावशादन्योन्यभिन्नत्वेनावभासमानक्षेत्रज्ञत्वं प्राप्तां विद्धि जानीहि। कीदृशीम्? यया कर्तृभूतयेदं यथोक्तं तत्त्वव्रातमयं जगत् धार्यते। जीवलक्षणपरप्रकृतिनिबद्धा जगत्पदार्थस्थितिः॥

एवं मायावभासितपरापरभेदेन जडचेतने द्वे प्रकृती—

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय।**

एते यथाप्रतिपादितस्वरूपे मदीये [1]प्रकृती योनिरुत्पत्तिकारणं एषां तां[2]दृशी सर्वाणि भूतानीत्युपधारय, निश्चयेन बुद्धयस्व। जीवभूतादिप्रकृतिश्चित्स्वरूपत्वाव्यभिचारात् वस्तुतः परमकारणात् परमात्मनो मत्तः परमेश्वरादभिन्नापि मन्मायावशात् भेदमिवापन्ना जडया प्रकृत्यानादित्वेन सम्बद्धा सती तामेव गुणात्मिकां प्रकृतिं महदादिभावेन परिणतामात्मत्वेनाभिमन्यमाना [3]सुखादिसाधनभावेन चेतनाचेतननानाभावरूपं विषयमपेक्षत इत्यादि प्रकृतिपुरुषसम्बन्धो जगतः कारणम्—इत्येते प्रकृती सर्वभूतानां योनिरित्युक्तम्॥

---

१. IO omits प्रकृती
२. All except BS[2] तादृशी
३. BN[2] and BS[3] खसुखादि

तथाच वक्ष्यति—

"यावत्किंचित्संभवति सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥" इति[1]

एवं जगत्कारणभूतयोरेतयोर्मत्सम्बन्धिन्योः प्रकृत्योः मन्मायैव एवमवभासने कारणमिति ॥

**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

कृत्स्नस्य सर्वस्य निरवधिचराचरभूतभेदमयस्य जगतः प्रभवः प्रलयश्चाहम्, मत्त एवैतत्प्रभवति, मय्येवैतत्प्रलीयत इत्यर्थः । मत्[2]सङ्कल्पमात्रोद्भावितया माययैव ते जडाजडे प्रकृती आभास्येते । तन्निबन्धनौ च सर्गसंहारावित्येतयोर्जगत्प्रभव-प्रलययोरहमेव मूलकारणमित्यर्थः[3] ॥

अत[4] एव ममैव परमकारणत्वात्स्वरूपलाभे कारणान्तरापेक्षा नास्तीत्याह—

**मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

जडा प्रकृतिरपरेत्युक्ता; तदपेक्षया जीवभूता परा इत्येतयोस्तु कारण-भूतोऽहं परतर इति मत्तोऽन्यत्किंचिद्वस्त्वन्तरं न संभवति, यन्मत्कारणत्वेन परतमं

---

१. IO adds उक्तम्
२. BN[1] omits मत्
३. IO omits इत्यर्थः
४. IO omits अत...कारण

स्यात्; अहमेव कारणं निरुत्तरमित्यर्थः। यत[1] इदं सर्वं भावजातं मयि सर्वाश्रयभूते प्रोतं[2]मनुस्यूतम्। कथम्? एकस्मिंस्तन्तौ यथा परस्परपृथग्भूता अपि मणिगणा व्यवस्थितिमनुभवन्ति, तथा मन्मायोद्भाविताऽन्योन्यभेदाश्चराचरभावा मय्येवैकस्मिन्नाश्रये तिष्ठन्तीत्यर्थः॥

ननु उभे एते जडाजडे मम[3] प्रकृती; प्रकृतिश्च स्वभाव उच्यते; तत्कथमद्वयचिन्मात्रस्वरूपस्य जडात्मकत्वा[4]द्विनश्वरश्चेतनोऽपि[5] परस्परावच्छेदान्नानारूपस्वभाव उपपद्येत[6]—इति वास्तवं प्रमात्रद्वैतं प्रतिपादयितुमाह—

रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु॥ ८॥
पुण्यः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु॥ ९॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्॥ १०॥
बलं बलवतां चाहं कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ॥ ११॥

---

१. BN[1] य इदं
२. IO omits प्रोतं
३. IO and BN[1] omit मम
४. BS[2] जडाजडात्मत्वात्
५. BS[1] चेतने
६. IO adds उच्यते

संवेद्यमानाः सन्तः [1]सर्वे भावाः तं तमात्मानं [2]लभन्ते, संवेद्यमानताव्यतिरिक्तेन प्रकारान्तरेण कस्यांचिदवस्थायां केषामप्यनुपलम्भात्। इत्थं वास्तव एक एव संवेदिता संविदन्नेव भावान् सृजति। ततो भावरूपा संवेदितुरेव शक्तिर्विजृम्भते, नान्यत्तद्व्यतिरिक्तं किंचिदिदम्। अतः परापरे मे प्रकृती स्वभावभूते इति स्वतःसिद्धं प्रमात्रद्वैतं गर्भीकृत्योपक्रम एव यदुक्तं तत् "रसोऽहम्" इत्यादिना श्लोकचतुष्टयेनोपपादयति। तत्र यो यस्य प्राधान्येन वर्तते गुणः, स एव तस्यात्मेति अपां रस एवात्मा, स चाहम्; यत उक्तेन न्यायेन रस्यमानतया संवेद्यमाना आपो रसरूपमात्मानं [2]लभन्ते; ततो रसयितुरेव रसात्मिका शक्तिः; ममैव चानुभवितृत्वलक्षणस्वभावाव्यभिचाराद्रसयितृत्वम्; ततोऽप्स्वहं रस इत्युक्तम्। यथाप्सु रस आत्मत्वेन व्यवस्थितः, एवं पृथिव्यां गन्धः [3]शशिरविविभावसुषु तेजो[4]लक्षणभूतभेदेषु प्रकाशः तेजःशब्दाभिहितो रूपगुण आत्मत्वेन व्यवस्थितः। तथा खे नभसि शब्दो गुणः। एवं वायौ स्पर्शगुणोऽप्यत्र परिसङ्ख्येय इति भूतपञ्चके गन्धादिप्रधानगुणात्मना पूर्वोक्तेन न्यायेनाहं व्यवस्थित इति पूर्वोक्तेन विभागेन भूतपञ्चकसंगृहीततत्त्वविंशतिरूपजडप्रकृतिविभागे मम स्वभाव इत्युपपादितम्। पुण्यशब्दश्चात्र प्राधान्यापेक्षया सर्वगुणेषु विशेषणत्वेनानुवर्तनीयः। एवं भूतेषु प्राणिषु धर्माविरुद्धः कामः सङ्कल्पो[5]ऽहम्; मनोऽहम्; तथा नृषु जीवेषु पौरुषमहङ्कारात्मकं पुरुषत्वमहमेव; तथा बुद्धिमतां बुद्धिरहमेवेति। मनोऽहंकारबुद्धिलक्षणमन्तः-

---

१. IO सर्वभावाः
२. All except BS[2] लभते
३. IO and BS[1] शिशिरविभावसु
४. BS[1], BS[2] and BN[1] लवण
५. BN[1] and BS[2] omit अहं

करणं पुरुषाणां प्रधानं धर्मत्रयं पूर्वोक्तेन न्यायेनाहमेवेति त्रिभिरेतैः सहितः त्रयोविंशतिभेदः कार्यकारणवर्गश्चतुर्विंशेन[1] प्रधानेनानुगतो जडप्रकृतिप्रपञ्चो ममैव स्वभाव इति व्यवहितैः पादैः प्रतिपादितम्। एवमेव सर्वभूतेषु जीवनं प्राणनं प्रधानम्, तदप्यहमेव[2]; तथा सर्ववेदेषु प्रणव ओंकारः स्वोदिताविकृतध्वन्यात्मको[3]ऽहमेव; स हि प्रकृतिभूतत्वात्सर्ववेदेषु प्रधानम्; तस्य विकारभूता हि सर्वे वेदाः; तथा सर्वक्रियासु तपोमयी क्रिया प्रधानम्; ततस्तपस्विषु वर्तमानं तपोऽहमेव; कामरागविवर्जितं बलं बलवतां प्रधानम्; तदपि पूर्वोक्तेन न्यायेनाहमेव; तथा तेजस्विनां प्रभावातिशययुक्तानां तेजःप्रभावो मुख्यः, तदप्यहमेव। एवमनेन क्रमेण सर्वभूतानां बीजं हेतुरहमेवेति जडचेतनभेदेन द्विप्रकारा प्रकृतिर्ममैव स्वभाव इत्यनेन प्रकारेण विप्रकृष्टसमन्वयैः पदैः[4] प्रतिपादितम्॥

एवम् "रसोऽहम्" इत्यादि प्राधान्यविवक्षयोपलक्षणमात्रत्वेन[5] प्रतिपादितम्। परमार्थतस्तु पूर्वोक्तेन न्यायेन तत्पदार्थजातं किंचन न संभवति, यन्नाहमिति प्रतिपादयितुमाह—

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेह तान्विद्धि न त्वहं तेषु ते मयि॥ १२॥

अपर्यन्ते भावप्रपञ्चे प्रकृतिपरिणामस्वरूपत्वात्[6] सर्वस्य भावस्य त्रैगुण्ये स्थिते, केचित्सत्त्वप्रधाना गुणीभूतरजस्तमस्काः; केचिदेवमेव रजःप्रधानाः; केचित्तमः-

१. BS[1] विंशप्रधान
२. BS[1] तदापि
३. IO, BN[1] and BS[2] अविकृतलाद्यात्मकः
४. BN[1] omits पदैः
५. BN[1] omits मात्र
६. BN[1] परिणामरूपत्वात्

प्रधाना:—इति तारतम्यभेदानन्त्यम्[1]नपेक्ष्य त्रित्वेन संगृहीता इति ये केचन सात्त्विका राजसा: तामसाश्च भावा: संभवन्ति, तान् पूर्वोक्तेन न्यायेन मत्त एव [2]परमकारणात् जातान् जानीहि ; किंतु तेषु मत्कार्यज्ञेयरूपतया लब्धात्मकेषु भावेषु सत्सु नाहं भवामि, न[3] तत्सत्ताधीन[4]सद्भावता मम स्वभावसिद्धनित्योपलब्धृ-मात्रधर्मकस्य विद्यते। ते तु तथारूपा मयि सति भवन्ति, उक्तोपपत्त्या मत्सत्ताधीनसद्भावा: सर्व एव भावा इत्यर्थ: ॥

नन्वेवं स्वशक्तिमात्रो[5]पादानतया सर्वकर्ता परमेश्वर एक एवायमात्मा ; तत्कुतोऽयं जीवानां व्यामोह: ? यदेते कारणान्तरलब्धात्मकं किंचिदेव स्वविषयभूतं वस्तु जानन्ति, कुर्वन्ति च इत्यत्र वक्ष्यमाणं स्वमायाशक्तिवैभवं गर्भीकृत्यो-त्तरमाह—

**त्रिभिर्गुणमयैर्भावैरेभि: सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्य: परमव्ययम् ॥ १३ ॥**

सर्वं जगत् सकलो जीवलोक: एभि: सात्त्विकादिभि: पूर्वं प्रतिपादितैर्गुण-मयै: सुखदु:खमोहपर्यवसायिप्रतिपत्तिभिर्भावै: संवेद्यै: [6]पदार्थै: यथास्थितस्वभाव-प्रत्यवमर्शव्यवधायकतया मोहितं जनितान्योन्यभिन्नदेहाद्यात्मप्रत्ययलक्षणाज्ञान-

---

१. BN[1] अपेक्ष्य
२. BS[1] प्रकाशरूपात्
३. BS[2] adds तु
४. IO धीना
५. BS[1] मात्रोपपादन
६. BS[1] omits पदार्थै:

तिमिरं सर्वेभ्यो भावेभ्यो वेद्यैकस्वरूपत्वादनित्येभ्यः परं व्यतिरिक्तस्वभावम्, अत एवाव्ययम्, अविद्यमानयथाप्रतिपादितस्वरूपप्रच्युतिलक्षणक्षयं मां परतत्त्वं न जानाति, न प्रतिपद्यते ॥

ननु प्रबन्धतो यथाप्रतिपादितेन प्रकारेण त्वमेव परमेश्वरः परमात्मा एकं तत्त्वं विजृम्भसे। तत्क एते गुणा नाम यैर्न्मयैर्भावैर्मोहितं जगत् मां न जानातीत्युक्तम्? अत्राह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते [२]मायामेतां तरन्ति ते ॥ १४ ॥

यद्ब्रवीषि, क एते गुणा नाम, एषा हि गुणमयी दैवी माया । इत्थं देवनात् क्रीडनाद्देवस्य सतो मम सम्बन्धिन्य[३]सत्यपि सत्यवदाभासयन्ती मदीया शक्तिः; मम किल पारमार्थिकी परा शक्तिरेकैव; साहमिति यथोक्तं [४]मत्स्वरूपं परामृशन्ती [५]विद्येत्युच्यते । इदमिति तु परामृशन्ती मम मायेति व्यवह्रियते । इदमिति [६]तु परामर्शो व्यतिरिक्तवेद्यार्थोद्भावनेन स्वरूपं लभते। तच्च वेद्यं जडचेतनभेदेन सङ्ग्रहतो द्विप्रकारकमेव, अवान्तरभेद[७]परिकल्पनया अनन्तमपि सुखदुःखमोहभेदात् त्रिविधप्रत्ययरूपतया वेद्यत्वेन पर्यवस्यन् सत्त्वादिगुणत्रयात्मक-

---

१. BS[1] मन्मयैः
२. IO and BS[2] मायामेतां
३. IO and BS[2] सत्यमपि
४. IO पर
   BN[1] and BS[1] मम
५. BS[1] and BN[2] omit विद्या... शन्ती
६. BS[2] omits तु
७. BN[1] omits परि

तया सर्वं संगृहीतम्। अतो विश्वभावमयी गुणमयी मम मायेत्युक्तम्। अतः क्रीडैकप्रयोजनस्यापि ममेच्छयैव गुणमयत्वेन विजृम्भमाणा न केनचित्परेणातिक्रमितुं शक्येति दुरत्ययेत्यर्थः।[1] ननु यद्येवमेषा न केनचिदन्यथा कर्तुं पार्यते, तत्सर्वथा संसारविश्रमानुपरमे प्रसक्ते निरर्थकमेवायमपवर्गमार्गप्राप्त्योपायोपदेश इत्यत्राह—मामेवैकं यथोक्तस्वरूपं परमेश्वरं परमात्मानं मदनुग्रहेच्छाप्रबोधिताः सन्तो ये प्रपद्यन्ते मैंद[2]भेदसमापत्ति[3]पर्यवसायिना यथोक्तेन ज्ञानेन समाश्रयन्ते त ऍनाम[4]तितरन्ति अतिक्रामन्ति। अहमेवैकः सततविकस्वरप्रकाशात्मा[5] प्रभाकर इव तमिस्रयानया मायया[6] न कदाचित्संस्प्रष्टुं[7] शक्यः। ततो मत्स्वरूपसमापन्नत्वाद्गलितदेहाद्यहंप्रत्ययतया अहमेव सम्पन्नः एतां[8] परमार्थनिःस्वभावभावभेदाभाससन्तमसमयीं मायामतिलङ्घयितुमलम्, न तु तस्यास्तदितरे मोहनिद्रानिमीलितनिजदृष्टयः स्वरूपमपि संवेदितुं शक्ताः॥

ननु कस्मात्त्वां सर्वः कश्चिन्न प्रपद्यत इत्याह—

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः॥ १५॥**

मदिच्छयैवासुरं रजस्तमोबहलं भावं सत्तां सर्गमापन्नाः। अत एव मायया यथोक्तस्वरूपया अविद्यया अपहृतज्ञाना आक्षिप्तपरमार्थबोधाः। ततश्च दुष्कृतिनः

---

१. BN[1] दुरत्ययेत्युक्ता
BS[2] दुरत्ययेति त्यक्ता
२. BN[1] मदेकपर्यव
३. BS[2] omits समापत्ति
४. BN[1] and BS[1] एनं
५. IO omits आत्मा
६. IO and BS[2] omits मायया
७. BS[1] संस्रष्टुं
८. BN[1] and BS[2] एवं

संसारश्वभ्रपातपर्यवसायिज्ञानशून्यदुष्टक्रियावन्तः ; अत एव मूढा विचेतसो नराधमाः पुरुषेषु मध्ये निकृष्टा मां परमात्मानं न प्रपद्यन्ते नाश्रयन्ते ॥

ये तु मदिच्छावशादेव दैवसर्गभाजः सन्तो मदनुग्रहेच्छाविर्भावितविद्याशक्तिप्रबोधिताः कैवल्यप्राप्तिफलपुण्यक्रियायुक्ताः प्रबुद्धाः, ते—

चतुर्विधा भजन्ते मां जनाः सुकृतिनः[1] सदा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

अनुगृहीतत्वसाम्येऽप्यनुग्रहेच्छातीव्रतादितारतम्याश्चतुर्विधाः प्रस्तुतविभागेन चतुष्प्रकारा जना मां भजन्ते, मद्भक्ता भवन्ति । अत एव ते सुकृतिनः । तेषां चातुर्विध्यं कथयति—आर्त इत्यादिना । तत्रार्तो मां भजते । यो मृदुतरमदनुग्रहमहौषधेन विशीर्यमाणसंसारमोहसन्निपाततया चिरात्संवेद्यतापन्नदुःखत्रयवेदनाकदर्थ्यमानमानसः तन्निवृत्तिमिच्छन् सकललोकप्रसिद्धतत्तत्संज्ञाकारादिस्थूलोपायसमाश्रयणेन मद्भक्तो भवति, ततः क्रमेण वर्धमानसंवेश[2]लेशवशाज्जिज्ञासुर्यः समुपजायमानजगद्भावहेयोपादेयविचारः सन् कोऽहम्, किमिदं शरीरेन्द्रियविषयादिमयं महामोहजालम्, कथम् अतो बन्धनात्परिमुच्येय—इति तत्त्वं ज्ञातुमिच्छुः नानाशास्त्रशुश्रूषाश्रवणाद्यभियुक्तमतिः संशयापन्न एव मत्सपर्यापरो भवति । अत एव तत्त्वजिज्ञासाभिनिवेशप्रकर्षा[3]दाविर्भवद्विवेकावसानलोकविलीय[4]मान-

१. IO सुकृतिनोऽर्जुन
२. BS[1] समावेश
३. BS[2] omits प्रकर्षात्
४. IO विरलोऽक्रियमाण
This is noted as an alternative reading both in BS[1] and BN[1].

विपर्ययप्रत्ययतीव्रतिमिरत्वप्रथमानयथास्थितहेयोपादेयपदार्थप्रविभागोऽर्थार्थी मां भजते। यः शास्त्राभ्यासवशादुत्पन्ननिश्चयः सन् इदमेव परमं फलमित्युपादेयतया आत्मतत्त्वलक्षणमर्थं वस्त्वर्थयते अभिकाङ्क्षयति, ततो ज्ञानी मां भजते। यः सकलविचिकित्साविच्छेदविश्वस्तमतिः स्वीकृतयथोक्तज्ञानलक्षणपरमोपायः सन् यथोक्तस्वरूपमव्यवधानेन मामेवोपास्त इति ॥

एषां चतुर्णां मध्ये ज्ञानिनः प्रकर्षं प्रतिपादयितुमाह—

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

तेषामार्तादीनां मध्ये ज्ञानी यथोक्तबोधवान्[1] विशिष्यते। यतोऽसौ सर्वतः स्थूलात् सूक्ष्माच्च विनिवृत्तोपादेयप्रतिपत्तिः परामुपायकाष्ठामधिरूढः अत एव वेदकैकस्वभावः, एकस्मिन् मयि परस्मिंस्तत्त्वे भक्तिमान्, अत एव नित्ययुक्तः सर्वास्ववस्थास्वविच्छिन्नसमाधानः, यस्मात्तस्यैवंविधस्य ज्ञानिनोऽहमत्यर्थमखिलपदार्थ-[2]सार्थपरिहारेण प्रियः प्रीतिकारणम्, स चापि तथैव मम प्रियः—इत्यव्यतिरेकप्रतिपादनपरमेतत् ॥

ननु ज्ञानिन एव प्रकृष्टत्वे सत्यार्तादयः किं बहिष्कृता एवेत्यत्र[3]ाह—

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः ।**
**आस्थितः स हि युक्तात्मा ममैवानुत्तमां गतिम् ॥ १८ ॥**

---

१. BN[1] ज्ञानवान्
२. IO and BS[2] अखिलजगत्पदार्थ
३. BN[1] omits अत्र

ते आर्तादयो यद्यप्युत्तरोत्तरविशिष्टत्वेनान्योन्यभिन्नरूपाः, तथापि भक्तिमूर्त्या कृतोदयया परयैकया मच्छक्त्याधिष्ठिताः सन्तः सर्व एवोदारा उदात्तचेतसः औदार्यलक्षणेनैकेन गुणेन[1] युक्ताः; किंत्वार्तिजिज्ञासार्थार्थितादशासु ये वर्तन्ते ते व्यतिरिक्तार्थालम्बिनो ज्ञानवान् पुनरहमित्यभेदेन मत्स्वरूपैकालम्बन इत्यात्मैवासौ ममाभिप्रेतः। एतदेव प्रकटयति—यस्मात्स ज्ञानी ममैव नान्यस्य व्यतिरिक्तस्य वस्त्वन्तरस्यानुत्तमां निरतिशयां[2] गतिं प्राप्तिहेतुमभेदज्ञानलक्षणं पन्थानमास्थितः समाश्रितः ॥

यतो युक्तात्मा मय्येव समाहितान्तःकरणोऽयमतः—

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

आर्तत्वाद्यवस्थाजुषां भूयसां जन्मनां शरीरपरिग्रहाणामन्ते परिक्षये सर्वमिदं चराचरं भावजातं परमार्थसततनिर्विकारसामान्यसंविद्रूपो भगवान्, सर्वत्र वसनात् सर्वस्य वा तत्र वसनाद्वासुदेव इति, सर्वाद्वयत्वनिश्चयेन मां परमकारणं प्रतिपद्यते । स चैवंविधः सर्वोत्कृष्टस्वभावः सुतरां दुर्लभः दुष्प्रापः ; मनुष्यकोटिष्वपि कदाचित्[3]तादृशो महानुभावो लभ्यते, न वा ॥

कस्मात्तथाविधः सुदुर्लभ इत्यत्र स्वेच्छामात्रमेकं[4] कारणं प्रतिपादयितुमाह—

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया[5] ॥ २० ॥**

---

१. IO and BS[2] omit गुणेन
२. BN[1] निरतिशयगतिं
३. BN[1] omits कदाचित्
४. BN[1] एक-
५. All except IO स्वयं

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

इह यथाप्रतिपादितप्रकारेण नानाजीवभूतमत्प्रकृत्यात्मकाः पुरुषाः मदिच्छोद्भावितकार्यकारणभावया गुणात्मिकया प्रकृत्या स्वया तत्तत्पुरुषभेदेन प्रतिनियतकार्यकारणात्मना प्रत्येकं स्वत्वमापन्नया नियताः प्रविभक्तशरीरेन्द्रिय-विषयाद्यात्मकतया परस्परभेदेन नियन्त्रिताः सन्तः सुखाद्यात्मकं प्राकृतं रूपमेवा-त्मत्वेन प्रतिपन्नाः । अत एव स्वत्वापन्नतत्तत्प्रकृत्युचितैस्तैस्तैः क्रियाफलतया प्राप्यत्वेन काम्यमानैः कामैर्भोगैस्[1]तत्तल्लोकान्तरभोग्यैर्हृतज्ञानाः मुषितपरमार्थ-लक्षणैकतत्त्वविषयबोधाः सन्तः; अन्यदेवता अन्या[2] आत्मलक्षणपरमदैवतव्यतिरिक्त-हरिहरहिरण्यगर्भादित्यप्रभृतीः तत्तत्स्वाभिमतनानाफलदायित्वश्रुतप्रभावाः परस्परभिन्ना-त्मतयावगम्यमानाः प्रपद्यन्ते भजन्ते । कथम्? तं तं तत्तद्दर्शनप्रसिद्धं नियमम् इतिकर्तव्यताविशेषरूपां व्यवस्थामाश्रित्य अवलम्ब्य । इत्थं स्थिते यो यः क्षेत्रज्ञः फलाभिलाषानुगुण्येन यां यां चतुर्भुजत्रिणेत्रत्वादिविभक्तविशेषां तनुं मूर्तिं भक्तः समाश्रितः सन् श्रद्धया तावन्मात्रफलदायिभिन्नदेवताविषयया तत्तत्फलप्राप्तये

---

१. BS[1] भोगः २. BS[1] and IO अन्य

पूजयितुं वाञ्छति, तस्य तस्य तामेव तावन्मात्रफलदायिभिन्नदेवताविषयां नान्यां परामेकतत्त्वविषयामचलां तद्विषयत्वेन स्थिराम् अहं ददामि। मत्त एव सात्त्विकादि-सर्वभावोद्भवस्य प्राक्प्रतिपादितत्वात् स तया मद्दत्तया श्रद्धया[1] तस्य तत्तदाकृते-र्देवताविशेषस्याराधनं प्रसादनमीहते, मनोवाक्कायैश्चेष्टते ; ततश्च देवताविशेषा-दाराधितात् सतः पूर्वोक्तोपपत्त्या मयैवैकेन पारमार्थिकेन कर्त्रा विहितान् विसृष्टान् हितानुकूलान् कामान् भोगान् लभते; किंतु मामेकमीश्वरं सर्वमनोरथप्रदं सम्यग्ज्ञानाभावादजानताम्, अत एवाल्पप्रज्ञानां तेषां परिमितं[2] भोगलक्षणं फलमन्त-वदनित्यं भवति। ते ह्यज्ञानमोहिताः सन्त आत्मानं[3] देवतां फलं च नानात्वेन प्रतिपद्यन्ते। ततश्च ये देवान्नानात्वेन प्रतिपन्नान् यज्ञादिभिरन्तवद्भिः क्रियाविशेषै-र्यजन्ते प्रीणयन्ति, ते देवान् यान्ति, तत्तद्देवताधिकरणभूतं तं तं देवलोकं गच्छन्ति। ये तु मां यथोक्तस्वरूपमेकं तत्त्वं यथाप्रतिपादितेन क्रमेण मदि-च्छयैव प्रेर्यमाणाः सन्तः[4] ज्ञानित्वदशाधिरोहपर्यन्तेन भक्ताः समाश्रिताः, ते मामेव परमं यान्ति, अहमित्यभेदेन समापद्यन्ते ॥

तदित्थमासुरं दैवं च सर्गं मयैव स्वेच्छयापादितो लोको मायाख्यया अविद्याख्यया[5] शक्त्या प्रवृत्तिनिवृत्त्योर्नियुज्यमानः संसारवर्गलक्षणं फलं प्राप्नोतीति सङ्ग्रहेण प्रतिपादयितुमाह—

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २४ ॥**

---

१. BS[2] adds युक्तः
२. BS[1] परिमित
३. IO आत्मा देवतां
४. BN[1] and BS[2] add क्रमेण
५. IO अविद्याख्ययुक्ता च प्रवृत्ति BN[1] अविद्यया शक्त्या च प्रवृत्ति

वैश्वरूप्येऽप्यद्वयचिन्मात्रस्वरूपावस्थानापरिच्युतिलक्षण ऐश्वरसमाधिर्योगशब्देनोक्तः[2]। तथाविधयोगमहिम्नोत्पादिता या माया मत्स्वरूपान्यथाप्रतिपत्तिहेतुः शक्तिः, तया समावृतो व्यवहितः सन् अहं सर्वस्य मत्प्रकृतिमोहितस्यासुरस्वभावस्य जन्तोर्न प्रकाशः, आत्मतया न प्रत्यभिज्ञेयः; ततश्च सर्वो मूढो लोकोऽयम् अजम् अव्ययम् नित्यत्वाज्जन्मविनाशरहितं मां नाभिजानाति, आत्मत्वेन न प्रत्यवमृषति ॥

यतः—

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्यन्ति च भूतानि मां तु वेद न कश्चन ॥ २५ ॥

शरीराणि अनित्यप्रकृतिपरिणामपर्यवसिताहंप्रत्ययत्वात् सर्वतोऽवच्छेदवन्ति वेद्यदशामापन्नानि; अत एवातीतवर्तमानभविष्यत्पदविशे[3]ष्याणि भूतानि; सर्वशरीरिणोऽहं परमार्थवेदकस्वभाव एक एव वेद जानामि। मां पुनर्नित्यत्वात् कालकलनाद्यवच्छेदविरहितमहिमानं न कश्चिच्छरीरी[4] वेद जानाति—इत्यनेनानन्यसाधारणवेदकैकस्वभावत्वं परस्य कारणस्य तत्कार्यस्य च जगतस्तद्व्यतिरिक्तस्वरूपस्य वेद्यत्वमेव प्रतिपादितम् ॥

कस्मात्त्वां न वेद कश्चिदित्यत्राह—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥ २६ ॥

---

१. BN[1] अवस्थापरि
२. IO, BS[1] and BN[1] शब्दो नोक्तः
३. BN[1] विशेषणानि
४. BN[1] शरीरे

यत एतानि सर्वभूतानि मन्मायावशादन्योन्यभिन्नानि अनित्यशरीरात्मकत्वाज्जन्मविनाशभाञ्जि। सर्गे सृष्टौ सत्यां संमोहं[1] पारमार्थिकस्वरूपाविमर्शरूपमज्ञानं यान्ति प्रतिपद्यन्ते। केन हेतुना[2]? द्वन्द्वमोहेन; द्वन्द्वानि सुखदुःखाद्यात्मकानि[3] स एव मोहस्तत्त्वाप्रतिपत्तिः तेन। कीदृशेन? इच्छाद्वेषसमुत्थेन रागद्वेषप्रभवेन। इदमत्र तात्पर्यम्—मन्मायोद्भावितगुणमयप्रकृतिरूपसर्गसंमोहिताः सर्वप्राणिनः परस्परभिन्नानित्यगुणपरिणामात्मकमेव जगदिदं मन्यमानाः, कचिद्रज्यन्तः, कैंचिद्[4] द्विषन्तः, संसारचक्रपरिवर्तनमनुभवन्ति। अतो यथाप्रतिपादितस्वरूपं मां[5] नित्यनिर्विकारैकचित्स्वभावं परमात्मानं न भजन्ते॥

के[6] पुनस्त्वां भजन्ते इत्यत्राह—

येषां त्वन्तं गतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥ २७॥

येषां पुनर्जनानां मदनुग्रहादेव प्रत्युदितविद्याशक्तीनां सताम्, अत एव पुण्यकर्मणां सुकृतिनाम्; पापम् अज्ञानलक्षणम्; अन्तं गतं विनाशं प्राप्तम्; ते यथोक्तात् द्वन्द्वमोहान्निर्मुक्ताः; दृढव्रताः स्थिरनियमाः सन्तो मामेकं दैवतं भजन्ते, मदभेदप्रतिपत्तिपर्यन्तया सपर्यया समाश्रयन्ते॥

---

१. BN[1] omits संमोहं
२. BN[1] omits हेतुना
३. BS[1] omits आदि
४. BS[2] किंचित्
५. IO omits मां...भावं
६. BN[1] कैन पुनः

इत्थं च—

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २८ ॥

साधिभूताधिदैवं मां साधियज्ञं तथा विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ २९ ॥

मां यथोक्तस्वरूपमाश्रित्य चतुर्विधया भक्त्या लम्बनीकृत्य ये जरामरणादिद्वन्द्वदोषविमुक्तये यतन्ते सततमविलुप्तोद्योगा भवन्ति, ते च युक्तचेतसः यथोक्तसमाधिसततसमाहितमनसो ब्रह्मस्वरूपादिभेदेन समनन्तराध्यायव्याख्यास्यमानसप्तविधविज्ञानदृशा मां विदुः मां जानत इत्योम् ॥

गीताध्याये स्थितिमुपगताः सप्तमे सत्यरूपे
सन्तः सम्यक्फलितसुकृताः केऽपि लोके यथास्मिन् ।
निःसन्देहाः सकलभुवनाभोगभावव्यवस्थां
हस्तन्यस्तामलकफलवद्व्यक्तमालोकयन्तु ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
सप्तमोऽध्यायः ॥



---

१. All except BN[1] समाश्रित्य

२. IO and BN[1] यजन्ति
BS[2] notes this as an alternative reading.

३. IO and BN[1] यथा विदुः
BS[2] notes this as an alternative reading. Another reading noted in the same is च ते विदुः

४. IO चेतसः

## ॥ अथ अष्टमोऽध्यायः ॥

---

अथ सप्तमेऽध्याये प्रतिपादितज्ञानविदो भक्तिलक्षणविज्ञानविशारदा ब्रह्मादीन् प्रकारान् विदुरिति यत् भगवतोक्तं ततस्तेषां प्रकाराणां सञ्ज्ञातस्वरूपजिज्ञासः अर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

प्रश्नवाक्यान्येतानि गतार्थानि । किंतु किं तदिति तच्छब्दस्यायमभिप्रायः, यद्भगवता उक्तप्रायेष्वेतेषु प्रकारेषु किं तद्ब्रह्म कः प्रकारो ब्रह्मस्वरूपः, कश्चाध्यात्मस्वरूप इति विभागजिज्ञासारूपः ; प्रयाणकाले कथं ज्ञेयोऽसीति पूर्वमनुक्तार्थविषयः पृथक्प्रश्नः ॥

यथोक्तप्रश्नव्याकरणार्थं भगवानुत्तरमाह—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

---

१. IO and BN[1] वाक्यार्थानि

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

अन्तकालेऽपि मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

तत्र ब्रह्म किमुच्यते इति प्रश्ने तावदुत्तरम् । पर[1]ममक्षरं ब्रह्म न क्षरति न सञ्चले[2]ति, न स्वरूपाच्च्यवतीत्यक्षरं चिद्रूपमुच्यते । तच्च द्विप्रकारं संभवति, ब्रह्मस्वरूपं जीवरूपं च । यद्ब्रह्मरूपं तत्परम्, तस्य न कदाचित्स्वरूपात्सञ्चलनं भवति । यतस्तस्य प्रबन्धतः स्वरूपं जन्मविनाशादिभावविकारासंस्पृष्टैकचिन्मात्रलक्षणं सहजनित्यानन्दैकधर्मकं[3] सकलविश्वभावावभासकत्वाद्विश्वरूपमपि विश्वभावावच्छे[4]द्यत्वेन कथंचिदप्य[5]सङ्गतत्वात्तेभ्यो व्यतिरिक्तं प्रतिपादितमेव । जीवरूपं तु कूटस्थत्वे सत्यक्षरं भवति, किंत्वपरं [6]परं ब्रह्मवत् परत्वे[7]नावस्थितम्; यतस्तस्य मायावशात् क्षरस्वभाव[8]प्राकृतभावाहंप्रत्ययालम्बने सति देहादि[9]प्राकृतभाववत्प्रलयोदयौ जन्ममरणादिकं वा तत्स्वरूपमनुविदधानस्य स्वरूपप्रच्युतिसंम्बन्धे सत्यपरमक्षरत्वम्, यद्वक्ष्यति—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

---

१. BN[1] परमक्षरं
२. BN[1] and BS[1] संचलयति
३. IO adds मे
४. BS[2] अवच्छेद्येन
५. BN[1] and BS[2] omit अपि
६. BS[1] परब्रह्म
७. BS[2] त्वेन नावस्थितं
८. All except BS[1] omit प्राकृत… हादि
९. BN[1] समये सति

यस्मात् क्षरमतीतोऽहमक्षरस्यापि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति ।

इत्थं ब्रह्मापेक्षया जीवानां नित्यत्वेऽपि प्रतिपादितोपपत्त्या निकृष्टमक्षरत्वम् । परमं त्वक्षरं ब्रह्मेति प्रथमप्रश्नस्योत्तरम् । अध्यात्मं किमुच्यते इत्यत्रोत्तरम्—स्वभावोऽध्यात्ममिति । स्वभावशब्देन "भूमिरापः" इत्यादिना "ययेदं धार्यते जगत्" इत्यन्तेन ग्रन्थेन परापरा च प्रकृतिर्भगवता प्राक् प्रतिपादिता इहोच्यते । एवं प्रकृत्यात्मकः स्वभावः परमकारणरूपसत्यात्मावभासितनानात्माधीनत्वादध्यात्ममित्युक्तः । आत्मा हि परमेश्वरो जडचेतनविभागेन स्वेच्छयात्मानमेवावभासयति । यदुक्तम्—

"कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव कुरुते भेदानिति वेदान्तनिश्चयः ॥"

एवं द्विप्रकारप्रकृतिलक्षणस्वभाव आत्माधीनत्वादध्यात्ममुच्यते—इति द्वितीयप्रश्नस्योत्तरम् । अथ किं कर्मेत्युत्तरम्—"विसर्गः कर्मसंज्ञितः" इति । विसर्गो विशिष्टापरब्रह्मव्यतिरिक्ता सृष्टिः कर्मेति संज्ञितः । तस्य हेतुगर्भं विशेषणमाह—भूतभावोद्भवकरः ; भूतानां जडाजडप्रकृत्यात्मकानां यो भावः सत्ता जडानां प्रवाहनित्यतारूपा चेतनानामन्योन्यविभक्तत्वेऽपि कूटस्थनित्यतारूपा तस्य भावस्योद्भवं तथावभासनरूपामभिव्यक्तिं यः करोति स तथोक्तः, ईश्वरेच्छया

---

१. IO अध्यात्मकं
२. BS² अपरापरा
३. BS² त्वाध्यात्मं
४. BS² विसृष्टा
५. IO परं

अनादिना प्रबन्धेन कृतो यः स्वप्रपञ्चमयः सर्गः, स तयोः कर्मेत्युच्यते, यत उक्तं प्राक्—"एतद्योनीनि भूतानि सर्वाणीत्युपधारय" इति। एवं बुद्ध्यादिपृथिवीपर्यन्तं[1] प्रपञ्चलक्षणो जडायाः प्रकृतेर्यो[2] विविधः सर्गः, तथा चतुर्दशविधप्राणिप्रपञ्चलक्षणो यो जीवभूतायाः प्रकृतेर्विविधः सर्गः स तयोः संयोगजत्वात्तयोः कर्मत्वेन विसर्ग उक्त इति तृतीयप्रश्नस्योत्तरम्। अथाधिभूतं किमुच्यते इत्यत्रोत्तरम्—"अधिभूतं क्षरो भावः" इति। क्षरः परिणमद्रूपतया[3] स्वरूपसञ्चलनपरो यो भावः प्रतिपुरुषं विभक्तकार्यकारणकलापात्मकः पदार्थः सोऽधिभूतमुच्यते, तस्य भूताधीनत्वात् भूतरूपा प्रकृतिः कार्यकारणात्मना विपरिणमत इति क्षरः भावोऽधिभूतमिति चतुर्थप्रश्नस्योत्तरम्। पुरुषोऽधिदैवतमिति। पुरुषः क्षेत्रज्ञ इति जातावेकवचनत्। अतस्ते ते पुरुषाः तत्तद्वासनानुगुण्येन परिणतप्रविभक्ततत्तत्कार्यकारणात्मकक्षरभावरूपेऽधिष्ठातृतयावतिष्ठमाना अधिदैवतत्त्वं भजन्त इति पुरुषोऽधिदैवतमिति पञ्चमप्रश्नस्योत्तरम्। अथात्र देहे कथं केन प्रकारेण कश्चाधियज्ञ इत्यत्रोत्तरमाह—"अधियज्ञोऽहमेवात्र" इति। परस्परविभक्तकर्त्रभिमानाविष्टनानाक्षेत्रज्ञाधिष्ठितेऽस्मिन् देहे[4] यद्यपि क्षेत्रज्ञा एवाधियज्ञत्वमर्हन्ति[5], तत्तत्फलाभिसन्धिना तं तं [6]योगविधिमनुतिष्ठन्तस्तादृशमवच्छिन्नमात्मानं कर्तृत्वेनाभमन्यन्ते, तथापि पारमार्थिकस्य कर्तृत्वस्यानन्यसाधारणत्वादहमेव मुख्यः कर्ता सर्वयज्ञानामित्यहमेवाधियज्ञो[7] नान्यः। कथमिति

---

१. BS² पर्यन्त
२. BS² जडात्तयोः
३. BN¹ and BS¹ रूपतत्त्वस्व-
४. IO देहो
५. BS² यज्ञमर्हन्ति
६. BS¹ and BS² यागविधिं
७. IO सर्वज्ञानां

प्रकारे। प्रश्नेऽप्येतदेवोत्तरमहमेवाहमिति; अनेनैव प्रकारेणाहमधियज्ञः। इदमत्र तात्पर्यम्—योऽपि क्षेत्रज्ञानां शरीराद्यालम्बननिमित्ताहंकारः, योऽपि [1]परस्वरूपनिष्ठो मम तयोरहङ्कारत्वे नास्ति कश्चिद्भेदः; केवलं मायावशात् क्षेत्रज्ञानामवच्छेद्या[2]-लम्बननिष्ठत्वा[3]दवच्छिन्न इवासौ; मम तु स्वभावनिष्ठत्वादनवच्छि[4]न्न इति अहमेव नान्यो मुख्याहङ्कारनिष्ठतयाधियज्ञो न प्रकारान्तरेण इति सर्वयज्ञेष्वधिकृतः प्रभुरहमेव, यदुक्तम्—"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति ष[5]ष्ठप्रश्नस्योत्तरम्। अनेनैव न्यायेनाधिभूतमहमेवेति बोद्धव्यम्; भूतभावेन प[6]रमार्थभूतोऽहमेव स्थित इत्यर्थः। तथैवाधिदैवतत्वेन पुरुषाख्यो यः प्रकार उक्तः तत्राहमेवाधिकृत इति प्रश्नषट्कस्य सङ्क्षेपतो व्याकारणमेवं वेदितव्यम्। यदुत ब्रह्मात्मकर्मसंज्ञं परमात्मक्षेत्रज्ञप्रकृतिपरिणामरूपं सप्तमे तत्त्वत्रयं निर्णीतम्, तत्र यथाक्रममधियज्ञाधिदैवताधिभूतभावेनाहमेव तत्त्वतो व्यवस्थितो न मद्व्यतिरिक्तं किंचित्संभवतीति तात्पर्यम्। तथा सप्तमे—"ते ब्रह्म तद्विदुः कृत्स्नम्" इत्यादिना तत्त्वत्रयमेतदुक्त्वा "साधिभूताधिदैवं मां साधियज्ञं च ते विदुः" इति तद्व्यापकत्वेनात्मानं भगवान् निर्दिष्टवानिति। अथ प्रयाणकाले देहाद्देहान्तर-सङ्क्रान्तिसमये नियतात्मभिर्निगृहीतान्तःकरणैः कथं ज्ञेयोऽसीत्यत्रोत्तरम्—"अन्त-कालेऽपि मा[7]मेव" इत्यादि। अन्तकालेऽपि तत्तत्कर्मक्षयात् त[8]स्य तस्य शरीरस्य प्रक्षयसमये मां यथोक्तविशेषणं परमात्मानं स्मृत्वा सञ्चिन्त्य मत्स्वरूपप्रत्यव-

---

१. IO परमस्व-

२. BN[1] and BS[1] अवच्छेद्याद्यालम्ब

३. BS[1] अविच्छिन्न
　IO and BS[2] अनवच्छिन्न

४. All except BN[1] अविच्छिन्न

५. BN[1] षष्ठस्य

६. BN[1] परमार्थतो

७. BS[1] omits मामेव...कालेऽपि

८. BS[1] and BN[1] omit तस्य

मर्शपूर्वं कलेबरं शरीरं त्यक्त्वा स्वातन्त्र्येण विमुच्य यः प्रयाति ततो देहादुत्क्रामति स मद्भावं मदीयां सत्तां याति, अहमेव संपद्यत इत्यत्र संशयः सन्देहो नास्ति ॥

तथा युक्तिं प्रदर्शयितुमाह—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

यं यं सात्त्विकं राजसं तामसं भावं पदार्थं स्मरन् सात्त्विकया राजस्या तामस्या वा बुद्ध्या ध्यायन् पुरुषोऽन्तेऽवसाने देहं जहाति, तं तमेव देहान्तरं प्रतिपद्यते । अत्र हेतुगर्भं विशेषणमाह—सदा तद्भावभावितः । सदा नित्यकालं तस्मिंस्तादृशि सात्त्विकादौ भावे भावितः संजातभावनो यतः । किमुक्तं भवति? - वर्तमाने देहे यदेव सात्त्विकादिकं वस्तु पुरुषोऽभ्यासेन भावयति, तत्तद्भावनाभ्यासप्रकर्षाहितसंस्कारः तमेवान्तेऽवश्यं स्मरति ; यमेव च स्मरन् तस्माद्देहादुत्क्रामति, तमेव तत्समनन्तरे देहान्तरे लभते, यद्वक्ष्यति—

"यदा सत्त्वे विवृद्धे तु प्रलयं यान्ति[याति] देहभृत् ।
तदोत्तमविदां[1] लोकानमलान्प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥" इति ।

---

1. BS² विदो लोकान्

यत एवम्—

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य च ।
मर्य्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

तस्मादुक्तात्कारणादाप्तोपदेशप्राप्तिक्षणात् प्रभृति सर्वेषु कालेषु; कालशब्द उपलक्षणार्थः; तेन सर्वेषु देशेषु सर्वेष्वाकारेषु सर्वास्ववस्थासु यथाप्रतिपादितस्वरूपं मां परमात्मानं परमेश्वरमनुस्मर सञ्चिन्तय, मत्स्वरूपध्यानानुपरतनिबिडावधानो भव, युद्ध्यस्व, स्वकर्मानुतिष्ठ च—येन मयि यथोक्तेन प्रकारेण नित्यविनिवेशितान्तःकरणो निःसंशयं मामेवैष्यसि, मदभेदं प्राप्स्यसि, अहमेव भविष्यसीत्यर्थः ॥

प्रतिपत्तिदार्ढ्यार्थमेनमेवार्थं विवरीतुमाह—

अभ्यासयोगयुक्तेन चेतसानन्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

नित्यानुस्मरणयत्नलक्षणे समाधौ युक्तेन सम्बद्धेन, अत एव अनन्यगामिना यथोक्ततत्त्वव्यतिरिक्तवस्त्वन्तरविरतगतिनान्तःकरणेन चिन्तयन् सदा ध्यायन् संस्कारबलात् परमं सर्वेभ्यः क्षेत्रज्ञेभ्य उत्कृष्टमेकं पुरुषमात्मानं दिव्यं दिवि परमव्योम्नि स्वभावमये भावं याति प्रपद्यते, तादात्म्यमुपैति ॥

---

१. BS[2] मय्यर्पित
२. BN[1] ध्यानान्न परत्र
३. IO omits विरत
४. BN[1] भवं
५. BN[1] and BS[2] प्रतिपद्यते

एवमबाधितोपपत्त्युपन्यासपूर्वं यथाप्रतिपादितानुत्तरज्ञानमात्रसाधनं परमुत्क्रान्तिक्रमं प्रतिपाद्य इदानीं प्राणजयादिसाध्ययोगसाधनमपरं तं प्रतिपादयितुमाह—

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः पुरस्तात् ॥ ९ ॥

प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति
दिव्यम् ॥ १० ॥

स एवंविधो योगी तं दिव्यं दिवि परमव्योम्नि भवम्, अत एव परं सर्वोत्कृष्टम्, पुरुषमीश्वरमात्मानमुपैति प्राप्नोति। कोऽसौ? यो भक्त्या भगवदनुग्रहदिवसालोकप्रभातसन्ध्यया सकलपुरुषार्थसिद्धिबीजभूतया, तथा प्रस्तुतस्वरूपनिरूपणसमाधिसामर्थ्येन युक्तः सन्[1] तस्या[2]मप्यवस्थायामचलेन स्थिरसमाधानेन मनसान्तःकरणेन सर्वस्य धातारं परमकारणमनुस्मरेत् अन्तकालेऽनुचिन्तयेत्। कथं कीदृशं च? भ्रुवोर्मध्येऽभ्यासस्वतन्त्रीकृतं प्राणम् आन्तरं मारुतं सम्यङ्मध्यमेन [3]मार्गेणावेश्य सन्धाय। आदित्यवर्णं सर्वतेजोव्यतिरिक्तज्योतीरूपम्। अत एव तमसः पुरस्तात् अज्ञानस्य पृथक्तया वर्तमानम्। कीदृशम्? सर्वस्य धातारम् अनुस्मरेत्। परावस्थायां कविमित्यादि विशेषणविशिष्टत्वादचिन्त्यं पारमार्थिकज्ञातृस्वभावत्वा-

१. IO सः:
२. BN[1] and BN[2] omit अपि
३. BN[1] मार्गे न निवेश्य
BS[2] मार्गेण निवेश्य

चिन्तनक्रियायाः कर्मत्वं[1] नेतुमशक्यम् । यतः पुराणं कविमनादिं द्रष्टारं तथानुशासितारं सर्वस्य चराचरस्य सर्गस्य तेन तेन नियमेन नियन्तारम् । अतः सर्वज्ञं सर्वकर्तारं चेत्युक्तं भवति । तथा स्वरूपतोऽणुः सूक्ष्मः क्षेत्रज्ञादिः तस्मादप्यणीयांसमतिशयेनाणुम् । इदमत्र तात्पर्यम्—यः परावस्थायां अद्वयज्ञानैकविषयत्वात्स्मरणव्यापाराविषयभूतः तत्संयोगरूपायामपरावस्थायां नियतदेशत्वेन नियताकारत्वेन च यो योगी यथोक्तेन[2] क्रमेण स्मरति स तमेव पुरुषमुपैति, तत्समीपं गच्छति ॥

योगक्रम एव परमपदप्राप्तिफलो यथा भवति तथा सम्यग्वक्तुं प्रतिजानीते—

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेणाभिधास्ये[3] ॥११॥

तत्पदं योगिभिः प्राप्यं धाम सङ्ग्रहेण संक्षेपेण ते तुभ्यमभिधास्ये कथयिष्यामि । किं तद्धाम यद्वेदविदो वेदार्थविशारदा अक्षरं नित्यं विद्वांसो वदन्ति प्रवचनेन प्रतिपादयन्ति, यच्च यतयो ज्ञानैकनिष्ठा विशन्ति समापद्यन्ते, यच्चे[4]च्छन्तः प्राप्तकामा ब्रह्मणो वेदस्याध्ययनश्रवणादिना चर्यमाचारं चरन्ति गच्छन्ति समाश्रयन्ते ? केचित् व[त् वि]दन्तीति पाठं पठन्ति[5] । एवमेतद्व्याचक्षते । यथा वेदविद्ग्रहणेन गृहस्थवानप्रस्थाः प्रतिपादिताः, यतस्ते शास्त्रोक्तक्रियानुष्ठाननिष्णाताः

---

१. IO कर्मतां
२. BS[1] यथोक्ते
३. BS[1] अभिधत्ते
४. BS[1] and BS[2] यच्च
५. BS[1] पठन्तः

सन्तः तत्पदं विदन्ति जानान्ति प्राप्यतयाध्यवस्यन्ति । यतयस्तु कृतकृत्यत्वा-द्विशन्ति तादात्म्यमाप्नुवन्ति । ब्रह्मचारिणस्तु तत्प्राप्तकामाः स्वाध्यायशास्त्रार्थ-बोधादिनिष्ठा व्रतविशेषं भजन्ते इति ॥

यथाप्रतिज्ञातमभिधातुमाह—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥

स योगी परमां गतिं पूर्वोक्तं प्रकृष्टं पदं याति प्रतिपद्यते । कोऽसौ? य एवं देहं शरीरं त्यजन् विमुञ्चन् यात्युत्क्रामति । कीदृशः? मामनुस्मरन्; योगधारणामास्थितः मां यथोक्तस्वरूपं परमकारणमोंकारवाच्यं ब्रह्म तत्त्वमनुध्यायन् । योगस्य कस्यचित्समाधेरालम्बनीभूतेऽर्थे चित्तनियमरूपां धारणां भूमिकामाश्रितः प्रथमतरं सर्वद्वाराणि चक्षुरादीनि चित्तवृत्तिप्रसरवर्त्मानि संयम्य यथास्वं विषयेभ्यः प्रत्याहृत्य मनश्चोपदेशाधिगते हृदि सर्वसंविदधिकरणभूते देहैकदेशे निरुद्ध्य

१. BS[1] प्रतिपादितज्ञानं
२. BN[1] आदाय
३. BN[1] एव
४. BS[1] adds कृते
५. IO and BS[1] रूपं
६. IO सर्वाणि द्वाराणि
७. IO निरुद्धः

प्रतिषिद्धेन्द्रियविषयप्रचारं कृत्वा। तथा प्राणमन्तश्चरं मारुतं मूर्ध्नि ब्रह्मरन्ध्रे ब्रह्मपुरार्गलभूतभ्रूमध्यग्रन्थिभेदाल्लब्धमार्गं सन्तमादाय कृत्वा। तथा ओमिति प्रसिद्धैकाक्षररूपं ब्रह्मशब्दतत्त्वं व्याहरन्नुच्चारयन्। एवं प्राणस्य मूर्ध्नि प्रेरणं प्रणवस्योच्चारणं प्रणववाच्यस्य च मत्स्वरूपस्यानुस्मरणं चेति सर्वेन्द्रियमनोनियमपूर्वकं युगपत् त्रितयमेतत्संपादयन् यो देहविसर्गं करोति स योगी परमं पदमाप्नोतीति तात्पर्यम् ॥

तस्मिन् प्रयाणकाले तात्कालिकावस्थाविसंस्थुलचित्तो योगी कथमेतं समाधिं साधयेदित्यत्र पूर्वोक्तं कारणमाह—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

तस्य नित्ययुक्तस्याविच्छिन्नसमाधेर्योगिनोऽहं नित्यशः सर्वास्ववस्थासु सुखात्मिकासु दुःखात्मिकासु वा सुलभः सुप्रापः। कस्य? यः सततमव्यवधानेन मां यथोक्तयोगाभ्यस्तरूपतया एकं तत्त्वं परमात्मानमनन्यचेता अन्यतो मद्व्यतिरिक्ताद्वस्तुनो निवृत्तान्तःकरणः स्मरति आत्मत्वेन प्रत्यवमृषति। "यं यं वापि स्मरन् भावम्" इत्यादिनोक्तोपपत्त्या सर्वात्मकमत्स्वरूपप्रत्यवमर्शाभ्याससुदृढसंस्कारस्य योगिनस्तस्यामप्यवस्थायामहमात्मभूतत्वात्कथं दुष्प्राप इति तात्पर्यम् ॥

---

१. BS² प्रतिषिद्ध्य
२. IO अकृत्वा
३. IO आधाय
४. IO and BS² अत्र
५. All except BS² सादयेत्
६. BN¹ देहिनः

ये चानेन क्रमेण मां प्रपन्नाः ते—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

महात्मानो यथोक्तज्ञानपरिशीलनभावान्महत् सर्वातिशायी परमेश्वर एवात्मा येषां ते तथा । अत एव मां यथोक्तया भक्त्या समाश्रित्य परां सिद्धिमभेदसमापत्तिलक्षणां परमां फलसम्पत्तिमितः संसारात् गताः सन्तः पुनर्भूयो जन्म देहान्तरप्राप्तिं नाप्नुवन्ति, न लभन्ते । कीदृशं जन्म? दुःखानामाध्यात्मिकादीनां संग्रहात् त्रिप्रकाराणां विस्तारतोऽनन्तभेदानामालयमास्पदम् । तथा शाश्वतमवश्यमनुषक्तशरीरेन्द्रियादिसर्वस्वविनाशम् । अनात्मन्यात्मप्रत्ययनिबन्धना सर्वदुःखयोगिता जन्मविनाशादिविकारसम्बन्धता च जीवानां सामान्यं परमकारणमेकमात्मानं मामहन्तया प्रतिपन्नानां पुनर्न संभवतीति तात्पर्यम् ॥

एवं च यथोक्तेन[3] नयेन मत्समाश्रयणमेकमुपायं वर्जयित्वा नान्यत्किंचिदपुनरावृत्तिकारणं संभवतीत्याह—

आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

परमप्रकृष्टतपोयज्ञदानादिपुण्यकर्मप्राप्यो[4] ब्रह्मणः प्रजापतेर्लोको ब्रह्मलोकः, तमवधिं कृत्वा यानि कानिचित्पुण्यकर्मप्राप्याणि लोकान्तराणि संभवन्ति, तेषु

१. BS[2] परमं
२. IO योग्यजन्म
३. BN[1] यथोक्ते
४. All except BN[1] प्राप्तः

ये लोकास्तत्तत्क्रियानुष्ठातृत्वाल्लब्धोपपत्तयो[1] जनाः, ते यथोक्तज्ञानशून्यत्वात्तासां क्रियाणामनुष्ठितानामन्तवत्त्वे सति पुनरावर्तिनो भूयः[2] संसारवर्त्मनि प्रादुर्भाविनो मां पुनर्यथोक्तज्ञाननिर्मलभक्तिमात्रैकोपायगम्यं परब्रह्मस्वरूपं परमेश्वरमुपेत्य तादात्म्यप्रतिपत्तिपर्यन्तमाश्रित्य पुनर्जन्म संसारभूमौ उत्पत्तिर्न विद्यते एव। मामु-पेत्य भूयो न जायन्त इत्युपायजननक्रिययोरेककर्तृकत्वमत्रावगन्तव्यम् ॥

अथ कथं ब्रह्मलोकवासिनोऽपि पुनरावर्तन्ते, न पुनर्मत्प्रपन्ना इत्यत्र क्रमेण कारणमाह—

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥

ये[3] जागरस्वप्नाद्यवस्थाहेतुभूतसूर्योदयास्तमयोपलक्षितमेव[4] कालविशेषमहो-रात्रतया मन्यन्ते, न ते तत्त्वतोऽहोरात्रस्वरूपज्ञाः। ये तु ब्रह्मणः प्रजापतेर्दिव्यया सङ्ख्यया चतुर्युगानां सहस्रपर्यन्तेऽवधिर्यस्य तावत्प्रमाणमहर्वासरं विदुः जानते, तावत्परिमाणमेव च रात्रिम्, ते तत्त्वज्ञा अहोरात्रविद उच्यन्ते। किमनेनोक्तं भवति? यथा मर्त्यानां नालिकाषष्ट्यवच्छिन्नः कालोऽहोरात्रः, तथा[5] ब्रह्मलोकनिवासिनां चतुर्युगसहस्रद्वयावच्छिन्नः कालोऽहोरात्रः। ततश्च यथा[6] मर्त्याः स्वाहोरात्रपरि-सङ्ख्यया परिकल्पितं वर्षशतं पुरुषायुषमतिवाह्य देहान्तरं भजन्त इतीह

१. IO उत्पत्तयः
२. BS¹ omits भूयः...भाविनः
३. All except BS¹ omit ये
४. BN¹ स्तसमयोप-
५. IO omits तथा...रात्रः
६. BN¹ omits यथा

व्यवस्था, तथा ब्रह्मलोकनिवासिनोऽपि यथोक्तपरि[1]णामावच्छिन्नाहोरात्रकलनया वर्षशतं पुरुषायुषमतिवाह्य पुनर्देहान्तरं भजन्तीति कर्मभूमिभाजां मर्त्यानां ब्रह्मलोकनिवासिनां च पुण्यकर्मणामहोरात्रादेः पुरुषायुषपर्यन्तस्य कालस्य ह्रास-दैर्घ्यकृतो विशेषः, न तु संसारित्वे तेषां कश्चिद्विशेषः। ततो यथा मर्त्याः पुनरावर्तन्ते, तथा ब्रह्मलोकान्तर[2]निवासिनोऽपि स्वकालपरिमाणेन पुरुषायुष-मतिवाह्य पुनरावर्तन्त इत्याब्रह्मभुवनाल्लोकाः पुनरावर्तिन इत्युक्तम्। तेनेदमत्र तात्पर्यम्—यथोक्तज्ञानशून्यपुण्यक्रियाविशेषानुष्ठानलभ्ये कालावच्छेदतुच्छभोगाधि-करणे ब्रह्मलोकादौ विवेकिना न स्थैर्यास्थाविप्रलब्धेन भवितव्यम्। सोऽपि विशिष्टजात्यायुर्भोगसम्बन्धात्संसारे एव युगसहस्रपरिमाणमपि कालदैर्घ्यमन्तवत्त्वा-न्मर्त्याहोरात्रान्ना[3]तिरिच्यत इति यथोक्तं युगसहस्रद्वयपरिमाणं कालमहोरात्रत्वेन[4] ये मन्यन्ते तेऽहोरात्रविदो जना इत्युक्तम्॥

इदानीं[5] तु[6] तस्य ब्राह्मस्याहोरात्रस्य स्वरूपप्रतिपादनद्वारेण मर्त्याहोरात्र[7]-तुल्यवृत्तान्ततामुपपाद्यो[8]पदेश्यानां विवेकनैर्मल्यायोपदिष्ट[9]माह—

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥ १८॥**

---

१. BN[1] and BS[2] परिमाणा-
२. BN[1] omits अन्तर
३. BS[2] न व्यति
४. IO omits त्वेन...रात्र
५. IO इदानींतनस्य
६. BS[2] notes an alternative reading without तु
७. IO adds स्वरूप
८. BN[1] and BS[2] omit उपपाद्य
९. IO and BS[2] उपदेष्टुं

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

अव्यक्तादीश्वरोद्भावितजगत्कारणभावाद्गुणसाम्यात्मनः प्रधानापराभिधानात् पदार्थात् युगसहस्रपरिमाणब्रह्मदिवसाविर्भावे सति सर्वा व्यक्तयः सर्वभावानां सर्वे विशेषाः प्रभवन्ति प्रादुर्भवन्ति । यथा सूर्योदयात् प्रवृत्ते दिवसे सर्वप्राणिनां सर्वक्रियाविशेषाः प्रभवन्ति, तथैव युगसहस्रपरिमाणे ब्रह्मनिशागमे तत्रैव यथोक्तेऽव्यक्तसंज्ञतत्त्वे प्रलीयन्ते, व्यक्तरूपतां परित्यज्य शक्तिमात्रत्वेनावतिष्ठन्ते । तथेह सर्वप्राणिभृतां सूर्यास्तमयात् संजाते निशागमे सर्वेन्द्रियप्रवृत्तयः अन्तरेव प्रलीयन्ते । किमत्र तात्पर्यम् ? इहोदयास्तमययोः सर्वप्रलययोश्च पर्यायेण प्रवहतोरनित्यत्वे नास्ति कश्चिद्भेदः, केवलं कलेबरादिविनश्वरभावाहंभावसङ्कलितनिसर्गनिरवच्छेदसंविदां मायाशक्तिमोहितानां ह्रासदैर्घ्यकल्पनाकृतो विशेषविभ्रमोऽत्रे । तेन यथोक्तज्ञाननिष्णाततया कालानवच्छिन्ने सत्ये स्वात्मन्यहंप्रतिपत्तिः विवेकिभिर्दृढीकार्येत्येतदेव निगमयति—भूतग्रामः स एवायमिति । स एवायं चतुर्दशविधेन प्रपञ्चेन प्रविभक्तो भूतग्रामः चराचरप्राणिवर्गो यथोक्तेन क्रमेण सर्गादौ भूत्वा भूत्वा पुनःपुनरभिव्यक्तिमासाद्य रात्र्यागमे ब्रह्मरात्रिसंज्ञे प्रलयकाले प्रलीयते न्यग्भवति ; अहरागमे सर्गादौ तु प्रभवति व्यक्तिमासादयतीति ॥

---

१. BS[1] and BS[2] प्रभवन्त्यह

२. BS[2] भावाहं एव संकलित

३. BN[1] omits कल्पना

४. 1O and BS[2] भ्रमः । न तदा यथो

BN[1] reads in the same way but omits न also.

[1]एवमाब्रह्मभुवनाल्लोकाः पुनरावर्तन्त इत्येतद[2]र्थप्रतिपादनप्रसङ्गेन सर्गप्रलयस्वरूपं प्रतिपाद्य इदानीं मत्प्रतिपन्ना येन कारणेन न पुनरावर्तन्ते [3]तत्प्रतिपादयितुमाह—

परस्तस्मात्तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

तस्मादव्यक्तसंज्ञात् जगत्कारणत्वेनावभासितात्पदार्थात्प्रधानाख्यात्परः पुनरन्यो विलक्षणो भावः परमार्थसत्पदार्थो विद्यत इति शेषः। कीदृशः? व्यक्ताव्यक्तः; व्यक्तं कारणत्वेन प्रधानापन्नम्; अव्यक्तं प्रधानात्मकं वस्तु; यस्मात्तथाविधं[4] विवक्षितेश्वरलक्षणभाव[5]वशात्किला[6]व्यवहारोऽयं प्रतीयते। यदि वा व्यक्तश्चाव्यक्तश्चेति विशेषणसमासाश्रयणेन व्याख्येयमे[7]तत्पदम्। स हि भावो नित्योदितप्रकाशात्मकतयैव सर्वमिदं प्रकाशयन् व्यक्त एव, मायावशात्तु सर्वस्य तथाप्रतिपत्त्यभावद[8]व्यक्तम्। तथा सनातनः सदा सर्वकालं भवतीति सनातनो नित्यः। कीदृशोऽसौ?

---

१. BS[1] omits एव...इति

२. BN[1] omits अर्थ

३. BN[1] इत्येतत्प्रति

४. IO विध

५. IO भासवशात्
BS[2] notes this as an alternative reading.

६. BS[2] किलजगद्व्यक्त is noted as an alternative reading.

७. IO and BN[1] तत्पदं
BS[2] notes this as an alternative reading.

८. IO अव्यक्ततया स्थितः सना-
BS[2] अव्यक्तः

समस्तेषु जडचेतनभेदेन द्विप्रकारेष्ववान्तरभेदादपर्यन्तप्रपञ्चेषु भूतेषु प्राणिषु नश्यत्सु उक्तेन प्रकारेण प्रधाने प्रलयमनुभवत्सु न नश्यति, नित्योदिताद्वैतचित्प्रकाशात्मकत्वात्प्रलीनत्वादिव्यपदेशं न याति ; कुतोऽत्यन्ताभावता ? तत्[1]कस्मान्नोपलभ्यत इत्याह—अचिन्त्यस्वमायाशक्तिमोहितान् प्रति यथास्थितेन नित्येन रूपेणाप्रथमानत्वादव्यक्तः । परमार्थतः पुनरक्षरः; न क्षरति, स्वा[2]त्मनः स्वरूपान्न सञ्चलति । यश्चैवंविधो भावः तां परमां गतिमनुत्तरां प्राप्तिमाहुस्तत्त्वविदः । अत एव कीदृशं तम् ? यं प्राप्यासाद्य आत्मत्वेन प्रतिपद्य प्रशान्तप्राप्यान्तरस्पृहा यथोक्ता योगिनो न निवर्तन्ते, पुनः संसारसरणिं[3] नावतरन्ति । यतस्तथाविधो यो भावः तन्मम परस्य ब्रह्मणः परमकारणस्य परमेश्वरस्य धाम, नित्योदितः प्रकाशो निरु[4]त्तरं स्थानं वा । तत एवंविधं मां प्र[5]पन्नास्ते न पुनरावर्तन्त इति तथाविधानां योगिनामपुनरावृत्तिकारणं प्रतिपादितम् ॥

तस्यैव यथोक्तस्य भा[6]वस्य स्वरूपं निगमयन् तत्प्राप्त्युपायं स्मारयन्नाह—

**पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यं प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन ॥ २२ ॥**

**यस्यान्तस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम् ॥ २२[7] ॥**

---

१. BS² omits तत्
२. IO and BS² स्वस्मात् स्वरूपात्
　BN¹ स्वात्मस्वरूपात्
३. BS¹ and IO तरणिं
४. All except BS² निरुत्तर
५. IO and BS² add ये
६. IO omits भावस्य
७. BS¹ निरामयं

य[1] एष य[2]थाप्रतिपादितस्वरूपो भावः स परः सर्वक्षेत्रज्ञातिरिक्तप्रभावत्वान्निरतिशयः पुरुषशब्दवाच्यः। सर्वशरीरान्तःशायित्वात्पुरुषः परमात्मा। कीदृशः? उक्तवक्ष्यमाणप्रकारेण यं प्राप्यात्मत्वेन प्रतिलभ्य योगिनः स्वीकृतनानाविधभेदाः पुनर्भूयोजन्मसंसारितयोत्पत्तिं नाप्नुवन्ति न लभन्ते; तथा यस्यैकस्यान्तःसामान्यसंविल्लक्षणे हृदये स्थितानि सर्वाणि चराचराणि भूतानि; न हि तेषामेवमन्योन्यविभिन्नरूपतया स्फुरताम[3]द्वयैकचिन्मात्रानुप्रवेशमन्तरेण सत्ता स[4]द्भावः; अत एव यत्र यस्मिन् सकलजगत्पदार्थसार्थसामान्याधारे सर्वमिदं प्रतिष्ठितम्, कृतव्यवस्थानम्। स पुनरित्थंभूतो[5] भक्त्या प्रतिपादितोत्तरोत्तरप्रकृष्टा[6]त्तत्त्वादिज्ञा[7]नपर्यन्तचतुरवस्थारूपया सेवया लभ्यः प्राप्तः। कीदृश्या? अनन्यया; तत्स्वरूपव्य[8]तिरेकेन सर्वास्ववस्थास्वविद्यमानमन्यदालम्बनं यस्यास्तया तथाविधयेति॥

अथान्यमुत्क्रान्तिविषयं योगोपदेशं[9] प्रस्तावयन्नाह—

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥ २३½ ॥**

यत्र यस्मिन् वक्ष्यमाणे काले प्रयाताः संन्यस्तदेहाः सन्तो योगिनोऽनावृत्तिम्; तथा आवृत्तिं विशिष्टभोगाधिकरणयोग्यशरीरादिसम्बन्धं यान्ति, स्वातन्त्र्येण भजन्ते, तं तादृशं व[10]क्ष्यमाणक्रमेण योगिनामेव सुलभं कालमुपदेक्ष्यामि॥

---

१. BS² omits यः
२. BS¹ omits यथा
३. BN¹ अद्वयचिन्मात्र
४. BS² संभवः
५. BN¹ adds यः
६. IO and BS² प्रकृष्टां तत्त्वा
७. IO and BS² ज्ञानि
८. BS² पाव्यति
९. BS² योगोपायं
१०. BN¹ वक्ष्यमाणं

तमाह—

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४½ ॥

धूमः[1] कृष्णस्तथा रात्रिः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५½ ॥

इह अग्नीषोमौ प्रकाशतमसी, तदुपलक्षिते दिनरात्री शुक्लकृष्णौ पक्षौ; तथा षण्मासपरिमाणे उत्तरदक्षिणे इति[2] अयने स्थूलदृष्ट्या कालविभागमाचक्षते। तस्य देवपितृमर्त्यविषयत्वेन प्रकृष्टमध्यम[3]निकृष्टपरिमाणतां च। इत्थं स्थिते अग्निर्ज्योतिः सूर्यप्रकाशः तदुपलक्षितमहः त्रिंशन्नालिकावच्छिन्नपरिमाणो दिवसाख्यः कालांशः। आपूर्यमाणसोमोपलक्षितः पञ्चदशाहोरात्रः शुक्लपक्षः शुक्लशब्देन निर्दिष्टः। तथा मकरादिराशिषट्कसञ्चारिविरोचनाचारोपलक्षितैः[4] षण्मासा उत्तरायणम्—इत्येते कालविशेषाः प्रसिद्धाः। तत्रैवंविधायां कालविशेषसामग्र्यां ये ब्रह्मविदो विज्ञानपरमकारणस्वरूपाः प्रयान्ति उत्क्रामन्ति शरीरमुत्सृजन्ति, ते ब्रह्म परं तत्त्वं गच्छन्ति, अपुनरावृत्तिं मोक्षगतिं प्राप्नुवन्तीत्यर्थः। तथा धूमो जलात्मकत्वात्सोमः। तथा[5] तदुपलक्षिता रात्रिः प्रसिद्धा। कृष्णः क्षीयमाणसोमोपलक्षितः पञ्चदशाहोरात्रैः[6] कृष्णपक्षः। स च क्रमापेक्षया यथापाठं न व्याख्यातः।

---

१. IO धूमो रात्रिस्तथा कृष्णः
२. IO and BS² इति is read after अयने
३. IO omits मध्यमनिकृष्ट
४. BS² लक्षिताः
५. BN¹ and BS¹ add च.
६. BN¹ रात्राः

तथा कर्कटादिराशिषट्कसञ्चारिसूर्योपलक्षित१: षण्मासा दक्षिणायनम्। तत्रैवं-विधायां काल२सामग्र्यां पुनर्जन्महेतुभूतं चान्द्रमसं ज्योतिः तेजः प्राप्य योगी समाधिमानावर्तते पुनः संसारमार्गमवतरति ॥

अत्र केचिद्विचक्षणा एवं विचारमारभन्ते। इह तावद्ब्रह्मणो यथोक्तस्य परमस्य कारणस्य द्विविधं वेदनम्——स्वसंवेदनेन साक्षात्कारः, आप्तोपदिष्टस्य वा स्वरूपावगममात्रम्। तत्राद्येन प्रकारेण ये ब्रह्मविदः तेषां प्राप्तप्रापणीयत्वादुक्तकालसामग्री न ब्रह्मप्राप्तिहेतुत्वमर्हति। द्वितीयेऽपि पक्षे स्वरूपावगममात्रेण ये ब्रह्मविदः, तेषामसाक्षात्कृततत्त्वानां यथोक्तकालविशेषप्राप्तिमात्रमपुनरावृत्तिहेतु३: ब्रह्मणः प्राप्तिकारणमिति न शक्यते वक्तुम्। एवमुभयरूपाणामपि ब्रह्मविदामन्तकाले यथोक्तकालप्राप्त्यधीना ब्रह्मप्राप्तिरिति न युक्त्या सङ्गच्छते। योऽपि योगी स्वीकृतसमाधिविशेषः, तस्य तद्बल४नपोहेन यथोक्तकालविशेषप्राप्तिमात्रादेव पुनरावर्तनमयुक्तिमत्। "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्" इत्यादिना प्रतिपादितोपपत्त्या सुदृढभावनाभावितस्य भावस्याव्यभिचारान्मन्थरं भावितस्य५ तत्कालमसंस्मरणे सति पुनरावृत्तिः स्थितैव; किमुक्तः कालः करिष्यति। तदेवं योगी यथोक्तकालविशेषप्राप्तेः पुनरावर्तत इत्येतदपि न हृदयावर्जकम्। यद्यप्युच्यते—यद्येष यथोक्तः कालो ब्रह्मप्राप्त्यादिहेतुर्न भवेत्,

१. BS[2] लक्षिताः
२. BS[2] adds विशेष
३. BN[1] हेतौ
BS[2] हेतोः
४. BN[1] and BS[2] अपोहेन
५. IO and BS[1] add तु

तत्कथं ब्रह्मविदोऽपि शान्तनवस्य तनुसंन्यासार्थमुत्तरायणप्रतीक्षा श्रूयते इति[१] ? सत्यं श्रूयते; किन्तु न[२] ब्रह्मप्राप्तिहेतुत्वेन ; तेनासौ कालो न[३] प्रतीक्षितः। यदि हि स[४] एव ब्रह्मप्राप्तिहेतुः स्यात् , तदा सर्वैर्ब्रह्मविद्भिर्[५]देहोत्सर्गे स एवापेक्ष्यते ; तत्कालोत्सृष्टदेहाश्च सर्व एवानावृत्तिभावं भजेयुः ; न चैवमस्ति ; न चैवंविधे काले म्रियेतेति विधिरुपपद्यते, सर्वस्य मरणे स्वातन्त्र्याभावात् ; भीष्मस्य तु स्वतन्त्रमृत्युत्वात् तादृक्कालप्रतीक्षणे निमित्तान्तरमनुमेयम् । तच्चेदं यत्किल स्थूलया दृशा यथोक्तः कालः कलेबरसंन्यासावसरे समुपनतो गतिविशेषाधानहेतुर्भवतीत्यागमवचनप्रमाणीकरणार्थं भीष्मस्य तादृक्कालप्रतीक्षोद्यमः। तस्माद्यथोक्तस्य कालस्य मुख्यतया नाहोरात्रादिरूपत्वम् । ततश्च ब्रह्मविदां योगिनां च यथाक्रमं ब्रह्मप्राप्तेः पुनरावृत्तेश्च कारणभूतं यदेतत् कालगतिद्वयमुक्तम्, तत्रावश्यं कश्चिद्विशेषो बोद्धव्यत्वेन वर्तते । वक्ष्यति हि "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन" इति । न चैतयोः सृत्योर्बाह्यकालविशेषरूपयोर्देवयानपितृयाणसंज्ञामात्रस्य ज्ञानं ब्रह्मादिप्राप्तिहेतुर्भवेत् । अतः कश्चिद्विशेषो यथोक्तार्थसङ्गतिहेतुरत्रानुमेय इत्याचक्षते । कालस्य हि बाह्याभ्यन्तरभेदेन रहस्यशास्त्रेषु द्विप्रकारता प्रतिपादिता । तत्र प्रसिद्धसूर्येन्दुचारोपलक्षितो बाह्यप्रकारः; प्राणापान[६]लक्षणसूर्येन्दुचारोपलक्षितस्त्वाभ्यन्तरः । तत्र मुख्यस्य बाह्यस्य प्रतिपादितबाधकसद्भावात् गौण आभ्यन्तरः

१. BS² omits इति
२. IO and BS² omit न
३. BS¹ omits कालो न
४. IO सर्वः
५. All except BN¹ ब्रह्मवद्भिः
६. BS² notes as an alternative reading प्राणापानमध्यचारोपलक्षितस्त्वाभ्यन्तरः
BN¹ reads लक्षणा मध्यचोरोपलक्षितसूर्येन्दु

समाश्रीयते। तेनाग्न्यादय उत्तरायणपर्यन्ताः शब्दाः प्राणगतिप्रतिपादितत्वेनात्र प्रयुक्ताः। यतः प्राणगतिरेव दिवसाद्युत्तरायणान्तकालावयवत्वेन तत्र तत्र रहस्य-शास्त्रेषु तत्तद्विशिष्टशरीराद्यपेक्षया प्रसिद्धाः। इत्थं स्थिते येषां यथोक्तज्ञान-निष्ठतया ब्रह्मविदां सतामन्तकाले स्वरसेन मूर्धच्छिद्राख्यब्रह्मद्वारवाहिनि प्राणचारे नियमितं संवित्स्रोतः प्राणोपशान्तिक्षणे सर्वतो निरवच्छेदनिस्तरङ्गनिसर्गनिर्मल-सामान्यसंविन्महोदधौ प्रविश्य समरसीभावमापद्यते। तेषां ब्रह्मप्राप्तिरव्यवधाने-नोपपन्नः ; स हि ब्रह्मविदां देवयानः पन्थाः ; एषैका तद्विषया शाश्वतिकी गतिः। यस्तु यथोक्ततत्त्वज्ञानव्यतिरेकेणाभ्यासस्वीकृतकेवलयोगः, तस्य योगिनो यथोक्त-प्राणगतिनियमितमपि संवित्स्रोतः प्राणोपशान्तिलक्षणे ब्रह्मवेदित्वाभावात् देहाद्यहं-प्रत्ययपर्वतप्रतिहतप्रसरं सत् परावर्तते ; परावर्तमानं च धूमादिदक्षिणायनशब्दान्त-प्रतिपादितामपानवृत्तिमेव पितृयानलक्षणां गतिं समाश्रित्य योगाभ्यासप्रकर्षानुसारो-चितं विशिष्टं शरीरान्तरमाविशति, यत्र पूर्वाभ्यासह्रियमाणचित्ततया प्रकृष्टतरेणो-त्साहेन यतमानः परां सिद्धिं प्राप्स्यतीत्युक्तम्। तदयमत्र संक्षेपार्थः—ये ज्ञानित्वाद्ब्रह्मविदः सन्तोऽन्तकाले यथाप्रतिपादितेन क्रमेण प्राणशक्त्यालम्बनचित्त-वृत्तयः तत्प्रशान्तिक्षणेऽप्यविलुप्तपरतत्त्वस्मृतयो देहमुत्सृजन्ति, ते निर्व्यवधानब्रह्म-प्राप्तिवशान्न पुनरावर्तन्ते। ये तु केवलयोगिनः सन्तः प्राणवृत्तिमेवाश्रित्य देह-

१. BN[1] omits अन्त
२. BS[2] adds अत्र
३. All except BN[1] सुरसेन
४. IO and BS[2] नियमित
५. BN[1] omits सर्वतो...शान्तिक्षणे
६. IO omits तत्त्व
७. BS[2] प्राणावृत्ति

मुत्सृजन्तो ज्ञानित्वाभावात्परतत्त्वस्मृत्यभावे[1] सत्युत्क्रामन्ति, ते देहाद्यनु-परताहंप्रत्ययवत्वादपानवृत्तिं संसारमार्गमाश्रित्य विशिष्टं देहान्तरमाप्नुवन्ति, यतः सर्वस्य कस्यचिच्छरीरिणः सर्वसंसारिधारणप्राणवृत्त्याश्रयणेन वर्तमानाद्देहात्[3] उत्क्रान्तस्य आपानवृत्त्याश्रयणेन भविष्यद्देहसङ्क्रान्तिर्भवति। ब्रह्मविदां योगिनां चेह[4] प्रकरणे विशेष एष[5] प्रतिपादितः॥

अत एव प्राणापानलक्षणान्तरविशिष्टमार्गद्वयत्वेनैतत्संगृहीतुमाह—

शुक्लकृष्णगती ह्येते जगतः शाश्वते मते।
अनयोर्यात्यनावृत्तिमेकया वर्ततेऽन्यया॥ २६ ॥

एते यथोक्ते द्वे गती प्राणापानवृत्तिरूपौ देवयानपितृयाणसंज्ञौ द्वौ मार्गौ जगतः सर्वलोकस्य। शाश्वत इति छान्दसः पाठः। तेन नित्येन सर्वः कश्चि-ज्जनस्तिर्यग्वाहिप्राणमार्गाश्रयणेन देहादुत्क्रामति, अपानमार्गाश्रयणेन देहान्तरे संक्रामति। ब्रह्मविदो योगिनश्चायं तु विशेषो यदनयोर्गत्योर्मध्यादेकयोर्ध्ववाह-प्राण[6]रूपया शुक्लया गत्या यथाप्रतिपादितेन प्रकारेणान्तकाले समाश्रितया ब्रह्म-विदनावृत्तिं याति ब्रह्म प्राप्नोति। योगी तु तयैवोत्क्रामन्नन्ययापानरूपया कृष्ण-योक्तेन हेतुना वर्तते, विशिष्टदेहान्तरे सङ्क्रामति॥

---

१. BS[1] and BS[2] स्मृत्याभावे
IO omits त्यभावे...परताहंप्र
२. BS[2]. An alternative reading here is न्तरं प्राप्नु-
३. BS[1] omits वर्तमान...श्रयणेन
४. BN[1] देहप्रकरणे
५. BN[1] एव
६. IO omits प्राण

यतः—

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

एते यथाप्रतिपादिते सृती प्राणापानरूपे गती[1] जानन् यथोक्तया महत्तया प्रतिपाद्यमानो[2] योगी प्राक्प्रतिपादितस्वीकृतमुख्ययोगो[3] न कश्चिन्मुह्यति । सर्व[4] एव तद्गतिज्ञः सन् ब्रह्मप्राप्तिहेतुगतिसमाश्रयणेन ब्रह्मैव प्राप्नोति, न तु संसारम्, इतरगतिपरिहारात् । एतयोश्च गत्योरेवंविधां महत्तां ब्रह्मविदां ज्ञेयत्वेन स्थितां तत्त्वविदो वदन्ति । सर्वदेहेषु मनःप्रसरसहचरोऽयं[5] प्राणप्रसरः यत उदेति, यत्र[6] चास्तमेति, तत् कालकलनादिसंकलप्रपञ्चविरहितब्रह्मतत्त्वोपलब्धिपदम् । ततश्च यथोक्तप्राणप्रसरनिबद्धः सकलः कालादिः[7] प्रपञ्चः तदुदयास्तमयदशाविमर्शक्षमसंविदां ब्रह्मविदां प्रलीयते ; तादृशीं च दशामासाद्य यो ब्रह्मवित् परमयोगी देहमुत्सृजति, स ब्रह्मण्येव परिणतो न पुनरावर्तते । यस्तु केवलयोगी तां दशां[9] प्रत्यवमर्ष्टुं न कुशलः, स चान्द्रमसं ज्योतिरपानप्रसररूपामाश्रित्योत्क्रामन् देहान्तरे संक्रामति, यत्र क्रमेण सिद्धिमाप्स्यतीति । एवमनयोर्गत्योः सिद्धिहेतुविभागविज्ञानमेतं एवोक्तम्—"नैते सृती पार्थ जानन् योगी मुह्यति" इति । यत एवं तस्मात्सर्वेषु कालेषु

१. All except BN[1] गती:
२. BS[2] प्रतिपद्यमानो
३. IO योगी प्राप्तः कश्चित्
४. IO omits सर्व...हेतुगति
५. BN[1] चारोऽयं
६. IO omits यत्र
७. BS[2] omits आदि
८. BN[1] कालादि
९. BS[1] adds तथा
१०. IO omits अतः

बाह्यदृष्टोत्तरायणदक्षिणायनादिबहुभेदप्रतिपादितेषु योगयुक्तो भव। यथोक्तेन प्रकारेण प्राणापानगतिज्ञानात्मके योगे[1] समाधौ युक्तोऽवहितो भव॥

यतोऽस्य योगस्यायं प्रभावः—

वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम्।
अत्येति तत्सर्वमिदं विदित्वा योगी परं[2] स्थानमुपैति
चाद्यम्[3]॥ २८½॥

इदं प्रश्नसप्तकव्याकरणरूपं वस्तु विदित्वा ज्ञात्वा यथोक्तसमाधिः[4] तत्सर्वं वेदाध्ययनयज्ञतपोदानाद्यन्तवत्पुण्यक्रियाफलमत्येति अतिक्रामति। यत आद्यमनुत्तरम्, अत एव परमनन्तानन्दमयत्वादत्युत्कृष्टं[5][6] स्थानं धामोपैति प्राप्नोति, परमात्मनि स्वाभाविकीं प्रतिष्ठां लभते इति[7]। यद्यप्येवं कैश्चिदयमर्थो व्याख्यातः, यथामुयैव वृत्त्योत्तरायणकालसामग्र्यां प्रयाता ब्रह्मविदोऽर्चिरादिसंज्ञलोकान्तराक्रमणक्रमेण ब्रह्म गच्छन्ति योगिनश्च अत एव योगिशब्देनोक्ताः दक्षिणायनकालसामग्र्यां प्रयाताः सन्तश्चान्द्रमसं ज्योतिः प्राप्य धूमादिसंज्ञलोकान्तराक्रमणक्रमेण संसार आवर्तन्त इति—पूर्वोक्तयुक्त्या चैतदपि व्याख्यानं न सङ्गच्छते; यथोक्तयुक्त्या चायमपि क्रमोऽनयोरेव गत्योरन्तर्भवतीति केचिन्मन्यन्ते। तदत्र परमार्थवेदिनः प्रमाणमित्योम्॥

---

१. BS² योगी
२. BS¹ पदं
३. BS² दिव्यं is an alternative reading.
४. BS² adds योगी
५. IO omits अनन्त
६. IO उत्कृष्ट
७. IO omits इति

गम्भीरैर्विपुलैः स्वभावविमलैः श्रीमत्पदार्थोज्ज्वलैः
स्फीतां सप्तभिरम्बुराशिभिरिव ब्रह्मादिभिर्वस्तुभिः ।
अध्यायस्य नरोऽष्टमस्य विवृतिं पृथ्वीमिमामञ्जसा
यः स्वीकर्तुमलं स एव विदुषां साम्राज्यमेकोऽर्हति ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
अष्टमोऽध्यायः ॥



## ॥ अथ नवमोऽध्यायः ॥

---

अष्टमाध्यायपरिसमाप्तौ[1] सप्तमप्रश्ननिर्णयेन[2] काले शुक्लकृष्णगतिद्वयज्ञानं ब्रह्मप्राप्त्युपायत्वेनोपदिष्टम्। अतस्तावन्मात्र एव ब्रह्मप्राप्त्युपायस्त्वया मा वेदीत्यर्जुन-मष्टमाध्याये प्रतिपादितमेवोपदेशं स्मारयन् सङ्ग्रहेण

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

तुशब्दो व्यतिरेके। [3]अष्टमाध्यायोक्त ए[4]व लक्षणोपायव्यतिरेकेणेदं स्वबुद्धि-नित्यसंनिहितं ज्ञानं ब्रह्मप्राप्त्युपायभूतं विज्ञानेन स्वसंवित्साक्षात्कारपर्यन्तेन विशिष्टेन ज्ञानेन बोधेन संयुक्तं तुभ्यमहं प्रकर्षेण संक्षेपतः सारप्रतिपादनरूपेणातिशयेन वक्ष्यामि कथयिष्यामि। कीदृशाय? अनसूयवे; श्रद्धाविशुद्धबुद्धित्वाद्यतोऽसौ[5] ज्ञानायानसूयसि। यथोक्तस्य फलस्य सम्भावनावशादज्ञ[6]ानवदगर्हणमारभसे। कीदृशं ज्ञानं वक्ष्यामि? गुह्यतमं गुह्यं गुह्यतरं च पूर्वेष्वध्यायेषु ज्ञानमुक्तम्; इदं तु तदपेक्षयातिगुह्यम्; अनाविर्भूतविवेकजज्ञानानां गुहायां दूरतरेऽध्वनि स्थितम्[7];

---

१. BS² अष्टम
२. IO and BS² निर्णये तु
३. IO omits अष्ट...व्यतिरे
४. BS² omits एव
५. All except BS¹ त्वाद्योऽसै ज्ञाना
६. IO and BS² अज्ञवत्
७. IO स्थितः

रहस्यतया वा जरामरणचक्रपरिवर्तनलक्षणादशुभादश्रेयसो मोक्ष्यसे, स्वयमेव मोक्षं प्राप्स्यसि। यतो वक्ष्यमाणज्ञानोपायनिष्ठस्यान्तकाले गतिद्वयज्ञानाभ्युपाय-व्यतिरेकेणापि ब्रह्मप्राप्तिर्निर्दिष्टैव ॥

अत एवास्य ज्ञानस्य प्रशंसार्थमाह—

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।**

**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

इदं वक्ष्यमाणं[1] ज्ञानमुत्तममनन्यसामान्यं पवित्रं पावनम्। सर्वकिल्बिष-कलङ्कपङ्कसंक्षालनहेतुमन्ति हि पवित्राणि तीर्थमन्त्रतपोयज्ञदानादीनि। तानि[2] तु ज्ञानरहितत्वादन्तवन्ति, यदि परमेतज्ज्ञानसंस्कृतान्यनन्तफलत्वमश्नुवीरन्[3]। अत एवोत्तमं पवित्रमित्युक्तम्। यतो राजविद्यैषा राज्ञां जनकाश्वपतिप्रभृतीनामुग्रं स्वकर्माप्यनुतिष्ठतामेषा विद्या ज्ञानमपवर्गफलत्वेन श्रूयते। ततश्च तेषां राज्ञां गुह्यं[4] रहस्यमेतत्। यतः प्रत्यक्षावगमं प्रत्यक्षः स्वसंवेदनवेद्योऽवगमो बोधो यस्य तत्तथाविधम्। अन्येषां हि पवित्राणां कालान्तरे देहान्तरे लोकान्तरे च फला-वगमो भविष्यति। तथा धर्म्यं धर्माच्छास्त्रोदिताद्वर्णाश्रमक्रमविभक्तात्सदाचाराद-नपेतम्। अत एव कर्तुं संपादयितुं सुसुखमत्यन्तं[5] सुखकरम्। सहजस्वभाव कर्ममात्रसाधनत्वात् तथाविधं सदप्यव्ययमविद्यमानक्षयम्, तस्माप्यस्य फलस्य मत्समा-पत्तिलक्षणस्य[6] नित्यत्वात्। एतच्च मदनुग्रहोद्गतभक्तिश्रद्धादिगुणसंपद्भिरेव[7] सुलभम् ॥

१. IO and BN[1] वर्तमान
२. All except BS[1] omit तानि
३. BN[1] फलमश्नु
४. BN[1] and BS[2] omit गुह्यं
५. BN[1] and BS[2] अत्यन्तसु
६. BS[2] संगमापत्ति
७. BS[2] notes as an alternative reading अनुग्रहोत्थिते भक्ति

यतः—

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

अस्योक्तस्य वक्ष्यमाणस्य च ज्ञानरूपस्य धर्मस्याश्रद्दधाना यथोक्तफला-सम्भावनापराः पुरुषा मां यथोक्तस्वरूपं परं ब्रह्माप्राप्य मत्समापत्तिमनासाद्यैव मृत्युसंसारयोर्भूतेषु नित्यपरिवर्तिनोर्मरणजन्मनोर्वर्त्मनि निवर्तन्ते पुनःपुनरापतन्ति । किमुक्तं भवति? मदनुग्रहसुधासागरसमुद्गतश्रद्धासुरतरुमञ्जरी सकलसिद्धिप्रसवैक-हेतुर्यैरुपास्यते, तैरेवानेनाहं सुलभो नान्यैः—इति ॥

तदिदानीं ज्ञानं प्रतिपादयितुमाह—

मया ततमिदं कृत्स्नं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

मम सम्बन्धिनमैश्वरमीश्वरे सर्वथा स्वामिनि एकस्मिन् भवं योगमनन्याधि-कैरणं समाधिं पश्य प्रतिपद्यस्व । यत इदं वेद्यत्वेन सर्वप्रमातॄणां सर्वं संक्षेप-तश्चराचरभावरूपमवान्तरभेदपरिकल्पनया निष्पर्यन्तं वस्तु मया उपादानसह-

१. All except BS[1] अनेन ज्ञाने सुल-　　२. IO कारणं

कार्यादिकारणान्तरनिरपेक्षेण नित्यनिर्विकारसामान्यसंविन्मात्रस्वभावाप्रच्युतेनानन्यानुकार्यनिरतिशयनिजक्रीडामात्रैकप्रयोजनेन स्वेच्छैकसाधनेनैकेन[1] कर्त्रा ततम्। इत्थमनन्ताश्चर्यविभासरूपतया विस्तारितं जगत् भुवनम् अव्यक्तमूर्तिना मन्मायोत्थापितैः सर्वैः प्रमातृभिरिदन्तया परिच्छेत्तुमशक्यत्वादव्यक्ताव्यपदेश्[2]व्यक्तिविरहिता मूर्तिराकृतिः स्वरूपं यस्य स तथा, तेन तादृशेन। किमुक्तं भवति? ब्रह्मादेरारभ्य[3] परमक्षुद्रजन्तुपर्यन्तस्य सर्वस्य प्रमातुर्यत्संवेद्यं वस्तु येन येन प्रकारेण यदा यदा यत्र यत्र प्रकाशते तत्संवेद्यमानं सन्तमात्मानं[4] लभते। संवेद्यमानता च संवेदितुः कर्मभावापत्तिः। संवेदिता च परमार्थतः सदैक एव भवितुमर्हति, येन[5] कथंचिन्न कदाचिन्न[6] कुत्रचित्संवेद्यत्वलक्षणविशेषणसंपर्कं सहते। ततो मत्स्थानि मय्येकस्मिन् संवेदितरि स्थितानि सर्वाणि निखिलानि स्थावराणि जङ्गमानि च संवेद्यानि भूतानि। एवं सर्वकर्ता सर्वशक्तिहेतुरहम्; न च तेषु भूतेषु व्यवस्थितः; यथा नित्यसंवेदितृत्वमात्रस्वभावाव्यभिचारिणो मम व्यवस्थासंवेद्यानां सर्वभूतानां व्यवस्थितिहेतुः, न तथा सर्वभूतव्यवस्था मद्व्यवस्थितिहेतुरित्यर्थः। सर्वाणि हि भूतानि संवेद्यत्वादेवोत्पादविनाशादिधर्मसम्बन्धादनित्यानि कथं मम भूतस्थित्यधीनावस्थितिर्भवेत्। इत्थं मदधीनस्थितिकान्यपि भूतानि न[11] मत्स्थानि मयि संवेदितरि मद्रूपतयैव न स्थितिं

---

१. BS[1] केन
२. BN[1] व्यपदेश्य
३. IO आगत्य
४. BS[2] सत् तमात्मानं is noted as an alternative reading.
५. BN[1] यो न
६. BS[1] omits कदाचिन्न
७. IO न तु क्वचित्
८. BN[1] and BS[2] नित्यं
९. BS[2] मात्रा
१०. IO omits व्यभि...भूतानां
११. BS[2] adds च

भजन्ते, वेद्यतया स्फुरणात्। भूतस्थितिहेतुरहं यथा संवेदितृतयैव नित्यं स्फुरामि, न तथान्यान्यपि भूतानि, संवेद्यत्वेनैव तेषां प्रतीतेः। एवं यथोक्तेन प्रकारेण ममात्मा स्वभावो भूतभृद्भूतानि बिभर्ति धारयति, तेन तेन रूपेणावस्थापयति, न च भूतस्थः न भूतस्थित्यधीनस्थितिक इत्युक्तमेव। अतश्चानेन क्रमेण भूतभावनः[1] भूतानि भावयति सृजतीत्यर्थः॥

अत्र केनचित्सादृश्यांशेन दृष्टान्तमाह—

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥ ६॥**

एवमनेन प्रकारेण मय्यनवच्छिन्नमहिम्नि स्थितान्याधेयत्वमापन्नानि तत्तद्देहगतानि सूक्ष्माणि महान्ति च भूतानि उपधारय बुद्ध्यस्व। कथम्? यथाकाशे निरवच्छेदव्याप्तौ नित्यं सदैव स्थितो वायुः। कीदृशः? सर्वत्रगः, तत्र तत्र देशे गतः कृतव्याप्तिः; महांश्च अन्यापेक्षया व्यापकः। एवं मत्स्थानि भूतानि बुद्ध्यस्व। अत्रेदं तात्पर्यम्—यथा वायोः सर्वत्र सर्वगतत्वमहत्त्वादयो धर्मा अपर्यन्ताकाशावकाशैकनिबन्धनाः, तथा सर्वभूतानां सर्वधर्मा मत्स्वभावानुप्रवेशैकनिबन्धना इति॥

तदेतन्निगमयितुमाह—

**एवं हि सर्वभूतेषु चराम्यनभिलक्षितः।**
**भूतप्रकृतिमास्थाय सह चैव विनैव च॥ ७॥**

---

१. BS[2] नोद्भूतानि
२. IO omits अन्य
३. BS[1] गतमह
४. All except IO सदैव च

एवमनेन वाय्वाकाशसम्बन्धौपम्येन[1] प्रकारेण सर्वभूतेषु चरामि, तानि व्याप्नोमि। अनभिलक्षितः इदन्तया केनचिदप्यनवधारितस्वरूपः। किं कृत्वा चरामि? भूतप्रकृतिं प्राक्प्रतिपादितचेतनात्मकभूतलक्षणां प्रकृतिं स्वभावमास्थाय अधिष्ठाय। कथं चरामि? सह चैव विनैव च। नित्यमन्योन्यसम्बन्धत्वात् सह वेद्यवेदकलक्षण-स्वरूपभेदाद्विनैवान्योन्यपृथक्त्वेन। अन्यो हि वेदकस्वरूपो मम स्वभावः, अन्यश्च मदिच्छोद्भावितं वेद्यस्वरूपम् ॥

मदिच्छोद्भावितत्वमेषां प्रतिपादयितुमाह—

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामकीम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ८ ॥

एतानि चेतनाचेतनानि सर्वभूतानि महाकल्पावसाने मदीयां प्रकृतिं स्वभावं यान्ति, मदिच्छयैव मयि प्रलीयन्ते इत्यर्थः। तानि च कल्पादौ कल्पान्तरारम्भे अहमेव विसृजामि[2], चतुर्दशविधेनैव भेदेनैवावभासयामि[3]; न तु यान्येव प्रलीनानि तान्येव पुनः सृजामीत्यर्थः[4]। ईश्वरेच्छायां[5] अपर्यनुयोज्य-त्वात् स्वातन्त्र्येऽपि चतुर्दशविधमेव भूतसर्गं प्रलयोत्पादावस्थयोः संहरति सृजति[6] च परमेश्वर इति तात्पर्यम् ॥

---

१. All except BS[1] संबन्धोपगमेन
२. IO omits सृजामि...पुनः
३. BS[2] भेदेनावभास-
४. IO and BN[1] मीत्यत्रार्थः This is noted as an alternative reading in BS[2].
५. BN[1] रेच्छया
६. BS[1] सृजते

एतदेव निर्गमयति[1]—

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं[2] कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९ ॥

स्वां प्रकृतिं[3] निजं स्वभावं नान्यत्किंचित्कारणान्तरमवष्टभ्यावलम्ब्येदं सर्वं[4] भूतग्रामं प्राणिसमूहं पुनःपुनर्भूयोभूयः[5] अनादिप्रबन्धप्रवृत्तकल्पादिकालकल्पनया सृजामि, एवमुद्भासयामि। प्रकृतेरेव वशान्मत्स्वभावपारतन्त्र्यादेवावशमस्वतन्त्रम् । कल्पान्ते च तथैव संहरामीत्यत्रानुवर्तनीयम् ॥

किंच—

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १० ॥

तानि सर्गसंहारादिरूपाणि[6] कर्माणि न पुनर्मां बध्नन्ति, मन्मायोद्भावितनानाक्षेत्रज्ञवन्नियमितविपाकारम्भकत्वादिना न परतन्त्रीकुर्वन्ति । यथा क्षेत्रज्ञानां कर्माणि जात्यायुर्भोगलक्षणविपाकारम्भकत्वेन संसारबन्धकारणत्वमापद्यन्ते[7], न तथा सर्गादिकर्माणि ममेत्यर्थः[8] । कीदृशं सन्तं मां न निबध्नन्ति ?

---

१. BN[1] and BS[1] निरासयति
२. BS[2] इदं
३. IO adds शुभामवष्टभ्य
४. IO सर्वं
५. All except BS[2] omit भूयः
६. BN[1] संहाररूपाणि
७. IO and BS[1] आपद्यते
८. IO समेत्यर्थः

हेतुगर्भं विशेषणमाह—तेषु[1] कर्मस्वसङ्गत्वान्ममत्वादिग्रहाभावेनानिमग्नचित्तत्वादुदासीनवत् तटस्थवदासीनं स्थितम्। यथा परकीयकर्मसु परो नैतानि मम तत्तत्फलदानीति मन्यमानः ताटस्थ्यमनुभवन् तैस्तैः कर्मभिः स्वफलभोक्तृत्वादिना न नियम्यते[2], तथा सर्गादिभिः कर्मभिर्न निबध्यते; यतस्तानि सर्गादीनि कर्माणि अचिन्त्यवैभवस्वमायोद्भावितान्योन्यभेदान्[3] क्षेत्रज्ञान्प्रति मम सर्वतः स्वेच्छामात्रेण तथावभासकत्वमेव कर्तृत्वम्। क्षेत्रज्ञा एव हि मन्मायामोहिताः सन्तः अन्योन्यभेदेनावभासमानानां भावानां सर्गाद्यवस्थायोगित्वं प्रतिपद्यन्ते। मम पुनरेते सर्वे भावाः तत्तत्सर्गाद्यवस्थाजुषोऽपि अद्वयचिन्मात्रलक्षणात् स्वभावान्न भिद्यन्त इत्यनेन प्रकारेण तेषु कर्मसु उदासीनवदासीनं मामेतानि न निबध्नन्तीत्युक्तम्। एष[4] चार्थः प्रागेव पुनःपुनः

"तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्"

इत्यादिना,

"न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि"

इत्यादिना च प्रतिपादितः॥

यद्येवं वस्तुस्थित्या परमेश्वरो नेदं जगत्साक्षात्सर्गादिकर्मणि[5] नियुनक्ति, तत्केनेदं जगत् सृज्यत इत्याह—

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते॥ ११॥**

---

१. IO and BS[2] तेषु कर्मस्वसक्तत्वात्
BN[1] तेष्वसक्तत्वात्
२. BS[1] न यस्य ते
३. BN[1] and BS[1] भेदात्
४. IO omits एष...इत्यादिना
५. All except BN[1] कर्मणा

मया परमेश्वरेण नित्यं स्वभावमात्रावस्थितेनैवाध्यक्षेणाधिष्ठात्रा हेतुभूतेन प्रकृतिः सप्तमेऽध्याये चेतनाचेतनविभागेन प्रतिपादितपरापरस्वरूपा स्वभाववृत्तिरेवापर्यन्तस्थावरजङ्गमभेदयुक्तं जगत् सूयते जनयति। अनेन हेतुना निमित्तेन इदं जगद्विपरिवर्तते सर्गस्थितिसंहारप्रबन्धचक्रे परिभ्रमति ॥

एवमद्भुतैश्वर्यैकास्पदम्—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥

मूढा मायामुषिततत्त्वज्ञानाः मां यथाप्रतिपादितस्वभावमवजानन्ति। नित्योदितनिरतिशयप्रकाशप्रद्योतमानस्वभावमपि मोहबलोत्साहविच्छेदान्मज्जिज्ञासायामप्यवज्ञामाश्रयन्ति। कीदृशं सन्तं मामवजानन्ति? मानुषीं तनुमाश्रितम्। मानुषीग्रहणमुपलक्षणार्थम्। तेन मनुष्यादिभेदेनान्योन्यभिन्नानन्ताकृतिविशेषैरूपां[1] पारमार्थिकस्वरूपतिरोधानतिरस्करिणीमाश्रितम्। अत एव ते मूढाः कीदृशाः सन्तो मामवजानन्ति? एवंविधया मन्मायया मदीयं परमेतस्मान्नानाचेतनाचेतनभावलक्षणात् प्रपञ्चादन्यं विलक्षणं तथाऽव्ययमविनश्वरम्, अत एवानुत्तमम्। उत्तरोत्तरविचार्यमाणप्रकर्षे सत्यविद्यमानोऽन्य उत्तमः प्रकृष्टो यस्मात्तं तथाविधं भावं पारमार्थिकीं सत्तामजानन्तः सन्तो मामेवं[2] विमर्शाभावादबुद्ध्यमानाः ॥

---

१. BN[1] विशेषभेदां रूपां पार
IO विशेषरूपा पार

२. BS[1] एवं

यतस्ते मूढाः सन्तः—

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं[१] श्रिताः ॥ १३ ॥**

[१]मोहिनीं स्वभावाज्ञानकारिणीं प्रकृतिं गुणमयं स्वभावं श्रिताः देहात्मकाहंकारनिबन्धनस्थितयः। अत एव कीदृशीम्? आसुरीं रजोलेशानुगततमःप्रधानाम्। तथा राक्षसीं केवलतमःप्रधानामुत्तमाधमासुरसर्गभेदत्वेन प्राक्प्रस्तावनायां प्रतिपादितस्वरूपम्; यत एवंविधां प्रकृतिं श्रिताः ततो मोघाशाः, मोघाः फलशून्या आशा येषां ते तथाविधाः; ते ह्यासुरराक्षसप्रकृतित्वाद्रजस्तमोमयत्वे सति कामात्मानो भोगविषयं संकल्पमेव कुर्वन्ति, न तु तत्फलप्राप्तिहेतुं शास्त्रोदितं कर्मारभन्ते; ततो मोघाशा इत्युक्तम्। तथा मोघकर्माणः यदपि कर्मारभन्ते, तच्छास्त्रीयोपायनियमाभावान्मोघं निष्फलं येषां ते तथाविधाः। वक्ष्यति हि राजसतामसयोः कर्मणोर्लक्षणम्। तद्यथा[२]—

"यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते क्लेशबहुलं तद्राजसमिति[३] स्मृतम् ॥

अनुबन्धं[४] क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते[५] कर्म[६] यत्तत्तामसमुच्यते ॥"

---

१. BN[1] मोहनीं
२. BN[1] and BS[1] तथा
३. BS[1] तद्राजसमुदाहृतम् is noted as an alternative reading.
४. All except BN[1] बन्ध
५. BN[1] and BS[1] आरभते
६. IO omits कर्म

तथैवंविधं कर्तृलक्षणमपि—

"रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते[1] ॥"

तथा—

"अयुक्तः प्राकृतः स्तब्धः शठा नैष्कृ[नैकृ]तिकोऽलसः ।
निषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥"

तथा मोघज्ञानाश्चिकीर्षितकर्मनिष्पत्तिहेतुत्वात्कर्मारम्भपूर्वभावि[2]विज्ञानमपि मोघं निष्फलमेषां ते तथोक्ताः । ज्ञानपूर्वकं हि कर्म । ज्ञानस्यैव चासुरादिप्रकृत्याश्रितज्ञातृ[3]सम्बन्धिनो विपर्ययप्रतिपत्तिदोषसम्बन्धात् कर्मफलेन विसंवादात् निष्फलता स्थितैव । वक्ष्यति—

"पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥"

तथा—

"यत्त्वकृत्स्नविदेकस्मिन् कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥" इति ।

मोघज्ञानत्वाद्विचेतसः तत्त्वार्थनिष्ठत्वाभावात्सदपि विगतं सम्यग्ज्ञानलक्षणस्वकार्याकरणादविद्यमा[4]नमेव चेतोऽन्तःकरणं येषां ते तथाविधाः ॥

---

१. IO कीर्तितः
२. IO and BS[2] पूर्वताविज्ञानमपि
३. BS[1] ज्ञान
४. BS[2] माणेव

एवमेकान्ततो मायाक्रोडीकृतानामसुरप्रकृत्याश्रितानां वृत्तिं प्रतिपाद्य विद्यानुगृहीतानां प्रवृत्तिनिवृत्तिविषयशास्त्रोपदेशपात्रभूतानां दैवप्रकृत्याश्रितानां प्रतिपादयिषुः पर[1]दैवप्रकृत्याश्रितानां तावत्तां प्रतिपादयितुमाह—

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥**

प्रस्तावनाप्रतिपादितपरापरस्वरूपमय्याः परस्या देव्याः प्रकृतिं दैवीं सम्यग्ज्ञानविवेकद्योतनशीलत्वात् देवशब्दवाच्यानां संबन्धिनीं प्रकृतिं स्वभाव-माश्रिताः, स्वत एव महात्मानः उत्कृष्टस्वभावाः मां परमात्मानं भजन्ते, चतुर्विधया सेवयानन्यमानसो मद्व्यतिरिक्तवस्त्वन्तराभावप्ररूढप्रतिपत्तित्वान्मय्येवैकस्मिंस्तत्त्वे मनो येषां ते तथाविधाः; ज्ञात्वा चानुष्ठानमिति स्थितेः[3]; कीदृशं मां विदित्वा भजन्ते? भूतादिं भूतानां चेतनाचेतनानां मध्ये आदिं प्रथमम्; तथा अव्ययं नित्य-त्वान्न मम क्षयो विद्यत इत्यर्थः। सर्वभूतान्याद्यन्तवन्ति, अहमादिरेव नान्तवानित्यत्र तात्पर्यम् ॥

किंच—

**सततं कीर्तयन्तश्च यतन्तश्च यतव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥**

---

१. BS[2] मात्र
२. IO परस्मैव प्रकृ
३. BN[1] स्थितः
४. BN[1] वन्तोऽहमा

त एवं दैवप्रकृत्याश्रिताः प्रबुद्धाः सततमव्यवधानेन कीर्तयन्तो मन्त्रजपस्तुत्यादिनोद्घोषयन्तः ; तथा ध्यानादिना यतमानाः, तथा नमस्यन्तः प्रह्वीभवन्तो मां भक्त्या हेतुभूतया नित्ययुक्ताः सन्त उपासते । वाङ्मनःकायव्यापारान्मदेकैविषयान् कुर्वाणाः परिचरन्तीत्यर्थः ॥

किंच—

ज्ञानयज्ञेन चाप्यन्ये यजन्तो[2] मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १६ ॥

पूर्वेभ्यः प्रसिद्धभक्तिप्रकाराश्रयणेन मद्यजनपरेभ्योऽन्ये विलक्षणा ज्ञानेन विशुद्धसंविन्मात्रमत्स्वरूपचिन्तनैकलक्षणेन यज्ञेन यागविधिना यजन्तः पूजयन्तश्च मामुपासते सेवन्ते । कथं मां ज्ञानयज्ञेनोपासते? एकत्वेन सकलप्रपञ्चपरिहारादभिन्नैकसंविन्मात्रमत्स्वरूपतया ; तथा पृथक्त्वेन नानात्वेन; अत एव बहुधा अनेकधा[3] ज्ञानेन क्रियाद्युपचरणीयविचित्राकृत्यादिभिन्नरूपतया । वस्तुतः कीदृशम्? विश्वतोमुखम् । सर्वतः सर्व एवोपासनीयाभेदान्मुखं प्रत्यभिज्ञाकारणं यस्य तं तादृशम् । इदमत्र तात्पर्यम्—द्विविधः पारमार्थिको मत्स्वरूपोपासाक्रमः[4] एकः, संविन्मात्रैकतत्त्वविषयज्ञानसाधनः[5] अपरः, एकस्यैव तत्त्वस्य नानाजगद्भावनानाशक्तिसमूहत्वात् तद्द्वारेण तस्य तस्योपासनमिति ॥

---

१. IO एकं विषयानुकुर्वाणः
२. All except BN[1] यजन्ते
३. BS[1] अनेकेन ज्ञानेन
४. BS[1] पासक्रमः
५. BS[1] ज्ञानमात्रसाधनः

तदेवैकस्य तत्त्वस्य सर्वशक्तित्वं प्रतिपादयितुमाह—

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १७ ॥**

क्रतुयज्ञयोः यद्यपि पर्यायत्वेन व्यवहारो दृश्यते, तथापि यज्ञशब्द-सन्निधाने पशुसोमादिसाधनविशिष्ट एव यज्ञः क्रतुशब्देनात्रोक्तः । [2]यज्ञशब्देन पाकयज्ञानां ग्रहणम् । ततो यथाप्रतिपादितब्रह्माद्वैतस्थित्या सर्वो यागविधि-र्नानादेवतासंप्रदानोऽहमेव । तथा स्वधापितृतर्पणमन्त्रोऽप्यहमेव । तथा नानौषधि-विकारात्मकमौषधं यागोपकरणद्रव्यमहमेव । तथा संप्रदानभूतदेवतासंमुखी-करादिविविधार्थवाचकशब्दविशेषरूपो मन्त्रो यज्ञोपक[3]रणविशेषोऽप्यहम् । तथाज्यं घृतं तर्पणद्रव्यम् । तथाग्निरा[4]हवनीयादिर्यागविधिकरणम् । तथा हुतं हवनं होमकर्मेति यज्ञादिरूपतया ब्रह्मार्पणविधिन्यायेनाहमे[5]वं स्थित इत्यत्र तात्पर्यम् ॥

किंच—

**पिताहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ १८ ॥**

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १९ ॥**

---

१. BS[2] omits this word.

२. All except BS[1] omit यज्ञ... ग्रहणं

३. BN[1] करणमन्त्रविशे-

४. All except BS[1] omit आहवनीयादिः

५. BN[1] मेवास्थितः

अस्य जगतः समस्तस्य चराचरस्य विश्वस्योत्पत्तिमूलकारणत्वात्पिता माता चाहम्; यदि वा पितरौ यथापत्यस्य समस्तयोगक्षेमोद्वहननित्यावहितौ, [1]तथाहमस्य जगतः, तथा धाता स्थितिहेतुः ; तथा [2]पितामहो ब्रह्मादीनां जगतः स्रष्टृत्वेन स्थितानां जनकत्वात्पितामहः। पवित्रं परमं पावनं यद्वेद्यं ज्ञेयं वस्तु ; तथोङ्कारः [3]परंब्रह्मवाचकः प्रणवाख्यो वेदादिः शब्दविशेषः, तत्प्रभवाणि च ऋक्सामयजूंषि ; तथा गम्यते ज्ञायते वा परं तत्त्वमनयेति गतिरुपायः ; तथा भर्ता पोष्टा। तथा प्रभुः यथेष्ट-विनियोगैकस्वामी; तथा साक्षी शुभाशुभकर्माध्यक्षः ; तथा निवासः सर्वभूतानामेक-मावसथम्[4]; तथा शरणं सर्वोपद्रवप्रशमायाश्रयः ; तथा सुहृत् सर्वभावेनोपकारी; तथा [5]जन्मविनाशस्थितिहेतुत्वात्प्रभवः प्रलयः स्थानं च ; तथा प्रलीनं सद्यत्रावतिष्ठते, तत्प्रधानात्मकं निधानम् ; तथा यतः प्रभवति तत्प्रधानस्याप्यव्ययमक्षमं बीजं कारणमिति न तत्किंचिदस्ति, यदहमस्य जगतो न भवामीत्यर्थः ॥

तथा च—

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ २० ॥**

सूर्यो भूत्वा ग्रीष्मादौ [6]रसमाददानोऽहं तपामि यतः, तदा ह्यहमेव वर्षं वृष्टिं निगृह्णामि निरुणध्मि। वर्षाकाले चाहमेव पर्जन्यो भूत्वा उत्सृजामि। तपनवर्षणक्रिययान्नाद्यु[7]त्पादेनाहमेव जगद्वर्तयामीत्यर्थः। तथामृतमविनाशि

---

१. BS[1] यथा
२. IO omits पितामहः
३. IO परं
४. BN[1] adds गृहं
५. IO omits जन्म
६. IO रसमात्रादानो
७. IO and BS[1] उत्पादनेन

यद्वस्तु मृत्युश्च विनाशहेतुरहमेव । किं बहुनोक्तेन ! यत्किंचित्सद्विद्यमानं शोभनं वा यदसत्तद्विपरीतं किंचिज्जगति संभवति, मच्छक्तिरेवैका सदसद्भावेनावभासते इति ॥

एवं परदैवप्रकृत्याश्रितसर्गभेदप्रतिपादनप्रसङ्गेन ब्रह्मस्वरूपं सङ्ग्रहेणोक्त्वा इदानीमपरदैवप्रकृत्याश्रितानां पुरुषाणां प्रवृत्तिं प्रतिपादयितुमाह—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि
देवभोगान् ॥ २१ ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ २२ ॥

ज्ञानरहितक्रियामात्रोपदेशपर्यवसितार्था ऋग्यजुस्सामलक्षणास्तिस्रो विद्या अधीयते विदन्ति वा त्रैविद्याः मुख्यतया ब्राह्मणादयस्त्रैवर्णिकाः ; पूतपापा आनिषेकाच्छास्त्रविहितसंस्कारसंपन्नत्वाद्धूतकल्मषाः ; तथा निवृत्तयथोक्तब्रह्मचर्याद्याश्रमनियमाः सन्तः सोमपा नित्यनैमित्तिकस्वकर्मानुष्ठाननिष्ठा इत्यर्थः । तथाविधाः सन्तो देवतान्तरयजनविधिरूपैर्यज्ञैस्तैस्तैः शास्त्रचोदितैर्यागविशेषैः सम्यग्ज्ञानाभावादविदन्तोऽपि मामेवेष्ट्वा पूजयित्वा स्वर्गतिं देवलोकप्राप्तिं कामात्मानः सन्तः प्रार्थयन्ते उपयाचन्ते । यतस्तैस्तैर्यज्ञविधिभिस्तांस्तान्देवविशेषान्

---

१. BS² omits एव २. IO आधीयन्ते

यजन्त इति विश्वतोमुखमेकं तत्त्वं मामेव यजन्ते केवलं संप्रति विद्याशक्त्यानुगृहीताः परं मदीयं भावमविदन्तो भोगमात्रं यज्ञादिक्रियाफलं मन्यमानाः स्वर्गमभिकाङ्क्षन्ति[2] । ते तथाविधाः त्रैविद्याः देहान्ते स्वकर्मोपनतं स्वर्गलोकं विशालं विपुलं देवलोकं गत्वा तद्गतान् भोगान्[3] भुक्त्वा उपसेव्य स्वकर्मोपार्जिते पुण्ये तदनुरूपकालातिवाहनात् क्षीणे अन्तं गते मर्त्यलोकं कर्मभूमिमिमां स्वकर्मानुरूपजातिविशेषाश्रयणेन विशन्ति प्रतिपद्यन्ते । एवमनेन क्रमेण त्रयीधर्मं वेदोक्तं स्वं स्वमाचारमनुप्रपन्नाः समाश्रिताः सन्तः कामकामाः स्वर्गादिभोगाभिकाङ्क्षिणः चातुर्वर्णिका अपि गतागतं[4] स्वर्गादिभूमौ गमनमागतं ततो भूयः कर्मभूमावागमनं लभन्ते प्राप्नुवन्ति, संसारबन्धभागिनः पुनःपुनर्भवन्तीत्यर्थः ॥

एतदन्तेन ग्रन्थेन ज्ञानं कथयित्वा विज्ञानकथनमाह—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्[5] ॥ २३ ॥

ये जनाः परां[6] दैवीं प्रकृतिमाश्रिता दृष्टानुश्रविकगुणात्मकेभ्यो भोगेभ्यः अशुद्ध्यतिशयक्षयादिदोषवद्भ्यो विरक्ताः सन्तो नित्यनिर्मलनिरतिशयानन्तानन्दसुधासागरं मां परमकारणं ब्रह्मतत्त्वं पर्युपासते, यथाप्रतिपादितज्ञान-

---

१. BS[1] सर्ग
२. All except BS[2] क्षति
३. BS[1] omits भोगान्
४. IO adds गतं
५. BS[2] ददाम्यहं
६. BS[1] पराः

निष्ठतया स्वकर्माण्यजहतः[१] समन्तात्सेवन्ते[२]। कीदृशाः सन्तः? अनन्या अविद्यमानमन्यन्मद्व्यतिरिक्तं वस्तु येषां ते तथाविधाः[३], मन्मयमेव सर्वमिदमनुभवन्त इत्यर्थः। तेषां तादृशानां नित्याभियुक्तानां यथोक्तज्ञानैकतानतया सततोद्युक्तानां सर्वास्ववस्थासु यथोक्तमत्स्वरूपस्मरणैकपरायणानामित्यर्थः। अहं परमेश्वरो योगक्षेमं वहामि। योगं प्रागनासादितेन मत्स्वरूपसंवेदनात्मकेन फलेन सम्बन्धं क्षेमं[४]मासादितस्य पुनरपरिलोपलक्षणं धारयामि। ये नित्यं म[५]न्मयाः तेषां कुतो योगक्षेम[६]क्षतिरित्यर्थः। एवं यथोक्तोपायनिरपायनिवेशितान्तःकरणतया मत्स्वरूपानुभवरूपां परां काष्ठामधिरूढा भक्तिरेव विज्ञानमिति तात्पर्यम्॥

ननु विश्व[७]तोमुखस्त्वमेवैकं तत्त्वमिति देवतान्तरयाजिनोऽप्यनन्या एव; तत्कथमुक्तमनन्या ये मामुपासते तेषां योगक्षेमं वहामीति? अत्राह—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥ २४॥

सत्यम् येऽपि जना अन्यदेवताभक्ताः पर[८]स्परभिन्नस्वरूपांस्तां[९]स्तान् सूर्येन्द्रादिप्रमुखा[१०]न् देवविशेषान् भक्ताः तेऽपि परमार्थतो मद्व्यतिरिक्तद्वितीयवस्त्व-

१. BN[1] स्वकर्माण्याजनितः
२. All except BS[2] सेवते
३. BS[2] adds चिन्तयन्तः
४. IO and BN[1] ज्ञेयमासा-
५. IO मन्माया
६. BS[2] omits क्षेम
७. IO विश्वमयस्त्वमेव
८. BN[1] परस्परं
९. BS[2] तत्तत्सूर्येन्द्र
BN[1] तांस्तान् सूर्येन्द्रादि
१०. BS[2] मुखदेवविशेषभक्तादि

भावान्मामेव श्रद्धया तत्तद्भिन्नफलसंभावनया यजन्ते पूजयन्ति; किंत्वविधिपूर्वकम्; मद्यजने एवंविधो[1] विधिरुक्तः, वक्ष्यते च। यथोक्तज्ञाननिष्ठतया सर्वेषु यष्टव्येषु देवताविशेषेषु तासु तासु यागक्रियासु यष्टरि च स्वात्मन्यद्वयचिन्मात्रलक्षणमत्स्वरूपानुभवः; स[2] च तेषां ज्ञानशून्यकेवलक्रियामात्रशरणानां विधिर्न संभवति। तस्मादविधिपूर्वकं[3] मां यजन्त इत्युक्तम्॥

एतदेव प्रकटयितुमाह—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते॥ २५॥

सर्वयज्ञानां नानाभेदानां यागानामहमेव भोक्ता, एक एव परमेश्वरः फलस्य स्वीकर्ता। तथा प्रभुः अनुष्ठानक्रियाधिष्ठितः सर्वे यज्ञा अहमेवेति; न पुनस्तथाविधं मां तत्त्वेन परमार्थेन यथोक्तेनाभिजानन्ति, एकत्वेन न प्रतिपद्यन्ते। अतो हेतोः ते[4] तादृशा अनुष्ठातारः च्यवन्ति, मत्तो वियुज्यन्ते, नानात्वेन सर्वं पश्यन्तीत्यर्थः॥

ततश्च—

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्॥ २६॥

---

१. BN[1] एवंविधविधिः
२. BS[1] सर्वं तेषां
३. BN[1] पूर्वं
४. IO omits ते

देवेभ्यः देवार्थं[1] व्रतं नियमो येषां ते शक्रादिदेवाराधका देवव्रताः, तत्सपर्यासिद्धौ देवानेव यान्ति, तल्लोकभाजो भवन्तीत्यर्थः। एवं पितृव्रताः पितॄन् यान्ति। तथा भूतेभ्यो यक्षरक्षः[2]पिशाचादिभ्यः ; तदर्थमिज्या यागो येषां ते तादृशाः तान्येव पूर्ववद्यान्ति। देवपितृयाजिनः सात्त्विकाः, भूतयाजिनस्तु राजसाश्च तामसाश्च। यदुक्तम्—

"यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतपिशाचांश्च यजन्ते तामसा जनाः॥" इति।

ये तु निस्त्रैगुण्याः ते मद्याजिनः मामेव त्रैगुण्यातीतस्वरूपं यष्टुं शीलं येषां ते तथाविधमेव मत्स्वरूपं परं[3] ब्रह्म यान्ति समापद्यन्ते[4]॥

स च मद्यागो[5] देवव्रतादियागवत्तत्तन्नानाद्रव्यसम्भारसाधनो नैवेत्याह—

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ २७॥**

भक्तिः अद्वयचिन्मात्रस्वरूपब्रह्मतत्त्वभावनयात्मन एव तस्य तस्य वा नानादेवताविशेषस्योपासनं तया साधनभूतया यस्तत्त्ववित् पत्राद्यपि यत्किंचिन्मह्यं प्रयच्छति, तत्तस्य प्रयतात्मनः तथाविधाद्वयविज्ञानसमाहितान्तःकरणस्य तादृश-

---

१. IO देवार्थे
BN[1] देवतार्थं
२. BS[1] रक्षाः पि-
३. All except IO पर
४. BS[2] notes as an alternative reading प्रतिपद्यन्ते
५. BS[1] यागे
६. IO omits एव

भक्त्युपहृतमश्नामि उपभुञ्जे। यादृशभावनाविशेषणोपहृतं तथैव तत्स्वीकरोमीत्यर्थः ॥

यत एवम्, ततः—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २८ ॥

यत्करोषि तत्तत्फलार्थितया यत्कर्मानुतिष्ठसि, यच्चाश्नासि, तत्तत्कर्मफलभूतमुपभुंङ्क्षे[1] तत्सर्वं मदर्पणं कुरु। मयि ब्रह्मस्वरूपे[2]ऽर्पणं मदात्मकप्रतिपत्त्या निवेदनं यस्य तत्तादृशं कुरु संपादय। तच्च कार्यं ज्ञानरहितानां नानाफलहेतुत्वेन व्यवस्थितं विवृणोति। यज्जुहोषि तेषु तेषु यज्ञेषु तत्तद्देवतातर्पणार्थं यदग्नौ हवनक्रियया क्षिपसि[3], यच्चान्तर्वेद्यादौ ददासि, पात्रेभ्यः प्रयच्छसि, यत्तपोनियमविशेषं चरसि, तत्सर्वं मदर्पणं कुरु, यज्ञदानतपोलक्षणासु क्रियास्ववश्यकर्तव्यासु तत्तत्फलाभिकाङ्क्षाकार्पण्य[4]परिहारेण मत्स्वरूपानुभवमेवैकं फलमवलम्बस्वेत्यर्थः ॥

अस्या भावनायाः फलमाह—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २९ ॥

---

१. BS[2] notes as an alternative reading उपयुङ्क्षे.
२. All except BN[1] स्वरूपो
३. BS[1] क्षिपामि
४. BN[1] कर्मण्यपरि

एवमनेन प्रकारेण यज्ञादिकाः स्वाः क्रिया अनुतिष्ठन्नपि, शुभाशुभफलैः शुभैः सुखात्मकैः, अशुभैर्दुःखात्मकैः क्रियाणां फलैर्मोक्ष्यसे त्यक्ष्यसे; तानि ते बन्धनाय न कल्पयिष्यन्त इत्यर्थः। कीदृशैः कर्मबन्धनैः? कर्माणि ज्ञानशून्यानि बन्धनं नियमहेतुर्येषां तथाविधैः। कर्मनिबन्धनानि हि फलानि ज्ञानशून्यं बध्नन्ति, न यथोक्तज्ञानसम्पन्नम्। अतस्त्वं संन्यासयोगेन फलासंकल्पसमाधिना युक्तात्मा सम्बद्धस्वभावः, अत एव मुक्तः सर्वबन्धनेभ्यो विनिष्क्रान्तो मामेकं परमकारणमुपैष्यसि, अहमेव सम्पत्स्यस इत्यर्थः॥

ननु केषांचिद्यज्ञादिक्रियाभिरप्युपसेवमानानां बन्धहेतुर्भवान्, अन्येषां तु पत्राद्युपहरतां मोक्षहेतुः—इति किं तवापि रागद्वेषानुषङ्ग इत्यत्राह—

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्॥ ३०॥**

सर्वभूतेषु[1] चतुर्दशविधेन प्रपञ्चेन प्रसृतेषु परमार्थतः तत्त्वैकत्त्वात्[2] परतत्त्वात्मकोऽहम्; समो निर्विशेषवृत्तिः; अतो व्यतिरिक्तत्वाभावान्न मे कश्चित् द्वेष्यः द्वेष्यदोषहेतुः[3]। नापि प्रियः रागदोषहेतुः संभवति। एतौ भेददर्शिनामेवानुषक्तौ। ततश्च ये पुनर्महात्मानो मदिच्छयैव विद्याशक्त्यनुग्रहादेकतत्त्वदर्शिनः सन्तो मां यथोक्तस्वरूपं यथोक्तया भक्त्या भजन्ते सेवन्ते, यथोक्तया भावनयोपासते,

१. IO भूते
२. IO and BS[2] तत्त्वस्यैकत्वात्म
३. IO द्वेषदोष

ते मयि तिष्ठन्ति; तेषु चाहमभेद एव[1] तिष्ठामि, मत्तस्तेषां दुर्भेदभेदप्रत्यय-[2] सेतुविदलनात् ब्रह्मामृतसागरसमरसीभूतत्वात्तद्भेदस्य[3] ॥

एवं यथोक्तया भावनया भगवद्भक्तेः स्तुतिमाह—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो[4] हि सः ॥ ३१ ॥

यद्यपि युष्मत्प्रतिपादितदृष्ट्या युद्धादिघोरकर्मानुष्ठानात् सुतरां दुष्ट-चेष्टितः सन् अनन्यभाक् मदेकालम्बनः मां भजते उपास्ते स तादृशः साधुः सदाचार एव मन्तव्यो बोद्धव्यः । यतः सम्यगविपर्यस्तज्ञानत्वाद्यभावात् स तादृग्भक्तो व्यवसितो गृहीतव्यवसायः । एतावदेव सदाचारदुराचारयोर्लक्षणम् । यः अनन्यतया मद्भक्तः स सदाचारः तद्व्यतिरिक्तस्तु दुराचार इति । एतावदत्र तात्पर्यम्—अपर्यनुयोज्येच्छस्य[5] हि भगवतः शक्तिरवतीर्णा क्वचिदप्यनुग्राह्ये विनष्टं च निर्मलम्[6] अखिलं दुराचारत्वम् ॥

एतदेव प्रकटयितुमाह—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानेऽहं न मद्भक्तः प्रणश्यति ॥ ३२ ॥

---

१. BN[1] omits एव
२. IO दुर्बोधभेद
३. BN[1] तद्बोधस्य
BS[2] notes this as an alternative reading:
४. BS[1] and BN[1] व्यवहितः
५. IO अपर्यन्तयोज्य
६. BN[1] निर्मूल

क्षिप्रमनुग्रहलक्षणसमकालमेव धर्मात्मा भवति; प्रतिपादितज्ञानयोगलक्षणः परमो धर्मः आत्मा स्वभावं[1] यस्य स तादृशः सम्पद्यते। तथा संपन्नमात्रः शश्वन्नित्यकालं शान्तिं यथाप्रतिपादितात्मानात्मादिज्ञेयवस्तुज्ञानभावलक्षणक्षोभक्षयरूपं प्रशमं यथोक्ततत्त्वसमापत्तिरूपं नितरां गच्छति प्राप्नोति। नियच्छतीति पाठे आत्मनि तां नियच्छति नियतामव्यभिचारिणीं करोति। ततश्च हेतोस्ते तुभ्यं प्रतिज्ञां करोमि ॥

यथा मद्भक्तो यथोक्तेन रूपेण मदुपासको न प्रणश्यति मत्स्वरूपव्यतिरेकप्रतिपत्तिलक्षणं[3] नाशं न प्राप्नोति, अत एवाह—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।

पापाः[4] पापकर्मविपाकजा[5] योनिरुत्पत्तिकारणं येषां ते स्त्रीशूद्रवैश्यादयः येऽपि केचन भवेयुः, ते मां व्यपाश्रित्य यथोक्तमदेकशरणा भूत्वा परामनुत्तरां गतिमपुनरावृत्तिपदवीमाप्नुवन्ति। न चैतदतिशयोक्तिमात्रमेवेति व्याख्यातमेव प्राक्। किं पुनः[6] ये पुण्याः पुण्यकर्माणः पुण्यकर्मविपाकाल्लब्धोत्कृष्टयोनयो ब्राह्मणा राजर्षयश्च राजत्वे सत्यपवर्गभागित्वान्मुख्या ऋषयो द्रष्टारो भक्ताः सन्तः

---

१. IO and BS² स्वरूपं
२. BS¹ and IO omit अनात्म
३. IO लक्षण
४. BN¹ adds पापकर्मजाः
५. All except BS² कर्मजविपाकजाः
६. BS¹ adds किमत्र वाच्यं

परां गतिं [1]यास्यन्ति, तदेतेन सर्वलोकसाधारणत्वमात्मज्ञानस्य भगवता प्रतिपादितम् ॥

यत एवमुत्कृष्टफला मद्भक्तिः, ततः—

**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥**

इमं लोकं कर्मभूमिलक्षणं भुवनं प्राप्य अत्र जन्म लब्ध्वेत्यर्थः । कीदृशं लोकम् ? अनित्यम् । शरीरस्य भोगसाधनस्य भोगानां चान्तवत्त्वादस्थिरम् असुखं च । [2]यद्यप्यत्र किंचित्सुखभ्रान्त्या गृह्यते, तदपि विवेकबुद्ध्या विचार्यमाणं दुःखमेव । यदुक्तम्—परिणाम[3]तापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुःखं विवेकिनः । यथा जलधिमध्यपतितस्य रत्नातिशयलाभः कथंचित्संभाव्यते, तथा दुःखैक-हेतुकर्मभूमिपतितस्य मद्भक्तिलाभः संभाव्यत एवास्मिन् लोक इत्यर्थः ॥

"गुणवृत्तिविरोधाच्च सर्वं दुःखं विवेकिनः" इत्येवंरूपमपीदं लोकं लब्ध्वा मामनुत्तरसुखहेतुं भजस्वे[4]त्याह—

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥**

एवंविधः सन् मद्भक्तो भव । कीदृशः ? मन्मना मद्याजी ; तथा मन्न-मस्कारपरः । एतेन विशेषणत्रयेण चित्तकायवचनक्रियाणां भगवत्स्वरूपलक्षणैक-

---

१. BN[1] adds न
२. BN[1] यदप्यत्र
३. BN[1] and BS[1] परिणामतारूप
४. BN[1] adds इत्यर्थः

तत्त्वविशेषणात्मको मुख्यो भक्तिप्रकारः प्रतिपादितः। मां नमस्कुरु इत्यनेन हि मन्त्रजपनमस्कारस्तुत्यादिरूपा भगवत्प्रणतिरुक्ता। एवमनेन प्रकारेणात्मानमन्तः-करणं युक्त्वा समाधाय मत्परायणो मदेकालम्बनः संवृत्तः सन् मामेवैष्यसि, मदभेदसमापन्नो भविष्यसीत्योम्॥

व्योम्नि ज्योतिर्गण इव घनध्वान्तशान्तिप्रसन्ने
सूर्येन्द्वादिद्विगुणविकसन्निर्मलस्वप्रसादः।
यत्रार्थौघः स्फुरति सुतरां ज्ञानविज्ञानपूर्वः
तत्राध्याये तरतु नवमे राजहंसीव गीर्वः॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
नवमोऽध्यायः॥



१. BS² adds प्रतिपादितः

# ॥ अथ दशमोऽध्यायः ॥

---

एवं नवमाध्यायपर्यन्तग्रन्थग्रथितप्रसन्नगम्भीरभणतिभेदाभिहितज्ञानविज्ञानादिपरमरहस्यरूपार्थश्रव[1]णादुपजातपरितोषविशेषतामत्यन्तदुरवधारपरमार्थत्वादस्यार्थस्यासन्तुष्टहृदयतां चार्जुनस्योपलक्ष्य प्रसादातिशयमनुकम्पां चोपगच्छन्ने[2]कादशे यथोक्त[3]परतत्त्वसाक्षात्कारकारणभूतनिरतिशयानुग्रहचिकीर्षाविष्कारिवाक्यम्

भगवानुवाच—

> भूय एव महाबाहो शृणु मे परमं वचः ।
> य[4]त्तेहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

यद्यपि प्रायेण निरवशेषमुपदेश्यं वस्तु वितत्य प्रतिपादितम्, तथापि तदतिसूक्ष्मत्वात् परमप्रकृष्टप्रज्ञानामपि हृदये झगिति प्रतिष्ठां न लभते—इति भूयो बहुतरमेव पूर्वोक्तं तत् मदीयं परममुत्तमार्थप्रतिपादकत्वात्प्रकृष्टं व[5]चनमिदमाकर्णय। बहुतरवचनकथने कारणमाह—यद्वचनं प्रीयमाणाय परितोषं भजते हितकाम्यया आत्यन्तिकानुकूल्यकरणेच्छया तुभ्यमि[6]दानीमहं कथयिष्यामि। किमनेनोक्तं भवति ? यावत्प्रकारान्तरदुर्हरमोह[7]विषादहारिणा प्रतिपादितार्थपरमार्था-

---

१. IO श्रवणादुपरमार्थत्वादस्य

२. IO एकदेश
   $BN^1$ and $BS^1$ अनेकदेश

३. $BN^1$ omits यथोक्त

४. $BS^1$ यत्रेदं

२. $BS^2$ adds इदं

६. $BS^2$ अहमिदानीं

७. $BN^1$ मोहविषविषाद

पूर्वपीयू[1]षपरमलेशस्प[2]र्शनेनाह्लादितं हृदयं तावत्। कु[3]तः प्रीयमाणत्वम्? [4]अतथा-विधस्य हि पुनरुक्तकथनादुद्वेग एव स्यात्; अतः प्रीयमाणत्वेनाविष्कृतशिष्य-गुणविशेषाय तद्धितचिकीर्षुणा दयाविष्टहृदयेन देशिकोत्तमेन विचित्रोक्तिप्रकारै-स्तावदुपदेष्टव्यम्, यावदसौ सुगृहीतार्थतया निराकाङ्क्षतामापद्यत इति भूयो-वचनकथनेन भवता नोद्विजनीयमिति भवतोऽभिप्रेतम्। अथवा–

" निद्रां मोहमयीं हरत्[5]सुमहसैवान्तः प्रबोधश्रियं
तन्वत्स्वर्थिषु वाञ्छतार्थविषयावन्ध्योद्यमाधायिषु।
सूर्यांशुष्विव पौनरुक्त्यजनितोद्वेगत्वमापत्स्यते
तेष्वेवाभिनवीभवत्सु भवगद्वाक्येषु कश्चेतनः॥"

इह मत्स्वरूपविज्ञानलक्षण एवार्थ उक्तो वक्ष्यते च। तच्च मत्स्वरूपं गुह्यतमत्वान्नाल्पेन प्रयत्नेन प्रतिपत्तव्यं प्रतिपाद्यं च। अतो बहुतरवचनाकर्णने अवहितो भव॥

यतः—

**न मे विदुः सुरगणाः प्रभवं न महर्षयः।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः॥ २॥**

मम परमार्थत एकस्यैव सनातनस्य तत्त्वस्य प्रभवम् उत्पादम्। प्रभावमिति वा पाठे माहात्म्यम्; सुरगणा ब्रह्मेन्द्रसूर्यादयो देवसमूहा न विदुर्न जानते। महर्षयो

---

१. BS[1] पीयूषरसलेश
२. BS[2] स्पर्शेन
३. IO कृतः
४. BS[2] अतस्तथा
५. BS[1] दरत्तु

भृग्वादयोऽपि तथैव ; ते हि मन्मायाशक्त्युद्भावितत्तत्स्वरूप[1]शक्त्यादिभेदाः तं तं स्वाधिकारमनुतिष्ठन्तः प्रतिकल्पं सर्गप्रलयाद्यनित्यभावसम्बन्धावस्थाजुषः । अहं तु नित्यत्वात्तेषामादिः प्रथमः । एवं प्रकर्षगत्या कल्पादिदीर्घ[2]कालस्थायिनोऽपि देवादयो मदीयपरमसत्तापेक्षया अन्तवन्तः ; ते च मदीयमायामोहिताः सन्तः स्वाधिकारनिवर्तनमात्रपर्याप्तसामर्थ्यास्तत्त्वतो मां संप्रति न विदन्ति ॥

ततः—

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

यः कश्चिद्विरलो महात्मा मदनुग्रहादेव प्रत्युदितसम्यग्ज्ञानशक्तिः ; अजं नित्यत्वाज्जन्मरहितम्, अत एवानादिम् अविद्यमानपूर्वपुरुषान्तरम्; तथा लोकमहेश्वरम् लोकानां ब्रह्मादीनाम् ; लोक्यन्ते दृश्यन्ते वेद्यन्त इति लोकशब्दवाच्यानां जनानां महान्तं सर्गस्थितिप्रलयाद्यवस्थाविधानस्वतन्त्रशक्तित्वादुत्तमं स्वामिनम् ; तेषामपि हि[3] ब्रह्मादीनां स्वविषयं यावन्मात्रमैश्वर्यं तत्र कारणमित्यर्थः ; एवंविधं मां यो[4] वेत्ति आत्मत्वेन प्रतिजानीते, स मर्त्येषु मायाक्रोडीकृतत्वान्मरणधर्मसम्बन्धे[5]षु देवादिषु सर्वजन्तुषु मध्ये असंमूढः सत्यात्मनि मय्येव प्ररूढात्मप्रत्ययत्वाद्विपर्ययलक्षणः संमोह अज्ञानं तस्य न विद्यत इत्यर्थः । अत एव सर्वैर्निरवशेषैः मनोवाक्कायनिर्वर्त्यैः पापैर्नानायोन्यन्तरविशेषहेतुभिः किल्बिषैः प्रमुच्यते परि-

---

१. BN[1] स्वरूपातिशक्त्यादि
२. All except BN[1] दीक्षाकाल
३. BS[1] omits हि
४. All except BS[1] omit यः
५. BN[1] संबद्धेषु

वर्ज्यते। देहाद्यनित्यवस्तुव्यवस्थिताहङ्कारमात्रं हि सर्वपापानामुत्पत्तिकारणम्। सम्यग्ज्ञानवतस्तु[1] तन्नास्तीति स एवासम्मूढ इत्युक्तम्॥

सर्वभूतानां सर्वावस्थाहेतुत्वे लोकमहेश्वरत्वं यत् व्याख्यातं तदेव विवृण्वन्नाह—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च॥ ४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥ ५॥

इहाहमेवैकं तत्त्वं परमार्थसदिति बहुशः प्रतिपादितमेवं[2]। अयं च देवासुरभेदेन द्विप्रकारः क्षेत्रज्ञवर्गो मन्मायथैव[3] इत्थमवभास्यत इत्यपि प्रतिपादितमेव। तदस्य क्षेत्रज्ञवर्गस्यापि तदहङ्कारावलम्बनेन[4] प्रसरन्तो बुद्ध्यादयः पृथग्विधाः नानारूपा भावा मत्त एवैकस्मात्कारणाद्भवन्ति उत्पद्यन्ते। एते विविधा भावभेदाः प्रबुद्धैस्तत्त्वज्ञानदृशा परामृष्यमाणाः परस्मान्मत्स्वरूपान्मनागपि न व्यतिरिच्यन्ते। ततो मायामात्रमेवैतद्भेदेनावभासमानता[5] भावानाम्। सा च मच्छक्तिरेवेति मत्त एव ते[6] भावा भवन्तीत्युक्तम्। के ते भावाः? बुद्धिर्मुख्यमन्तःकरणम्, यया बुद्ध्यते निर्विकल्पतया निश्चीयते। बोद्धव्यं वस्तु; ज्ञानं तु

१. BS[1] and BN[1] ज्ञानतस्तु
२. BN[1] एवं
३. BS[1] माययैवोक्तमवभासित एवं तदस्य
IO माययाथा
४. BS[1] तदा
५. IO एवं तद्भेदेन
६. BS[2] एते

मनःसंज्ञोऽन्तःकरणविशेषो येन वोद्धव्यं विकल्प्यते । एतौ सर्वप्रमातृसाधारणौ बुद्धिज्ञानसंज्ञौ भावौ। असंमोहः परमार्थनिष्ठं ज्ञानम् । ततोऽन्यविषयं सर्वमेव ज्ञानं विपर्ययादिदोषसम्बन्धात्संमोहात्मकम् । स चासंमोहलक्षणो भावो मुमुक्षूणामेव संभवति । क्षमा वाचा मनसा कर्मणा वा निर्विकारत्वम्, सर्वात्मना शक्तिमत्त्वेऽपि परापराधसहिष्णुत्वम् । एषोऽपि यत्याद्यवस्थायां मुमुक्षूणामपवर्गोपायभूतो धर्मः; अवस्थान्तरे हि ज्ञाननिष्ठतया स्वकर्मापरित्यागस्य मोक्षसाधनत्वादक्षमापि शास्त्रचोदिता सती मोक्षसाधनं भवत्येव, सत्यम् । आत्यन्तिकभूतहितैपर्यवसायि यथादृष्टार्थकथनम् । एतत् स्वर्गापवर्गफलार्थिनां च साधारणम् । दमः उत्पथप्रवृत्तानां सर्वेन्द्रियाश्वानां वैराग्यभावनादिकैशाभिघातात्ततः प्रतिषेधनम्। शमः सिद्ध्यसिद्ध्योर्निर्विकारान्तःकरणता च । तौ योगिविषयौ[3] सुखं तत्तदिष्टवस्तुप्राप्तेरभिकाङ्क्षानिवृत्तौ सन्तुष्टचित्तता; दुःखं तैद्विपरीतता; भावाभावौ जन्ममरणे; भयं दुःखहेतोः दुँष्करप्रतीकारात् त्रासः; अभयं तदभावो विश्वस्तचित्तता । एते सुखादयः सर्वप्राणिसाधारणा भावाः। अहिंसा सर्वभूताभिद्रोहात् सर्वात्मना विरतिः; सा च यत्याद्यवस्थायामेव मोक्षसाधनम्, हिंसाया अंक्षमावदवस्थान्तरे मोक्षसाधनत्वात्; यतः शास्त्रचोदितं यज्ञे वधादिसंग्रामे रिपुव्यापादनं दुष्टनिग्रहश्च हिंसात्मकत्वेऽपि तथाविधस्वकर्मनिष्ठानां सतां मोक्षसाधनम् । समता "सुहृन्मित्रार्युदासीन" इत्यादिना प्राक्प्रतिपादितस्वरूपैकतत्त्वँदर्शिता मुमुक्षूणामेव धर्मः;

---

१. IO omits हित
२. BS[1] कथाभि
IO कषाभिघातत्वात्
३. BN[1] योग
४. BS[2] तत्तद्विपरीत
५. BN[1] दुष्करं
६. IO अक्षमावस्थान्तरे
७. BN[1] omits तत्त्व

तुष्टिः सर्वभूतविषया [1]प्रीतचित्तता, मुमुक्षुविषयैव सुखस्यैव सर्वसाधारण्येन प्रतिपादितत्वात्; तपो वाक्चित्तकायनिर्वर्त्यो नियमविशेषः; दानमिष्टापूर्तविभागेन स्वद्रव्यस्य परद्रव्यत्वापादनम्। ज्ञानादीनां तु [2]स्वत्वनिवृत्तिं विना परत्र संक्रमणं दानम्। एतत्स्वर्गापवर्गफलार्थिनोः साधारणम्। यशः शास्त्रचोदितानां शुभानां कर्मणां सात्त्विकया बुद्ध्या समाचरणात् सर्वजनविषया प्रशंसा। अयशः तद्विपरीताचरणादप्रशंसेति ॥

एवंविधानां धर्माणामाश्रयभूता धर्मिण आ प्रजापतिभ्यो मत्त एव [3]भवन्तीत्याह—

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

पूर्वे कल्पारम्भभाविस्वायम्भुवमन्वन्तररूपपूर्वकालभावित्वात्प्रथमे सप्त महर्षयो मरीच्यादयो ये पुराणप्रजापतयः प्रोक्ताः। केचित्तु बुद्धिमनसी महाभूतपञ्चकं चेति सप्त महर्षीन् कथयन्ति। प्रजासर्गहेतुत्वात् तेऽपि प्रजापतय [4]इति चाहुः। चत्वारो मनवः [5]ब्रह्मसावर्णो भद्रसावर्णो धर्मसावर्णो दक्षसावर्ण इति दक्षस्य दुहितुरुत्पन्नाः प्रजासर्गे प्रतिवर्णं चातुर्वर्ण्यस्य प्रथमे पुरुषाः येषां ब्राह्मणादिवर्णसर्गहेतुत्वात् मनुत्वं प्रजापतित्वं च। एते[6] मत्तः परमकारणादेव भाव

---

१. IO and BS[1] प्रतिचित्तता
२. All except BN[1] स्वत्वानिवृत्ति
३. BN[1] भवति
४. IO adds प्रोक्ताः
५. All except BS[1] omit ब्रह्म... उत्पन्नाः
६. IO adds मद्भावाः

उत्पत्तिर्येषां ते तथाविधाः। कीदृशाः सन्तो मद्भावा मानसा जाताः? सङ्कल्पजा इत्यर्थः। एषां प्रजापतीनां सतां सम्बन्धिन्यो लोके भुवनेष्विमाः प्रजाः ये प्रजासर्गकर्तारः कल्पारम्भे प्रजापतयः श्रूयन्ते, ते[1] मदिच्छामात्रोद्भावितस्रष्टृभावा इत्यर्थः॥

एवंविधस्वै[2]श्वर्य[3]ज्ञानफलमाह—

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः॥ ७॥**

एतां यथोक्तां विभूतिं जगत्कर्तृत्वादिरूपमैश्वर्यम्; तथा योगं नानाभावप्रपञ्चावभासनरूपकर्[3]मत्वादिसम्बन्धोऽप्यद्वयचिन्मात्रस्वभावाप्रच्युतिलक्षणमत्यद्भुतमनन्यसाधारणं समाधिं मम यस्तत्त्वतः परमार्थतो वेत्ति जानाति, स मदीयेनैवाविकम्पेन सर्वदा निरुपप्लवेन योगेन समाधिना युज्यते सम्बध्यते। नात्रार्थे कश्चित्सन्देहः संभवति, यतो मदनुग्रहाविर्भूतसम्यग्ज्ञानतया ममैवैकस्य तत्त्वस्य जगल्लक्षणं विभवं सम्यग्यो विभावयति स मत्स्वरूपसमाविष्टत्वान्मदीयेन समाधिना सम्बध्यत इति कोऽत्र संशयस्यावकाशः॥

यत एवंविधैः[4]—

**अ[5]हं सर्वस्य प्रभवः इ[6]तः सर्वं प्रवर्तते।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ ८॥**

---

१. BN[1] and BS[2] omit ते
२. IO स्वैश्वर
३. BN[1] and BS[2] कर्तृत्वादि
४. IO विधिः
५. BN[1] अहं This is noted as an alternative reading in BS[2].
६. BS[2] notes मत्तः as an alternative reading.

बुधा मां भजन्ते मदिच्छयैव[1] देवप्रकृत्याश्रयसर्गभावत्वान्मदनुग्रह[2]पात्रभूततया समाविर्भूतबोधाः सन्तो मुख्यविपश्चितो मां यथोक्तरूपमुपासते। नान्ये [3]आसुरसर्गभावास्ततो मत्समाधिना युज्यते। ते च किं कृत्वा समुपासते? इति मत्वा एवं मत्स्वरूपं निश्चित्य। कथम्? [4]अयं परमेश्वरः परमात्मा सर्वस्य भावजातस्य प्रभव उत्पत्तिकारणम्। यस्माद्बहुशः प्रतिपादितोपपत्तिवशादेतद्व्यतिरिक्तकारणान्तरभावादित एतस्मादेव हेतोः सर्वमिदं प्रवर्तते प्रसरतीति। इदमत्र तात्पर्यम्—द्विविधं ज्ञानं निर्विकल्पपरमार्थप्रतिपादकशास्त्रोपदेशदृढप्रतिपत्तिजनकमेकम्। तद्वशाच्च क्रमेण तत्त्वसाक्षात्कारप्रभवमपरम्। तद्वन्तो बुधा अपि द्विविधास्ततो यथोक्तमद्विभूतियोगज्ञा मत्समाधिना युज्यन्ते; नात्र संशय इत्युक्तम्॥

ये तु मां भजन्ते तेषामेवंविधं चेष्टितमित्याह—

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥ ९॥**

[5]मच्चित्ता मयि चित्तमन्तःकरणमेषां ते तथाविधाः मदेकनिष्ठज्ञानक्रियाप्रसराः सन्तोऽन्योन्यं बोधयन्तः [6]स्वानुभवसंवादेन ज्ञापयन्तः; तथा कथयन्तो

---

१. All except BS[2] मदिच्छैव
२. IO मात्र
३. BN[1] and BS[1] त्वासुर
४. BN[1] अहं. This is an alternative reading in BS[2].
५. IO omits मच्चित्ताः
६. IO omits स्वानु...पयन्तः

यथाबोधमागमवचनैः कीर्तयन्तस्तुष्यन्ति, संवादात्स्वयं प्रीयन्ते, परस्परं रमयन्ति [१]रतिमनुभवन्ति ॥

एवंविधानां च—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

तेषां [२]प्रबुद्धानां बुधत्वादेव प्रीतिपूर्वकं तत्त्वज्ञानजनितपरितोषपुरस्सरं सेवमानानाम् ; अत एव नित्योदितानां बुद्धियोगं प्रज्ञासम्बन्धं वित[३]रामि, येन हेतुभूतेन बुधा मामुप[४]यान्ति, मदीयं योगं समापद्यन्त इति भक्तानां [५]स्वयोगप्राप्तावसंशयस्य कारणं प्रतिपादितम् । यतस्तेषामेव दै[६]वसर्गभाजामनुकम्पार्थं संसारक्लेशविश्लेषणेन कृपां कर्तुमहमज्ञानजं मोहसमुद्भूतं तमः [७]अप्रतिपत्तिमयं तिमिरं नाशयामि प्रध्वंसयामि । केन? भास्वता, परसंविदात्मकदीप्तियुक्तेन ज्ञानदीपेन यथोक्तबोधप्रद्योतकेन । कीदृशः सन्? आत्मभावस्थः, आत्मनः संवेदितुर्भाव आत्मत्वम्, तेन स्थितः । यद्यपि सर्वगत एक एवाहमात्मा तथापि

---

१. All except BS[2] गतिमनु
२. BN[1] and BS[2] बुधानां
३. IO विदधामि
४. IO समुपयान्ति
५. BS[1] स्वप्रयोग
६. IO and BS[1] देवसर्ग
७. All except BS[2] तत्त्वप्रतिपत्तिं

स्वेच्छया यानेवानुगृह्णामि तेषामेवाहमात्मत्वेन स्थितः; अन्येषां तु[1] देहादावात्मप्रतिपत्तिरित्यर्थः। एवं परमेश्वरोऽहं यानेवानुगृह्णामि, त एव यथोक्तेन प्रकारेण मां भजन्ते। मद्विभूतियोगयोस्तत्त्वविदः सन्तो मदीयमेव योगं समापद्यन्ते, मदभेदलक्षणं मोक्षमासादयन्तीत्यर्थः। यदा[2]हुर्ब्रह्मविदः—

"नायमात्मा प्रवचनेन लभ्यो न मेधया नो बहुना श्रु[3]तेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणीते[4] तनुं स्वाम्॥" इति।

अथ भगवद्वचनात् विशेषितश्रद्धादिगुणतया भगवन्मुखादेवाधिगतं भगवत्स्वरूपमनुवदन् तद्विभूतिविशेषजिज्ञासार्थं अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥ १२॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥ १३॥

परं निरुत्तरं परमा[5]त्मलक्षणं निरतिशयबृहत्वादियोगितत्त्वं भवान् भगवानेव परमार्थतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्मायावभासितस्य प्रकृत्यादेर्वेद्यस्यापि स्थूलस्य ब्रह्मशब्देन व्यवहारात्परत्वेन ब्रह्म विशेषितम्। तथा[6] च वक्ष्यति, उक्तं च—"तासां

---

१. BN[1] omits तु
२. BS[1] तदाहुः
३. IO and BS[1] श्रितेन
४. BS[2] विवृणीत
५. BS[1] परमार्थ
६. BN[1] omits च

ब्रह्म महद्योनिः" इति। अत्र प्रकृतेर्ब्रह्मशब्देन व्यवहारः। तथा—"शब्दब्रह्मातिवर्तते" इत्यत्र शास्त्रादिशब्दरूपस्यापि सर्गस्य। तथा [1]परसामान्यसंविदात्मकं निरतिशयं धाम ज्योतिर्भवान्, भेदविषयक्षेत्रज्ञसंम्बन्धिसंविदपेक्षया धाम्नोऽपि परत्वेन विशेषणम्। तथा [2]परममनुत्तमं पवित्रं पावनं भवान्, [3]मोहलक्षणमहापातकविनाशहेतुत्वात्। उक्तार्थावगमस्य[4]ागमं भगवद्वचनं च कारणं प्रतिपादयितुमाह—यस्मात्सर्वे ऋषयः परावरद्रष्टारो मुनयः शाश्वतं नित्यं पुरुषं परमात्मानं त्वामाहुः कथयन्ति। कीदृशम्? दिव्यं परमव्योमस्थम्। तथादिं सर्वेषां पूर्वं देवं परप्रकाशात्मतया द्योतनशीलम्। अत एवाजं जन्मरहितम्। विभुं व्यापकम्। न केवलं [5]सर्वर्षयो यावन्नारदासितदेवलाभिधाना महर्षयस्त्वामेवंविधमाहुः। स्वयं च साक्षाद्ब्रवीषि॥

सर्वमेतदृतं मन्ये यन्मे वदसि केशव।
न हि ते भगवन्व्यक्तिं[वन् व्यक्तिं] विदुर्देवा महर्षयः॥ १४॥

स्वयमेवात्मनात्मानं [6]वेत्थ त्वं पुरुषोत्तम।
भूतभावन भूतेश देवदेव जगत्पते॥ १५॥

एतत्सर्वं यथाप्रतिपादित[7]स्वविभूतियोगादिरूपं वस्तु यत्साक्षाद्वदसि तदहं [8]ऋतं सत्यं मन्ये। यद् देवा अपि तव व्यक्तिं पारमार्थिकीं [9]मूर्तिं न विदुः, महर्ष-

---

१. BS[1] परं
२. BN[1] परमनुत्तमं
३. BS[1] भेदलक्षण
४. IO and BS[1] अवगम्यागमं
५. IO महर्षयो
६. BN[1] and BS[1] वेत्तृत्वं
७. All except BN[1] स्वभूति
८. BS[2] omits ऋतं
९. BN[1] omits मूर्तिं

योऽपि तथैव न विदुः। ततो महर्षिभ्यः श्रुते मम प्रत्ययो नासीत्। इदानीं तु भगवद्वचनादत्रार्थे निःसंशया प्रतीतिः। कुतस्त्वां देवा ऋषयश्च न विदुरित्यत्र हेतुमाह—स्वयमेवेत्यादि। जगत्पते विश्वेश्वर; तथा भूतभावन भूतानां चराचराणां सत्त्वानां भावन वेद्यत्वापादनमात्रेणोत्पादक; तथा तेषामेव यथेष्टविनियोगैकस्व[1]-तन्त्रतया ईश स्वामिन्। स्वयमेवात्मनात्मानं स्वरूपं त्वं[2] वेत्थ। वेदकैकस्वभावत्वात्कथं वेद्यपदवीमन्यस्य देवादेरवतरसि। सर्वं हि तवैकस्य सर्वज्ञस्य वेद्यम्; न तु त्वं कस्यचिद्वेद्यः॥

ततो हेतोः—

वक्तुमर्हस्यशेषेण विभूतीरात्मनः शुभाः।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि॥ १६॥

आत्मनो विभूतीः स्वैश्वर्यविजृम्भाः[3] अशेषेण साकल्येन वक्तुमर्हसि कथयितुं प्रसीदेत्यर्थः। कीदृशीर्विभूतीः? शुभाः; सर्वस्य सदसद्विभागेन[4] व्यवस्थितस्य मायावभासितस्य जगत्पदार्थजातस्य शुभाशुभत्वे सति यत्र यत्र सर्गे या या शुभरूपा विभूतिः तां तामादिशेत्यर्थः[5]। कास्ता विभूतयो[6] याभिरिमान् लोकान् सप्त भुवनानि त्वं व्याप्य आक्रम्य वर्तसे? अत्र "दिव्या आत्मविभूतयः" इति प्रथमान्तपाठं केचित्पठन्ति। ते च यत्तच्छब्दाध्याहारेण छान्दसप्रयोगेन वा समर्थयन्ते[7]॥

---

१. IO विधियोगैक
२. BN[1] and BS[1] omit त्वं
३. IO विजृम्भिताः
४. BN[1] विभागे व्यव
५. All except BN[1] आदिशेदित्यर्थः
६. All except BS[1] विभूतीः
७. BS[1] समर्थयन्ति

विभूतिश्रवणे प्रयोजनमाह—

कथं विद्यामहं[विद्यां महा]योगिन् त्वामहं परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

हे भगवन् सर्वज्ञत्वादिगुणैकाश्रय । तथा महायोगिन् अनन्यसाधारण-समाध्येकनिष्ठ । त्वामेवंरूपं कथं केन प्रकारेणाहं परिचिन्तयन्ननुसरन् विद्यां जानीयाम्[1] ? केषु केषु च भावेषु पदार्थेषु मया चिन्त्योऽसि ध्यातव्योऽसि ? अतः प्रागुक्तमैश्वर्यं समाधिं विभूतिं चेत्थं जगदाभासलक्षणां स्वैश्वर्यविजृम्भां[2] विस्तरेण वैतत्येन मह्यं भूयो बहुतरं कथय आदिश, यस्मादेतत्स्वरूपप्रतिपादन-लक्षणममृतं सुधारसं शृण्वतो मे श्रवणाभ्यां पिबतस्तृप्तिः सन्तोषो नास्ति ॥

तथैवमभ्यर्थितो भगवानुवाच—

हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

हन्ताभ्युपगमे । नाहं[3] यथाशुश्रूषिताः शुभाः स्वविभूतीस्तुभ्यं वक्ष्यामि । किंतु प्राधान्येन चेतनाचेतनेषु पदार्थेषु पर्यन्तवर्गविभेदितेषु[4] यत्र यत्र वर्गे या या

---

१. BN[1] and BS[2] विजानीयां
२. IO विजृम्भा
३. All except IO बाढं
४. BN[1] and BS[2] वर्गभेदविभेदि

काचित्प्रधानात्वादतिशायिनी विभूतिस्तां तां वक्ष्यामि, यतो मद्विभूतीनां विस्तरस्य वितॆततत्वस्य अन्तो निष्ठा न विद्यते ॥

तत्रेदानीं नानाविभूतिकथनप्रस्तावनस्यान्तेऽप्यभिधायिष्यमाणां परमार्थ-स्वॆरूपलक्षणां परां विभूतिं तावत्प्रथममेव प्रतिपादयितुमाह—

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**

सर्वेषां चेतनानामाशये हृदि स्थितः कृतप्रतिष्ठः आत्माहं सकलक्षेत्रज्ञ-हृदयाभिव्यक्तसामान्यसंविद्रूप एक एव परमार्थत आत्मा सैव परा विभूतिर्यतस्तॆ-न्निबन्धन एवायं स्वमायाशक्तिप्रकाशितविश्वभावात्मक नानाविभूतिप्रपञ्चः तद्रूपतया चिन्तितोऽहमनन्तविभूतिविस्तरैककारणतया ज्ञातो भवामि ॥

यतः—

**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

सर्वभूतानामादिः प्रागवस्था सर्वरूपा । अन्तश्च नाशावस्था । मध्यं च स्थित्यवस्था । अहमेवैकः, यतो मन्मायावशात् सर्गस्थितिविनाशावस्थायोगित्वेन पर-स्परमवभासमानेषु सर्वभूतेषु नित्यनिर्विशेषैकचिन्मात्रस्वभावोऽहमेव स्थितः । यैस्तु ताद्दश्या महाव्याप्त्याहमेवं चिन्तयितुमशक्यः तैस्तदधिगमाभ्यासाय यत्र यत्र वर्गे यद्यदुत्कृष्टं तत्तन्मद्विभूत्यंशतया चिन्तयद्भिर्निरुत्तरा सर्वव्यापिनी सामान्यसंविदा-

१. IO and BS[2] वितत्वस्य
२. IO स्वत्तालक्षणं
३. BS[1] तस्मिन्निब-
४. IO omits तु
५. IO and BN[1] omit एव
६. BN[1] संविदात्मका

त्मिका परा मदीया विभूतिरधिगन्तुं शक्यते, यां नानाविभूतिप्रतिपादनप्रकरणस्यान्तेऽपि सामान्यरूपजडांशव्यतिरेकिणीम् "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति वक्ष्यति। तदेवं चतुर्दशविधे भूतसर्गप्रपञ्चेऽष्टविधायां देवयोन्यामादित्यादिषु देवादिसर्गेषु षड्विधायां मनुष्यादियोनौ मनुष्यादिसर्गेषु यद्यदुत्कृष्टं तत्तन्मदीयपरमप्रकाशलेशतया भावयता निरुत्तरप्रकर्षासामान्यसंवित्प्रकाशमयी परा मद्विभूतिरधिगन्तव्येत्यध्यायस्य तात्पर्यम्॥

तदिदं मुच्चावचान् स्वविभूत्यंशानहन्तया प्रतिपादयितुमाह—

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी॥ २१॥**

अदित्यपत्यत्वात् सर्वदेवानामादित्यत्वे प्राप्ते रूढ्या द्वादशसङ्ख्यावच्छिन्नपुराणपठितधातृमित्रार्यमादिसंज्ञानां देवविशेषसर्गे आदित्यसंज्ञा प्रसिद्धा। तेषां मध्ये तद्गणान्तःपठितो विष्णुसंज्ञ आदित्योऽहम्, तस्य जगत्स्थितिपालनलक्षणप्रभवातिशययोगान्मद्विभूत्यंशत्वम्। तथा ज्योतिषां दिवि द्योतमानानां सर्वतेजसां मध्ये रविः सूर्योऽहम्। कीदृशोंऽशुमान्? सकलभुवनप्रकाशनादिशक्त्यंशयुक्तत्वे सति प्रकृष्टैरंशुभिर्युक्तः। अत एव तस्य मद्विभूत्यंशत्वम्। तथा मरुतां देवविशेषाणामेकोनपञ्चाशतां मध्ये मरीचिर्नाम मरुदहम्, तस्य तन्मध्ये

---

१. BS[1] omits आदित्य
२. BN[1] omits आदि
३. IO omits परा
४. IO and BS[2] तदिदानीं
५. BS[2] gives एकान्न as an alternative reading.
६. All except BS[2] पञ्चाशतो

प्रजासर्गकर्तृत्वैप्रभावयोगान्मद्विभूत्यंशत्वम् । तथा नक्षत्राणामष्टाविंशतिसङ्ख्यानां मध्ये शशी चन्द्रमा अहम् । शशिनो नक्षत्रनाथत्वात्तन्मध्ये गणनम् । तस्य चाप्यायनहेतुत्वादिसामर्थ्ययोगान्मद्विभूत्यंशत्वम् ॥

तथैव दृष्टयान्यानप्याह—

**वेदानां सामवेदोऽहं देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

वेदानां त्रयाणां चतुर्णां वा प्रसिद्धानां मध्ये सामवेदोऽहम् । तस्य भगवतैव प्राधान्यमाविष्कृतम्, येन प्रणष्टेषु वेदेषु वाजिवदनपुरुषोद्गीथमुच्चार्य स एव पूर्वं प्रत्याहृतः ; अतस्तस्य मद्विभूत्यंशत्वम् । देवानां त्रयस्त्रिंशद्गणभेदेन पुराणपठितानां वासवं इत्युक्तोऽहम् ; तस्य तदीश्वरत्वान्मद्विभूत्यंशत्वम् । इन्द्रियाणामेकादशानां मध्ये मनोऽहम् ; तत्प्रवृत्तिनिवृत्तिहेतुत्वात् प्राधान्ये सति मद्विभूत्यंशत्वम् । द्विविधानि भूतानि चराणि स्थावराणि च ; तेषामुभयेषामपि चेतना प्रधानम्, यतश्चेतनोपलक्षितत्वेन चराणां स्थितिः प्रसिद्धैव । चेतना-निबन्धना च स्थावराणामपि व्यवस्था, तदनुगृहीतानां तेषां सङ्कल्पात् ; अतः सर्वभूतप्राधान्यव्यवस्थिता चेतना भिन्नापि क्षेत्रज्ञशक्तिरहम् ; तस्या मुख्यतया मद्विभूत्यंशत्वम् । केचित्तु चेतनां बुद्धिमाचक्षते । तस्याश्च कार्यकारणभेदेन

१. IO and BS[2] add लक्षण
२. BS[2] adds देवानां
३. BS[2] वासव इन्द्रोऽहम्
 IO omits वासवः...एकादशानां
४. IO omits चेतना

प्रसूतानां जडानामेव भूतानां मध्ये प्राधान्यमाहुः। सा हि तानि सर्वाणि पुरुष-सन्निधिसमुद्भूतचेतनभावाच्चेतयते इति ॥

किंच—

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम्।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

रुद्राणामङ्गारकादिसंज्ञाभिः पुराणप्रसिद्धानामेकादशसङ्ख्यानां मध्ये शङ्करोऽहम्; तन्मध्ये तस्यैश्वर्यातिशयान्मद्विभूत्यंशत्वम्। तथा यक्षाणां गुह्यकानाम्, तथा रक्षसां पिशिताशिनाम्, साहचर्यात्पिशाचानामपि, देवयोनिषु दुष्टानां मध्ये वित्तेशो धनेश्वरोऽहम्; तस्य तद्वर्गाधिकृतत्वान्मद्विभूत्यंशत्वम्। तथा वसूनां धरादिसंज्ञाभिः प्रसिद्धानामष्टानां मध्ये पावकाख्यो वसुः अहम्; तस्य नानाविधयागविध्यधिकरणभूतत्वादिना प्राधान्ये सति मद्विभूत्यंशत्वम्। तथा शिखरिणां पर्वतानां मध्ये मेरुः कनकाचलोऽहम्; तस्य देवालयत्वसूर्योदयहेतुत्वादिना तेषु प्राधान्यमिति मद्विभूत्यंशत्वम्—इत्युत्तरत्र सर्वत्र वेदितव्यम् ॥

किंच—

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।**
**सेनान्यामप्यहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

---

१. IO and BS[2] पुराणप्रोक्ताभिः प्रसि
२. BN[1] and BS[1] omit सर्वत्र
३. BS[1] and BN[1] सेनानीनामहं

38

पुरोधसां[1] राजगुरूणां मध्ये मुख्यं प्रधानं बृहस्पतिं देवराजगुरुं मां विद्धि, तस्य तेषु[2] प्रकृष्टत्वात्। सेनान्यां चमूनायकानां मध्ये चमूनायकः स्कन्दः कुमारोऽहम्; तस्य तन्मध्ये वीर्यातिशययोगात्प्राधान्यम्। सरसां जलाशयानां मध्ये सागरः समुद्रोऽहम्; तन्मध्ये नानारत्नप्रभवहेतुत्वादिना सागरस्य प्राधान्यम्॥

किंच—

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम्[3]।
यज्ञानां जपयज्ञोऽहं स्थावराणां हिमालयः॥ २५॥

ऋषीणां सप्तर्षित्वादिना प्रजापतित्वादिना च महतां प्रकृष्टानां मुनीनां मरीच्यङ्गिरःप्रभृतीनां मध्ये भृगुरहम्; तस्य तदपेक्षया ज्ञानादिप्रकर्षश्रवणात् प्राधान्यम्। तथा गिरां [4]गीर्निर्वर्त्यत्वात् गीःशब्दवाच्यानां मध्ये प्रणवाख्यमेकमक्षरमहम्; तस्य हि पदभूतस्य विश्वरूप[5]त्वातिरिक्तपरमेश्वररूप[6]वाचकत्वात् प्राधान्यम्। यज्ञानां द्रव्यनिर्वर्त्यानां यागविशेषाणां प्रागुक्तानां मध्ये जपः प्रणवादिपवित्रावर्तनं स एव यज्ञो यागविधिरहम्। यथा मन्त्रजपेन देवता आराध्यन्ते, न[7] तथा द्रव्ययज्ञादिनेति तस्य प्राधान्यम्। यतः फलानभि-

१. IO adds च मुख्यं
२. IO omits तेषु
३. BS² गिरामप्येकं
४. All except BS² गीनिर्वर्त्य
५. BS² रूपता
६. BS² स्वरूप
७. BS² omits न

सन्धानेन जपयज्ञनिष्ठस्य यत्फलं प्राप्यं तदपेक्षया तत्तल्लोकान्तरप्राप्तिरपि निरयगतित्वेन मोक्षधर्मेषु प्रतिपादिता। तथा च तत्रोक्तम्—

"चतुर्णां लोकपालानां शक्रस्यापि बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥

रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम् ।
एते वै निरयास्तात स्थानस्य परमात्मनः ॥"

मुख्यजापकप्राप्यस्येत्यर्थः। तथा स्थावराणां जङ्गमत्वव्यतिरिक्तलक्षणानां मध्ये हिमालयः प्रालेयशैलोऽहम् ; तस्य समस्तस्थावरभूतमध्ये नानारत्नौषधीप्रभवत्वादिना [1]यज्ञयोनिभूतेन यज्ञाङ्गत्वाच्च प्राधान्यम्। गिरीणां मध्ये मेरोर्विशिष्टत्वमुक्तम् ; [2]सर्वस्थावराणां तु हिमालयस्येति न पौनरुक्त्यम् ॥

किंच—

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
[3]ऐरावणं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

---

१. IO and BS[2] omit यज्ञ...त्वाच्च  ३. BS[1] and BN[1] ऐरावतं
२. BS[2] omits सर्व

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम्[1] ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि[2] जाह्नवी ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

---

१. IO and BS[2] संयमिनां २. BS[1] and BN[1] अपि

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना: कविः ॥ ३७ ॥

दण्डो दमयतामस्मि[1] नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

श्लोकत्रयोदशनिष्ठानां वृक्षादीनां पदार्थसर्गाणामश्वत्थादीनां तत्तद्विशेषाणां यज्ञियत्वादिना[2] तेन तेन विशेषेण प्राधान्यं प्रसिद्धमिति प्रातिपद्येन सर्वं न व्याख्यातम् । किंतु क्वचित् किंचित्पदं व्याख्यायते । तत्र प्रजनः प्रजनक्रियाकर्ता ; तस्य[3] जातावेकवचनम् ; तेन प्रजनयितॄणां मध्ये प्रजनक्रियायां मुख्यहेतुत्वात् कन्दर्पः कामोऽहम् ; सति हि तस्मिन्नन्येषां प्रजनकत्वप्रसिद्धिः । यादःशब्देनाब्देवता आहुः ; तासां मध्ये वरुणः प्रधानम् । तथा यमो वैवस्वतो देवताविशेषः यतस्ततो योनेर्यत्र तत्र योन्यन्तरे सर्वक्षेत्रज्ञान्नियच्छति ; तस्य संयमतां नियमक्रियासमर्थानां सर्वेषां मध्ये प्राधान्यम् । संयमतामिति छान्दसो यच्छादेशाभावः[4] । केचिन्निपुणाः संयच्छतामिति पठन्ति । कालः कलयतामित्यत्र इह तावत्सर्वात्मना निरवच्छिन्नमहिम्नो नित्यस्यैकस्येश्वराख्यस्य तत्त्वस्य परमार्थसत्त्वात् कालो नाम तद्व्यतिरिक्तः पदार्थो न कश्चिद्भवितुमर्हति । किंतु तन्मायावभासितजडाजडभावात्मके जगत्यजडः क्षेत्रज्ञलक्षणो यो भावः तस्य परस्परविभिन्नार्थ-[5]

---

१. All except BS² दमयितां
२. BS³ याज्ञिय
३. IO omits तस्य
४. All except IO यश्छन्दसाभावः
५. IO and BS² परस्परभिन्न

प्रमातृतायां सत्यामनित्यवस्तुविषयत्वेय कलनामात्रनिमित्तकः कालः समुन्मिषति; अनित्या हि भावा उत्पत्तिस्थितिविरोधधर्माणो भूतवर्तमानभविष्यद्दशायोगित्वात् कलनीयतां तेन तेन रूपेणावच्छेद्यतां प्रतिपद्यन्ते ; तेषां च मायीया एव प्रमातारः कलयितारः ; ततः कलनक्रियैव कालः ; ततः कलनीयविषयव्यवहार-मुख्यसाधनभूतकलनक्रियायामेकस्य कालस्य कलयितॄणां मध्ये मुख्यत्वमिति क्रियात्वेन परिकल्पितस्य कालस्येह प्रतिपादितं स्वरूपम् । द्रव्यत्वेनापि तस्य कैवल्यकल्पना व्यवस्थाप्यते; तामग्रे वक्ष्यति । अक्षराणां पदावयवभूतानां मातृकावर्णानां सर्वप्राणभूतत्वादकारस्य प्राधान्यम् । स हि जीव इव शरीराणां तेषां वर्णानां व्यापकत्वेनैको व्यवस्थितः । तस्य हि अनासादितदीर्घककारादिरूप-विकारत्वे सति यद्रूपं तन्नादात्मकं परं शब्दतत्त्वमिति तत्त्वविदो वदन्ति । तथा[1] सामासिकस्य तत्पुरुषबहुव्रीह्यादेः समाससमूहस्य मध्ये सकलपदार्थप्राधान्यादिना युगपदधिकरणवचनत्वादिना च द्वन्द्वस्य प्राधान्यम् । तदा क्षयः काल इति यदा द्रव्यत्वेन कालः कल्प्यते, तदा सर्गादीनां नित्यप्रवृत्तानां नित्यत्ववत्तस्यापि नित्यत्वे सति क्षणिकादिकल्पस्थायिपर्यन्तभावभेदपृष्ठपातिनामनित्यानां स्वावयवानां निमेषादिकल्पान्तानां[2] मध्ये क्षमत्वमनन्तत्वमिति स्वावयवापेक्षयैवैतस्य प्राधान्यम् । अवयवनिर्देशस्त्वत्रार्थात् कल्पनीयः ; कल्पना तु कालस्य क्रियात्वेन द्रव्यत्वेन चोभयथापि प्रतिपत्तिसहिष्णुत्वात् संभवत्येव ; संभवापेक्षयैव च भगवता पुनः कालनिर्देशः कृतः । यदि वा योऽहमक्षयः परमार्थो नित्यत्वादविनश्वरः स एव कालोऽहमेव ; स्वमात्मानं कालत्वेनावभासयामि—इति पूर्वोक्तस्य कालस्य

१. IO and BS[2] तथा

२. IO कल्पनान्तानां

मदिच्छामात्रकल्पितस्वरूपप्रतिपादनार्थं पुनर्वचनमिति। यदि वा दर्शनभेदेन क्वचित्क्रियात्वं क्वचिद्द्रव्यत्वं कालस्य पश्यता द्विर्निर्देशः कृतः, तथा यैः सततं जीवितेन्द्रियशरीरविषयादिकं युगपदेव हरति, तस्य मृत्योस्तत्कालभाविनो[3] मरणहेतोर्वस्तुनोऽन्येषां हर्तॄणां मध्ये प्राधान्यम्। तथा छलयतां वञ्चयतां मध्ये द्यूतस्य छलयितृत्वेऽपि धर्मादनपेतत्वात्प्राधान्यम्। धर्मद्यूतधनं श्राद्धादिक्रियासु शस्यते; परवञ्चनाभिसन्धिमूलत्वात्तस्य छलयितृत्वं स्थितम्। तथा सत्त्ववतां गुणानां सत्त्वरजस्तमोलक्षणानां सत्त्वगुणस्य प्रकाशात्मकत्वात्प्राधान्यम्। तथा येन राजानो दुर्विनीतान् दमयन्ति, दण्डः शास्त्रनियमितो निग्रहविशेषो मुख्यसाधनमिति स एव दमयिता; तेन दमयतां मध्ये दण्डस्य प्राधान्यम्। तथा विजिगीषतां प्रतिद्वन्द्विनः जेतुमिच्छतां नीतिः कर्मारम्भोपायादिकार्यसिद्धिपर्यन्ताङ्गपञ्चकमयेर्नय एव मुख्यं साधनमिति [9]नीतेरेव जिगीषतां मध्ये प्राधान्यम्। तथा गुह्यानां रहस्योपायानां मध्ये मौनं वाङ्नियमरूढं मुनित्वमहम्। नानार्थविषयस्य सङ्कल्पस्याप्यनुन्मेषो यत्र, स हि परमः समाधिः; तस्मिंश्च सति संकल्पमूलाया वाचो नियमरूपस्य मौनस्य सिद्धिः—इति तदेव परमं गुह्यमित्युक्तम्। तथा ज्ञानवद्ग्रहणेन नानार्थविषयाणि भिन्नानि ज्ञानानि गृह्यन्ते; तेषां मध्ये परमार्थिक-

---

१. IO यतः
२. BS[1] and BN[1] तात्काल
३. IO adds अपि
४. IO omits प्राधान्यं...मध्ये
५. IO and BS[2] add तथा
६. BS[2] श्रद्धादि
७. BS[2] An explanation of अङ्गपञ्चक is found in the margin thus:-कर्मणामारम्भोपायः द्रव्यपुरुषसंवित् देशकालविभागः कार्यसिद्धिः
८. IO and BS[2] मयोनय एव
९. IO omits नीतेः

लक्षणैकतत्त्वविषयस्याभिन्नस्य ज्ञानस्य प्राधान्यम्। [1]ततो नानाज्ञानानां मध्ये एकस्य ज्ञानस्य यथोक्तस्य प्राधान्यमनेन प्रतिपादितम् ॥

विभूतिप्रतिपादनमुपसंहरन्नाह—

**यच्चापि सर्वभूतानां तद्बीजमहमर्जुन।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥**

किं बहुना विभूतिविस्तरकथनेन! सङ्ग्रहादियं मम परा विभूतिः यतः सर्वभूतानां प्राक्प्रतिपादितपरापरप्रकृतिभेदेन प्रसृतानां यद्बीजमुत्पत्तिकारणं सोऽहमेव; न हि बाह्यं कारणं जगतः किंचित्संभवति, मन्मायाशक्तिमात्रमेकं वर्जयित्वेत्यर्थः। यतस्तदिह वस्तु चेतनमचेतनं वा नास्ति न सत्तां भजते, [2]यन्मायां विनोत्पद्यते चराचरम्, अतः सकलकारणाभासव्यतिरेकेन पारमार्थिकमहमेव कारणं सर्वभूतानामिति ॥

मया च परमकारणेन सता स्वमायामहिमो[3]द्भावितनानाभावभेदाश्रिता या विभूतयो मम[4] संभवन्ति, तासाम्

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

मम सम्बन्धिनीनां दिवो मद्धृदयाकाशादुद्भूतानामपर्यन्तसर्वपदार्थव्यवस्थितानां विभूतीनां निजशक्तिविजृम्भमाणानामन्तोऽवधिर्न विद्यते। एष त्विह

---

१. IO omits ततो...प्रतिपादितम्
२. BS[1] and BN[1] यन्मया
३. IO महिम्नोद्भावित
४. BS[1] and BN[1] omit मम

प्रकरणे उद्देशतः कस्यचिद्धर्मस्य कीर्तनाद्विभूतेः स्वविभवस्य विस्तरः कस्यचिदेव भागस्य प्रसरः कथितः ॥

संग्रहतस्त्विदं[1] स्वविभूति[2]विज्ञानाय ब्रवीमि—

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छेस्त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥**

इह सर्वलोकेषु यद्यत्सत्त्वं यत्किंचिद्वस्तुजातं चेतनमचेतनं वा विभूतिमत् विभूतियुक्तम्, अत एव श्रीमत् शोभातिशयसंपन्नम्, ऊर्जितं तत्तदर्थक्रियासामर्थ्ययुक्तम्, तत्तत्सर्वं मम सम्बन्धिनस्तेजसः परस्य प्रकाशस्य यः अंशः लेशमात्रं तत्संभवं तत्समुद्भूतं त्वमवगच्छेः अवजानीयाः[3] ॥

प्रकारान्तरापेक्षेण विभूतिनिष्ठां प्रतिपादयितुमाह—

**अथवा बहुनोक्तेन किं ज्ञानेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

[4]अथैतेन तत्र तत्र वर्गे तत्तद्वस्तुमद्विभूतिमत्त्वेन स्थितमवगच्छेरिति पूर्वोक्तेन बहुना प्रभूतग्रन्थप्रतिपादितेन ज्ञानेन । तथा प्रतिपन्नेन सता किं ते प्रयोजनम् ? न किंचित्तेन कृत्यम् । यत इदमनवधिविचित्रितं[5] [6]भावमयं कृत्स्नं

---

१. BN[1] adds तासु
२. BN[1] विभूति
　BS[2] स्वविभूतिं
३. IO विजानीयाः
४. BN[1] अथो एतेन
५. BN[1] विचित्रभावमयं
६. BS[1] adds चित्र

समस्तं जगत् [1]सप्तलोकीमितं विश्वमेकेन सर्वदा [2]सर्वथा [3]सर्वत्र विचित्रसामान्यसंविदात्मना वेद्यांश[4]व्यतिरेकिणांशेन भागेनावष्टभ्याक्रम्य व्याप्याहं स्थितः। तदिदमनेनोक्तं भवति—तत्र तत्र दर्शने तत्तत्प्रकारभेदेन प्रतिपादितस्यास्य जगतो द्वावंशौ संक्षेपतः स्वरूपम्। एको वेदकैकस्वभावः सर्वदा सर्वात्मना निर्विकारचिन्मात्र[5]स्वरूपः; अपरो नानारूपत्वेऽपि वेद्यैकस्वभावः; तत्र वेद्यांशपरिहारेण तदाभासैककारणभूतवेदकांशविश्रान्तसंविदाभियुक्तेन भवितव्यम्, येन मद्विभूतिः परमधिगम्यत इत्योम्॥

विभूतीराविष्णोरिह सकलसर्गातिशयगाः
[6]परब्रह्मैश्वर्यावधि समधिगन्तुं व्यवसितैः।
इयं साक्षाद्भक्तिर्भवति[7] तु [8]विशुद्धैर्व विबुधैः
निधातव्या नित्यं मनसि दशमाध्यायविवृतिः॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
दशमोऽध्यायः॥



१. BN[1] सर्व
२. BS[2] omits सर्वथा
३. BN[1] omits सर्वत्र
४. BN[1] व्यतिरिक्तेनांशेन
५. BN[1] omits स्वरूपः
६. IO परं
७. BN[1] भगवति
८. BN[1] विशुद्धेन. This is noted as an alternative reading in BS[2].

## ॥ अथ एकादशोऽध्यायः ॥

---

अथाध्यायदशकेन भगवदुपदिष्टज्ञानविज्ञानपूर्वं समस्ताभिधेयवस्तुश्रवणमात्रादेव भगवतः परमेश्वरत्वावगमात्तस्य परमकारणत्वे तदुक्ते वचसि यथोक्तफलाविसंवादकतया प्रकृष्टोपायत्वे निवृत्तसन्देहमात्मानमावेदयन् श्रुतिमात्रप्रतिपन्नतत्साक्षाद्दर्शनेच्छाप्रचोदितः अर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

मदनुग्रहाय मामनुग्रहीतुं निजया परशक्त्या प्रबोधयितुं त्वया परमेश्वरेण स्वयंप्रतिपादितस्वभावेन यद्वचनमध्यायदशकात्मकं वाक्यमध्यात्मसहितमात्मविषय[1]ज्ञानमयम्, अत एव [2]परमं गुह्यं प्रकृष्टं रहस्यमुक्तमुपदिष्टम्, तेन हेतुभूतेनायं सर्वजनक्रोडीकारेण स्थितो मोह इति प्रतिपादितपरमार्थप्रतिपत्त्यन्यथाप्रतीतिलक्षणमज्ञानं मम निवृत्तो[3] व्यापारतः ॥

[4]अत्र हेतुमाह—

भवाप्ययौ हि भूतानां श्रुतौ विस्तरतो[5] मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

---

१. BN[1] विषयात्मक

२. IO and BS[2] परं

३. BN[1] निवृत्तेः

४. BS[2] तत्र is noted as an alternative reading.

५. IO विस्तरशः

यस्मात्त्वत्तः परमकारणादेकस्मात्समस्तानां स्थावरजङ्गमानां भूतानां प्रभवाप्ययौ उत्पत्तिलयौ विस्तरतो वैतत्येन मया श्रुतौ श्रुतिमात्रेण[1] प्रतिपादितौ न त्वनवधारितौ। अपि चाव्ययं नित्यं माहात्म्यं निरतिशयैश्वर्यलक्षणं महत्त्वं श्रुतम् ॥

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किंचिदस्ति"

इत्यादेरविसंवादिनो भगवद्वचनादेव भगवानेव सकलभूतभावाभावैककारणम्; तथा भावेऽपि विशुद्धचिन्मात्रस्वभावाप्रच्युतेरद्भुतस्यैश्वर्यस्यैकास्पदमिति च मया प्रतिपन्नमित्यर्थः ॥

श्रुतिमात्रेणैतन्[2]मया प्रतिपन्नम्, न तु साक्षादनुभूतमिति, तदर्थमाह—

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वरम् ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं[3] पुरुषोत्तम ॥ ३ ॥**

यथा येन प्रकारेण पूर्वोक्तेन त्वयात्मानं स्वरूपं परमेश्वरं ब्रह्मादीनामपीश्वराणामीशतृत्वात् प्रेवरं[4] प्रभुमात्थ कथयसि[5], एतद्वस्त्वेवम् अनेन प्रकारेण स्थितं नात्र मे भ्रान्तिरित्यर्थः। तत एव ते रूपं दिव्यं वपुरैश्वरमीश्वरस्य तव सम्बन्धि

---

१. IO श्रुतिमात्रेणावधारितावपि. BS[2] notes this as an alternative reading. Another reading in BS[2] is प्रतिपादित्तेनावधारितौ

२. BN[1] मात्रेण तन्मया

३. BN[1] ऐश्वर्यं

४. BS[1] प्रभवं

५. BS[2] कथयस्व is an alternative reading.

द्रष्टुं साक्षान्निरूपयितुमिच्छामि अभिकाङ्क्षामि । अनेन ह्यधुना दृश्यमानेन पुरुषाकृतिना तत्परं रूपं वाङ्मात्रेण मम केवलं कथितम् । यत्रेदमेकस्मिन् सर्वमेव स्थितम्, तदिदानीं भगवद्वचनप्रत्ययान्मया सत्यतस्तथा विद्यमानतया प्रतिपन्नम्; अतः पुरुषोत्तमपरमपुरुषत्वप्रसादात्प्रत्यक्षतः प्रेक्षितुमभिकाङ्क्षामि ॥

किंतु—

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगीश्वर ततो मे त्वं दर्शयात्मानव्ययम् ॥ ४ ॥

हे प्रभो परमेश्वर! तत्तथाविधं तात्त्विकं रूपं परमयोगिभिरपि प्रार्थ्यमानदर्शनं मया मनुष्यमात्रेण द्रष्टुं साक्षात्प्रेक्षितुं शक्यं मह्यमिति यदि मन्यसे जानासि, यदि ममेयतीं योग्यतां संभावयसि, ततस्त्वं योगीश्वर सहजसिद्धनिरतिशययोगत्वात्प्रयत्नसाध्ययोगानां सर्वेषां योगान्तराणां[3] प्रभो! मे मह्यमव्ययमनादिनिधनमात्मानं स्वरूपं दर्शय प्रत्यक्षीकुरु ॥

इत्यभ्यर्थितः प्रसादाभिमुखः भगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

---

१. BS[2] इच्छस्यभिकाङ्क्षसि
२. All except BN[1] काङ्क्षसि
३. IO and BS[2] योग्यन्तराणां
BN[1] योगिरूपाणां
४. IO omits अव्ययं.

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि पाण्डव[1] ॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि[2] ॥ ७ ॥

हे पार्थ ममैकस्यैव परमार्थसतः परमात्मनः स्वैश्वर्यातिशयात् स्वशक्तित्वेन सम्बद्धानि असङ्ख्यातानि रूपाण्याकृतिविशेषात्मकानि पश्य अवलोकय। कीदृशानि? नानाविधानि विचित्राणि? अत एव नानावर्णाकृतीनि [3]विविधावभाससंस्थानानि। तथा दिव्यान्यमानुषीयाणीति सामान्येनोपक्रम्य विशिष्टान्युद्देष्टुमाह—आदित्यान् द्वादशसङ्ख्यान् देवविशेषान्, तथा वसूनष्टसङ्ख्यान् देवविशेषान्, तथा रुद्रांश्चैकादशसङ्ख्यान्, अश्विनौ दस्रौ मरुतश्चै[4]कोनपञ्चाशतं देवविशेषान् पश्येति प्राधान्याद्देवतारूपाणि[5] उद्देशमात्रेणोक्त्वा संक्षेपत आह—ए[6]तानि तावत्त्वया सुरलोकनिवासिनां सता दृष्टानि यान्यपि बहून्यपरिमेयानि अदृष्टपूर्वाणि न कदाचिदालोकितानि आश्चर्याण्यद्भुतानि तान्यपि सर्वाणि पश्य। किं बहुना? इह मम सम्बन्धिनि देहे एकस्मिन्नेव रूपे एकत्र स्थितं कृत्स्नमखिलं चराचररूपत्वात् सङ्क्षेपेण द्विप्रकारम्, यद्यप्यन्यत् किंचिद्यथाभिलषितं द्रष्टुमभिवाञ्छसि, तदप्येकस्थमेव पश्येत्येकस्यैव परमार्थसतः परमकारणस्य स्वमायाशक्त्यवभासितानन्तान्योन्यभिन्नभावात्मकत्वमिदमत्यद्भुतं पश्येत्यत्र तात्पर्यम् ॥

---

१. BS[2] भारत
२. BN[1] अर्हसि is noted as an alternative reading.
३. IO omits विविधा...नानि
४. IO and BN[1] एकोन
५. BN[1] देवताविशेषाणि रूपाणि
६. BN[1] एतावत्तावत्त्वया

अत एव अत्यद्भुतत्वादस्यार्थस्य—

न तु मां [1]शक्यसि द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

अनेनैव[2] मर्त्यभावात्परिमितदर्शिनैव चक्षुषा [3]गोलकाधिष्ठानया[4] दृक्छक्त्या पुनर्मां प्रदर्शयिष्यमाणाश्चर्यरूपं द्रष्टुमालोकयितुं न शक्यसि न क्षमो भविष्यसि । अतो दिव्यं सर्वदर्शित[5]शक्तियोगात् परमात्मरूप[6]परमाकाशभावं[7] प्रकृष्टज्ञानात्मकं चक्षुर्नेत्रं ते ददामि[8] । पारमैश्वर्या स्वशक्त्या निष्प्रयत्नस्यैवाविर्भावायेयम् । तेन ममैश्वरमीश्वरस्य[9] सम्बन्धि प्रदर्शयिष्यमाणं रूपं पश्य साक्षान्निरूपयेति ॥

अथ भगवता परमेण समाधिना निरतिशयनिजरूप[10]योग्यतादानायार्जुनो यथा[11]नुगृहीतः, तथैव पूर्वं भगवद्[12]व्यासमुनिप्रसादासादितदिव्य[13]चक्षुः धृतराष्ट्राय प्रतिपादयितुं सञ्जय उवाच—

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

---

१. BS². The text here may be read either as शक्ष्यसि or शक्यसि IO, BN¹ and BS¹ शक्यसे
२. IO omits एव
३. All except BS² गोलोका-
४. IO ष्ठानतया
५. BN¹ दर्शन BS² दर्शित्व
६. BN¹ रूपं
७. BN¹ and BS² भवं
८. All except BS¹ ददानि
९. BN¹ ममैश्वरस्य
१०. BN¹ रूपदर्शनयोग्यता
११. IO यथागृहीतः
१२. BN¹ omits भगवद्
१३. BN¹ दिव्यदृष्टिः धृत

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

गतार्थमेतच्छ्लोकद्वयम्[3] ; किन्तु एकमेवैश्वरं[4] भगवत्सम्बन्धि विशुद्ध-संविन्मात्रं परमार्थतो यद्रूपं तदेव सकलजीवलोकविचित्राकृतिभेदेन तन्माया-शक्त्यैवावभासते ; ततो विश्वमेव भगवद्रूपमित्येतावन्मात्रतात्पर्याणि रूपविशेषा-ण्यवगन्तव्यानि, येन रूप[6]सामानाधिकरण्येनानन्तं विश्वतोमुखं देवमिति ग्रन्थः सम्बन्धमेति ॥

अत एवैकस्य परमार्थाद्वैतचित्प्रकाशात्मनो वैश्वरूप्येणावभासमानस्य स्वरूपं प्रतिपादयितुमाह—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः ॥ १२ ॥

यद्यन्तरिक्षे समुदितस्य भास्करसहस्रस्य समकालमेव समुत्थिता प्रसृता भा दीप्तिः कदाचिद्भवेत्[7], सा तस्यैकस्य परप्रकाशस्वभावस्य महात्मनः परम-पुरुषस्य सदृशी स्यात् तुल्या[8] भवेदिति काका व्याख्येयम् । येन न[9] सदृशी स्यात् ? इत्येवं

---

१. BN[1] omits this ardha.
२. BS[2] माला
३. IO omits गता...द्वयम्
४. BN[1] त्रयं
५. BN[1] ऐश्वर्यं
६. BN[1] अतद्रूपसामान्याधिकरणेन
७. IO भवति
८. BN[1] तुला
९. All except BS[2] omit न

पर्यवस्येत् । न[1] ह्यन्यप्रकाश्यसकलवस्तुप्रकाशकनिरतिशयप्रकाशात्मनस्तस्य कोटिशोऽपि युगपदुदितानां दिनकराणां दीप्तिः तत्प्रकाश[2]सादृश्यलेशमप्यासादयितुमर्हति ॥

एवमनुत्तरप्रकाशात्मनि

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

तदा तादृग्भगवद्वैश्वरूप्यदर्शनकारण[3]भूतदिव्यज्ञानात्मकचक्षुर्दानलक्षणपरानुग्रहरूपे काले तत्र[4] तादृशि परप्रकाशात्मनि देवदेवस्य सर्वेश्वरस्य शरीररूपे एकस्थमेकत्रैवाश्रये स्थितम्, अथ च नैकधा[5] प्रविभक्तं विश्वभावरूपैर्भेदैर्विप्रकीर्णं कृत्स्न[6]मखिलं जगद[7]र्जुनोऽपश्यत् साक्षात्कृतवानिति सञ्जयो दिव्येन चक्षुषा पारमेश्वरमनुग्रहमर्जुनस्य दृष्ट्वा एतदुक्तवान् ॥

अथ दृष्टपरमेश्वरवैश्वरूप्योऽर्जुनः किं चकारेत्याह—

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

तत[9]स्तादृगत्यद्भुतभगवद्रूपसाक्षात्कार[10]क्षणादनन्तरं पुनर्मानुषभावाविर्भावेऽप्यनुभूतपरतत्त्वस्मरणजनितेन विस्मयेनाविष्ट आ[11]क्रान्तचित्तवृत्तिः, अत एव हृष्टरोमा

---

१. BN[1] and BS[2] न ह्यनन्यप्रकाशस्य
२. BN[1] प्रकाशात्मत्वसादृश्य
३. IO omits भूत
४. BN[1] omits तत्र...शरीररूपे
५. BS[2] नैकदा
६. BN[1] omits कृत्स्नं
७. BN[1] adds अखिलं
८. BN[1] बद्धाञ्जलिः
९. BN[1] omits ततः
१०. BN[1] कारलक्षणा-
IO and BS[2] कारणा
११. BN[1] प्रक्रान्त

संजातपुलको धनंजयो देवकीपुत्रं पुरोवर्तिनं साक्षात्कृतनिरतिशयप्रभावत्वात् संजात-तद्विषयबहुमानातिशयो मूर्ध्ना प्रणामं कृत्वा कृताञ्जलिः सन् इदं वक्ष्यमाणमभाषत उवाच ॥

किमित्याह—

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।**
**ब्रह्माणमीशं कमलासनस्थं ऋषींश्च सर्वानुरगांश्च दीप्तान्[३] ॥१५॥**

हे देव परमेश्वर तव[४] देहे सकलजगद्भावैकाश्रयभूतेऽस्मिन् वपुषि देवान् दिवौकसः, तथान्यानपि, चराचराणां भूतविशेषाणां प्राण्यन्तराणां सहस्राणि, पश्यामि—इति देवादिप्राधान्येनैव हि झगिति समस्तविश्वदर्शनं भगवद्वपुषि पूर्वं प्रतिपाद्य क्रमेण तद्विशेषदर्शनं प्रतिपादयितुमाह—ब्रह्माणं प्रजापतिमीशं प्रभुं कमलासनस्थं पुण्डरीकविष्टरसंनिविष्टं पश्यामीति। अनेन ब्रह्मलोकान्तमूर्ध्वभुवनदर्शनमुक्तवान् । ऋषींश्च सर्वान् पश्यामीत्यनेन प्राधान्यापेक्षया ऋषिजनोपलक्षित-मध्यमलोकदर्शनमुक्तवान् । उरगांश्च दीप्तान् पश्यामीत्यनेनानन्तवासुकिप्रमुख-भुजगेन्द्रोपलक्षितपातालदर्शनमुक्तवान् । एवं त्वद्वपुषि भुवनत्रयं लीनं पश्यामीति स्वानुभवं प्रतिपादितवान् ॥

---

१. BN[1] and BS[2] add पाद
२. BN[1] सर्वांस्तव
३. IO दिव्यान्
BS[1] and BS[2] note दीप्तान् as an alternative reading.
४. BN[1] भवद्देहे

एवं देवादिविविधभूताधिष्ठितभुवनत्रयदर्शनेऽपि त्वामेवैकं सर्वाश्रयं पश्यामीत्याह—

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर
विश्वरूपम् ॥ १६ ॥

स्पष्टार्थः श्लोकः । किंतु[1] भुवनत्रयगतानां भूतानां ये ये[2] नानाविधा [3]जठरवदनलोचनादयोऽवयवाः ते तवैव सर्वतोऽनवच्छिन्नमाहात्म्यस्यैकस्यावयवत्वेन पश्यामीत्यत्र तात्पर्यम् ॥

इदमेव च ते पुरःस्थितं रूपं त्वदनुग्रहात्परमेश्वरतेजोमयं पश्यामीत्याह—

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं सम[4]न्ताद् दीप्तानलार्कद्युतिमप्रमेयम्॥१७॥

[5]अवतरणिकयैव व्याख्याततात्पर्यमेतत् ॥

अत एव परमेश्वरप्रतिपादकानि विशेषणानि तस्य रूपस्य प्रतिपादयितुमाह—

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः [6]शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

---

१. BN[1] omits किन्तु
२. BS[2] omits ये
३. BN[1] and BS[2] add भुज
४. BN[1] समस्तात्
५. BN[1] अवतरिक
　BS[2] अवतारणिक
६. BN[1] and IO शाश्वत

अक्षरं स्वरूपप्रच्युतिलक्षणक्षोभरहितं यत्परमं निरुत्तरं वेद्यं ज्ञेयं तत्त्वं तद्भवान्[१]। तथास्यानन्तप्रपञ्चस्य जगतः प्रकृष्टं निधानम्। त्वय्येतत्सर्वं जगन्निविशते। नन्वस्ति जगतो निधानं प्रधानं यत्र[२] तत्प्रलये निलीयते[३]। सत्यमस्ति तत् प्रधानम्[४]। तदपि परमकारणे भगवति निलीयते, तत एव च प्रभवतीति प्रधानस्यापि[५] निधानत्वात् त्वं परमं निधानं जगत इत्युक्तम्। तथा[६] कालावच्छेदाविषयत्वादव्ययोऽक्षयः। सात्त्वतधर्मगोप्ता त्वम्; सदिति ब्रह्मनाम; यद्वक्ष्यति—"ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति, तद्विद्यते यस्य स[७] सद्वान्[८] परमेश्वरः परमं[९] ब्रह्म; स देवता येषां ते सात्त्वता ब्रह्मविदः; तेषां धर्मो[१०] यथाप्रतिपादितज्ञानक्रियासमुच्चयानुष्ठानरूपः सदाचारः; तस्य गोप्ता कालापचयवशात् तिरोभवतः पुनःपुनः प्रणयनात्तद्बाधकविघ्नविघटनाच्च रक्षिता त्वमेव॥

अत एव[११]—

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम्।
पश्यामि त्वां[१२] दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम्॥१९॥

१. BN[1] भगवान्
२. IO यत्
३. BS[1] and IO निधीयते
४. IO and BN[1] omit प्रधानं
५. IO तस्यापि. This is an alternative reading in BS[2].
६. BN[1] adds तथा
७. All except BS[1] omit स
८. BS[1] and BS[2] सत्त्वात्, BN[1] समत्वात्
९. BN[1] परब्रह्म मया स देवता
१०. BS[1] धर्मे
११. BN[1] आह
१२. IO त्वा

अनन्तत्वा[1]दाद्यन्तमध्यरहितम्; अवच्छेद्यस्य हि[2] वस्तुनः आद्यादिविभागवत्त्वम्। इत्थं जगत्प्रपञ्चविरचनसामर्थ्यं वीर्यम्। अनन्तं न कदाचिन्निवृत्तं यस्य तम्। तथा सर्वक्षेत्रज्ञानां तत्तत्क्रियासाधनभूता ये अनन्ता बाहवः ते पारमार्थिकस्यैव कर्तुः परमेश्व[3]रस्य सम्बन्धिन इत्यनन्तबाहुत्वम्। तथा क्षेत्रज्ञशरीरे चक्षुर्भ्यां नियतविषयप्रकाशनं क्रियते इति शशिसूर्यनेत्रत्वम्। तथा क्रियाविद्भिर्विविधैः यज्ञक्रियाविशेषैर्वैश्वानरो विश्वमूर्तिः परमेश्वर एवैकस्तर्प्यते इति तस्यैव दीप्तो हुताशोऽग्निर्वक्त्रमित्युक्तम्। तथा[4] स्वेन तेजसा संविद्रूपेण ज्योतिषा सर्वमिदं विश्वात्मानं त्वां पश्यामीति सम्बन्धः॥

अथ सर्वशक्तेः परमेश्वरस्य कुरुसैन्यसंहारप्रसृतकालाख्यशक्तियुक्तत्वात् घोरत्वविशिष्टं[5] रूपं वर्णयितुमाह—

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः।**
**दृष्ट्वाद्भुतं रूपमिदं तवेदग्लोकत्रयं प्रव्यथितं महात्मन्॥ २०॥**

यस्मान्म[6]हता रूपेण गगनभूम्यन्तरालं सर्वाश्च ककुभस्त्वयैकेन व्याप्ताः पूरिताः, तदिदमीदृग्विधं तव घोरं रूपं दृष्ट्वा लोकत्रयं त्रैलोक्यनिवासितत्तद्दर्शनयोग्यदेवादिरूपं प्रव्यथितं प्रकर्षेण भीतम्। एवं महात्मन्निति रू[7]पमहत्त्वापेक्षमामन्त्रणम्॥

---

१. BS[1] अनन्तादा-
२. BN[3] omits हि
३. IO श्वरसंब. This is noted as an alternative reading in BS[3].
४. BS[1] यथा
५. BN[1] विशिष्ट
६. BS[3] महात्मा
७. BN[1] रूपं महत्त्वापेक्ष

तेषां देवादीनां तथाविधरूपदर्शनभयोत्पन्नाश्चेष्टाः प्रतिपादयितुमाह—

**अमी हि त्वा सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति[1] ।**
**स्वस्तीति चोक्त्वैव[2] महर्षि[3]सङ्घाः स्तुवन्ति त्वां स्तुतिभिः**
**पुष्कलाभिः ॥ २१ ॥**

अमी यस्मात्त्वां दुष्टक्षयायाविष्कृतदारुणाकारं शक्रादिदेवसमूहा विशन्ति त्वय्येव लीयन्ते[4] । केचिच्च भीताः सन्त्रस्ताः सन्तो[5] विरचितकरपुटा गृणन्ति स्तुतीः पठन्ति । अतश्च महर्षिसङ्घाः[6] मुनिप्रवरसार्था जगत्क्षेमाय स्वस्तिशब्दमुच्चार्य पुष्कलाभिः मुख्यार्थत्वत्सम्बद्धाभिः स्तुतिभिस्तत्[7]च्चरितोदीरणैस्त्वां स्तुवन्ति प्रशंसन्ति ॥

किंतु—

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा[9] वीक्षन्ते[10] त्वां विस्मिताश्चैव[8] सर्वे ॥ २२ ॥**

रुद्रादयो देवविशेषा व्याख्याताः । ऊष्मपाख्याः पितरः । गन्धर्वादयः प्रसिद्धाः । एते सर्वे[11] देवयोनित्वात् ज्ञानविशेषसंभवे सति त्वां वीक्षन्ते पश्यन्ति ॥

---

१. BS[2] घृणन्ति is noted as an alternative reading.
२. IO and BS[1] omits एव
३. IO महर्षिसिद्धसङ्घाः
BN[1] and BS[1] महर्षिसिद्धसङ्घाः
४. IO लीयते
५. IO सतो
६. BS[1] सङ्घाः
७. BN[1] स्तुतिभिरुच्चारितैरुत्सारितोदीरणैः
८. BS[2] च
९. BS[2] सङ्घा
१०. BN[1] वीक्ष्यन्ते
११. BN[1] adds एते

घोरत्वादपूर्वस्य रूपस्य विस्मयाविष्टा यादृशं रूपं दृष्ट्वा त एवंविधाः संवृत्ताः, तद्वर्णयितुमाह—

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

स्पष्टार्थः श्लोकः ॥

तद्रूपदर्शनेन विशेषतः स्वांवस्थां दर्शयितुमाह—

नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

अयमपि श्लोको गतार्थ एव । किंतु दिव्यचक्षुर्दानलक्षणभगवदनुग्रहक्षणे दृष्ट्वा दिव्येन ज्ञानेनानुभूय अधुना मर्त्यधर्मावेशे सति तत्त्वद्रूपं स्मरन् भीतचित्तः सन् धैर्यं निराकुलचित्तत्वं न प्राप्नोमीत्यतो दर्शनकाल एव न भयादीनां संभवो वेदितव्यः । अन्यत्रापि वर्तमानाख्यातप्रयोगे पूर्वदृष्टस्मरणं कारणत्वेन बोद्धव्यम् ॥

किंच—

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥२५॥

---

१. BN[1] लोकः प्रव्यथितः
२. IO and BS[2] स्वमवस्थां
BN[1] तामवस्तां
३. BN[1] अनुग्रहं दृष्ट्वा
४. BN[1] अध्वानमन्यधर्मा-
५. BS[2] तत्त्वरूपं is given as an alternative reading.

स्फुटार्थमेतद्वाक्यम् । किंतु भगवतो दंष्ट्राकरालबहुमुखत्वं संहारप्रवृत्त-बहुविकृतकृतान्तपुरुषवेषात्[1][2] ॥

अत एव कृतान्तपुरुषाक्रान्तानां कुर्वादीनां चेष्टितं वर्णयितुमाह—

अमी सर्वे धृतराष्ट्रस्य पुत्राः सर्वैः सहैवावनिपालसङ्घैः[3] ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥२६॥

वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

नानारूपैः पुरुषैर्योध्यमाना[4] विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः शस्त्रैः कृत्ता विविधैः सर्व एव ॥२८॥

त्वत्तेजसा निहता[5] नूनमेते[6] तथा[7] हीमे त्वच्छरीरं[8] प्रविष्टाः ।
यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति[9] ॥ २९ ॥

तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति ।
यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ॥३०॥

तथैव नाशाय विशन्ति लोकाः तवापि वक्त्राणि समृद्धवेगाः ॥३०१/३॥

---

१. BN[1] बहुविकरालकृतान्तपुरुषविशेषात्
IO बहु विकृतान्तवेशात्

२. BS[2] पुरुषावेशात्

३. BS[1] सङ्घैः

४. BS[1] व्याप्यमाना

५. All except BN[1] निहिता

६. BS[2] नूनमेव

७. BN[1] यथा. This is noted as a reading in BS[2].

८. BN[1] शरीरे

९. BN[1] व्रजन्ति This is noted as a reading in BS[2].

एतच्छ्लोकपञ्चकं निगदव्याख्यातप्रायम् । किंतु तव वक्त्राणि विशन्तीति बहुवचनेन दंष्ट्राकरालानीत्यादिविशेषणविशिष्टानि वक्त्राण्युपक्रम्य अचिन्त्यरूपं वक्त्रं तव विशन्ति—इति यदुक्तं तत्र कालपुरुषसम्बन्धिन्यो घोराकृतिविशेषरूपा नानाविधाः शक्तय एकस्यां त्वदीयायां परस्यां सामान्यशक्तौ परिणमन्ति इति भगवतः सर्वशक्त्याश्रयत्वप्रतिपादनपरं बोद्धव्यम्, यत एकवक्त्रशब्देन प्रतिपादितायाः सामान्यशक्तेरव्यपदेशत्वादचिन्त्यरूपत्वेन विशेषणमुक्तम् । "तथाहीमे त्वच्छरीरे" इत्यनेन तदेव स्फुटीकृतम् । अत्र श्लोकपञ्चके सार्धे "नानारूपैः" इत्यादि "त्वच्छरीरंप्रविष्टाः" इत्यन्तं श्लोकसार्धकं श्लोकसाम्यकर्थं[म्यार्थं] केचिन्न पठन्ति । कश्चित् "त्वत्तेजसा निहता नूनम्" इत्यादिश्लोकार्धमनेनाभिप्रायेण न पठति । इह तु बहुपुस्तकदर्शनात् भारते च तत्र सार्धश्लोकप्रणयनात् व्यासमुनेः श्लोकपञ्चकं सार्धमेव पठितम् ॥

अथ तथाविधां घोररूपां भगवतः शक्तिं दृष्ट्वा[1] तत्तत्त्वजिज्ञासार्थमिदमाह[2]—

लेलिह्यसे ग्रसमानः समन्तात् लोकान् समग्रान्[3] वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति[4] विष्णोः ॥३१॥

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३२॥

१. IO कृत्वा BS[2] notes this an alternative reading.
२. BS[2] तत्तत्तत्त्व
३. BN[1] omits समग्रान्
४. BN[1] प्रपतन्ति विष्णो

इमान् समग्रान् समस्तान् [1]लोकान् समन्तात्सर्वतो ज्वलद्भिर्वदनैः सानलैर्मुखैः ग्रसमानः कवलयन् लेलिह्यसे, अभीक्ष्णं लेक्षि[2] आस्वादयसि। अत एव तवोग्र[3]भासो घोरदीप्तयः समस्तं विश्वं तेजोभिर्व्याप्य प्रतपन्ति, देदीप्य[4]न्ते। यत एवं परमप्रशान्तचिन्मात्रस्वभावस्य तव घोरं रूपं पश्यामि, ततो देववर सकल[5]सुरोत्तम तुभ्यं नमः प्रसादं च कुरु। को भवानुग्ररूपः संवृत्त इति मह्यमाचक्ष्व। आयु[6]ष्मन्! तवैवंविधघोररूपग्रहणे[7] प्रवृत्तिं प्रसरं न जानामि, तत्त्वतो नावगच्छामि। अत आद्यं परमकारणं भवन्तं ज्ञातुं विशेषेण बोद्धुमिच्छामि॥

केन हेतुना कः सन् त्वमेवं घोररूपां शक्तिमाविष्करोषीति विज्ञप्तः

**भगवानुवाच—**

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो[8]ल्लोकान् समाहर्तुमिह प्रवृत्तः।**
**ऋतेऽपि त्वां[9] न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः॥ ३२॥**

कालोऽस्मि निरुपप्लवस्वरूपाप्रच्युतस्यैवं[10] विजृम्भमाणशान्तोग्रघोररूपसमग्रशक्तेः कालाख्या घोरा ममेयं शक्तिरित्यर्थः। शक्तेश्च शक्तिमदभेदो य[11]देह-

---

१. BS¹ स्लोकान्
२. All except BN¹ लीक्षि
३. IO वोग्रा भांसो
४. IO दीप्यन्ते
५. IO and BS² omit सकल
६. BS¹ and BS² यस्मात्
७. IO ग्रहणप्रवृत्तिप्रसरं
८. IO and BN¹ प्रवृद्धः
९. IO त्वा
१०. BS² omits एव
११. BS¹ भेदादहमेव

मेव काल इत्युक्तम् । कीदृशः कालः ? सकललोकसंहारैकव्यापकः । अधुना त्विह पृथिव्यां प्रवृद्धान्मदोद्रिक्तान् पृथिवीभारभूतान् लोकानिमान् समाहर्तुं क्षयं नेतुं प्रवृत्तः प्रसृतः ; ततस्त्वदृतेऽपि त्वां विनापि परिपूर्णपापात्मकत्वात्सर्व एते न भविष्यन्ति ; त्वय्ययोत्स्यमानेऽपि विनङ्क्ष्यन्त्येव । के ते योधाः ? संप्रहारिणः । प्रत्यनीकेषु प्रतिपक्षसैन्येषु ये स्थिताः ॥

यत एवमेते संप्लुवन्त्येवावश्यभाविविनाशेनाघ्राताः,

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३४१/२ ॥

कालात्मिकया मच्छक्तया प्रागेव ग्रस्तानेतान्निघ्नंस्त्वं कारणमात्रं संपद्यस्वेति व्यक्तार्थ एव एष श्लोकः ॥

द्रोणादयश्चाप्रतिमपराक्रमत्वात् दुर्जया इति च मावमंस्था इत्याह—

द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि लोकवीरान् ।
मया हतास्त्वं जहि मा व्यथिष्ठा युद्ध्यस्व जेतासि रणे सपत्नान् ॥ ३५१/२ ॥

---

१. IO संसारैक
२. BN[1] व्यापारः
३. IO and BN[1] रुद्रस्त्व- BS[2] notes this as an alternative reading.
४. IO परिपूर्णतया कृत्वा सर्वथाते न भविष्यन्ति । विद्यमानेऽपि विनरार्तें केते योधाः
५. BN[1] त्वया योत्स्य-
६. BS[2] अवस्थिताः
७. BS[1] and BS[2] अवश्यंभावविनाश
८. BN[1] भजस्व
९. BN[1] मयैव ते
१०. BN[1] वीरलोकान्

द्रोणादयोऽपि[1] सकललोकैकवीराः कालस्य दुर्जयत्वान्मया व्यापादिता इति तान् सुजयान्मत्वा[2] मा भैषीरिति तात्पर्यम् ॥

एवं भगवदुक्तेरर्जुनावस्थां धृतराष्ट्राय संजय उवाच—

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३६॥**

स्पष्टार्थः श्लोकः ॥

कृष्णं किमर्जुनः प्राहेत्याह—

**स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥३७॥**

इत्थं सर्वशक्तेः सर्वेश्वरस्य तव प्रकीर्त्या प्रशंसया यत्सर्वं जगत् प्रहर्षं भजते, अत एव च त्वय्यनुरक्तं भवति, तदा तद्व्युत्थापकानि रक्षांसि यातुधानानि भयाद्यतस्ततः पलायन्ते[3], सिद्धसङ्घा देवविशेषसमूहाः समस्ताः प्रणमन्ति च, तत्सर्वं स्थाने युक्तम् ॥

त्वदनुग्रहादेव साक्षात्कृतं परं भगवत्स्वरूपं परामृशन् पुनरप्याह—

**कस्माच्च ते न नमेरन्[4] महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं[5] यत् ॥ ३८ ॥**

---

१. IO and BN[1] omit अपि
२. IO दुर्जयान् मत्वा
३. IO पलाय्यन्ते
४. BN[1] नमेरन्
५. BS[1] and BS[2] सदसत्तः परं

अथवा कस्मात् कुतश्च हेतोरेते सिद्धादयस्तुभ्यं न नमेयुः ? महात्मन् परमपुरुष ! कीदृशाय ते तुभ्यम् ? ब्रह्मणोऽपि प्रजापतेरपि गरीयसे परमगुरवे । यत आदिकर्त्रे आद्याय स्रष्ट्रे तस्यापि [3]जन्महेतवे; हे अनन्त अपरिच्छिन्नमाहात्म्य देवेश[4] सकलसुरनाथ जगन्निवास [5]समस्त[6]भुवनैकनिधान ! यतस्त्वं सत इन्द्रिय[7]गोचरादिदन्तावधारणीयाद्वस्तुनो यत्परं व्यतिरिक्तं [8]तथा सतश्चाभावरूपादपि यत्परमक्षरमविकारं निरुत्तरं परमार्थसत्तत्त्वम् अतो वेदकैकस्वभाव[9]मनन्यवेद्यं परमकारणं त्वां कथं ते सिद्धा विदितवेद्याः सन्तो न नमस्येयुरिति तात्पर्यम् ॥

[1]अथ यथानुभूतभगवद्धर्मानुदीरयति—

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं[2] च परं च धाम त्वया ततं विश्वमनन्तरूपम् ॥३९॥

बहुशो[10] व्याख्यातार्था एते भगवद्विषयाः शब्दाः ॥

किंच—

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।
अनादिमानप्रतिमप्रभावः सर्वेश्वरः सर्वमहाविभूते ॥ ४० ॥

---

३. IO जगन्मोहहेतवे अन-
४. IO omits देवेश
५. IO omits समस्त
६. BN[1] and BS[1] भवनैक
७. BN[1] यागोचर
८. BS[2] तथास्मादसतश्च
IO and BN[1] तस्मादसतश्च
९. BN[1] भावमन्यतो वेद्यं
१. IO omits अथ
२. BN[1] वेद्यं परमं च
३. BN[1] बहुशोऽप्याख्या-

सर्वेभ्य ऐश्वर्यगुणयुक्तेभ्यो महती प्रकृष्टा विभूतिः शक्तिविजृम्भा यस्य ; तथापि तादृशः भगवान् सर्वेश्वरः ; अत एवाप्रतिमप्रभावः अनन्यसामान्यमाहात्म्यः ; तथा अनादिमान् आदिर्विद्यते यस्य स आदिमान् नादिमाननादिमान् सर्वप्रथम इत्यर्थः । एवंविधस्त्वमेव वाय्वादयो दैवतविशेषाः । यथा च वाय्वादीनामीश्वर-स्वरूपादभिन्नत्वम्, तथा सर्वमादौ व्याख्यातमेव ॥

परमेश्वरस्य सर्वाकारत्वं परामृशन्नाह—

**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ।**
**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ॥ ४१½ ॥**

सर्वं स्पष्टार्थमेतत् ॥

किंच—

**न हि त्वदन्यः कश्चिदपीह[1] देव लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।**
**अनन्तवीर्योऽमित[2]विक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि[3] सर्वः ॥४२½॥**

अत्रापि न किंचिद्व्याख्यातमस्ति । सर्वं स्वशक्त्या सम्यग्व्याप्नोषि यतः, ततः सर्वात्मकस्त्वमेव । वीर्यमुत्साहशक्तिः । पराक्रमः[4] क्रियाशक्तिः ॥

अथ विज्ञातभगवत्परस्वभावत्वात् पूर्वं पुरुषत्वप्रतिपत्त्या भगवति विहितं[1]-मतिक्रमं मन्यमानस्तत्क्षान्त्यर्थं श्लोकचतुष्टयमाह—

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखे च ।**
**अजानता महिमानं तवेमं मया प्रमादात्प्रणयेन वापि ॥ ४३½ ॥**

---

१. BS[2] कश्चिदस्तीह is noted as an alternative reading.

२. IO and BS[1] वीर्यामित

३. BS[2] ततोऽपि is noted as an alternative reading.

४. IO विक्रमः

१. BN[1] व्यवहितं

यच्चावहासार्थमसत्कृतोऽसि[1] विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत मत्समक्षं[2] तत्क्षामये त्वामहमप्रमेयम् ॥ ४४½ ॥

पितासि लोकस्य चराचरस्य त्वमस्य विश्वस्य[3] गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिम-
प्रभावः ॥ ४५½ ॥

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियस्यार्हसि देव
सोढुम् ॥ ४६½ ॥

सुबोधमेतत् । किंतु सखा त्वं ममेति मत्त्वा यद्यादवादिशब्देनामन्त्रितो-[4]ऽसि, योऽप्यन्यो व्यतिक्रमः कृतः, तत्सर्वमजानतो[5] भगवन्माहात्म्यं तदानीमज्ञातवतो मे क्षन्तव्यमिति सम्बन्धः । मत्समक्षमिति सभायां वा सतां सन्निधौ लोकत्रयेऽपि तव समो नास्ति । कुतोऽन्योऽभ्यधिको[6] भविष्यति ॥

अथ विज्ञातमहिमानमावेदयितुं श्लोकत्रयमाह—

दिव्यानि कर्माणि तवाद्भुतानि पूर्वाणि पूर्वेऽप्यृषयः स्मरन्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको धाता विधाता च
विभुर्भवश्च ॥ ४७½ ॥

---

१. BN[1] कृतोऽपि
२. IO तत्समक्षं
३. BS[1] पूज्यश्च
४. IO यद्यदेवासि शब्देन
BS[2] मद्यदेवादिशब्देन
BN[1] यद्यदेवापशब्देन
५. IO and BS[2] सर्वमिदमज्ञातवतः
६. IO and BN[1] अन्योऽधिको
BS[2] अन्योऽन्वभ्यधिको

तवाद्भुतं किं नु भवेदसह्यं किं वा शक्यं परितः कीर्तयिष्ये ।
कर्तासि सर्वस्य यतः स्वयं वै विभो ततः सर्वमिदं त्वमेव ॥४८½॥

अत्यद्भुतं कर्म न दुष्करं ते कर्मोपमानं न हि विद्यते ते ।
न ते गुणानां परिमाणमस्ति न तेजसो[1] नापि बलस्य नर्द्धेः ॥४९½॥

पूर्वे पुरातना अपि सर्वज्ञा ऋषयस्तव कर्माणि स्मरन्ति । अत एव तेषामृषीणामपि तानि पूर्वाणि इति जगत्सर्गप्रलयादीनां भगवत्कर्मणामनादि-प्रबन्धप्रवृत्तत्वप्रतिपादनपरमेतत् पूर्वं व्याख्यातप्रायम् । अन्यत्सुबोधम् । किंतु धाता धारयिता, विधाता स्रष्टा, तव स्रष्टव्यः संसारः । किमद्भुतमाश्चर्यरूपं कर्म स्वेच्छा-मात्रोपकरणस्यैकस्य कर्तुस्तवासह्यम् । अत एव सहकार्यादिनिरपेक्षत्वात्परतः[2] स्वात्मव्यतिरिक्तात् कुतश्चिच्छक्यं साध्यम् । किं वा[3] ते कथयिष्यामि ! इत्थं चानन्यापेक्षतया यतस्त्वं सर्वस्य वस्तुजातस्य निर्माता, ततो हेत्वन्तराभावात् त्वमेवेदं सर्वम् ; त्वच्छक्तिरेवेत्थं चकास्ति इत्यर्थः । ततश्चात्याश्चर्यरूपमपि कर्म न ते दुष्करमित्यादि स्पष्टम् ॥

अथानुग्रहक्षणानुभूत[4]भगवत्स्वरूपाव्यतिरेकसमाधेर्निष्क्रान्तस्तथाविधमत्युग्रं भगवत्स्वरूपं मनुष्यधर्मप्रत्यापत्तेश्चिरं[5] द्रष्टुमशक्तः प्राक्तनमेव दिदृक्षमाण इदमाह—

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ५०½ ॥

---

१. BS² तेजसां
२. IO omits त्वात्परतः...न्यापेक्ष
BS² notes reads this passage in the margin.
३. BN¹ omits किंवा
४. IO and BS² अनुरूप
BS² notes as an alternative reading क्षणानुद्भूत
५. BN¹ प्रत्यासत्तेः

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ५१ ॥

स्पष्टार्थमेतत् ॥

अथैवंविधमुक्तः[1] भगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ५२ ॥

सुबोधमेतत् । किंत्वात्मयोगात् दर्शितमित्येतदेवं बोद्धव्यम् ॥

यदा[2]नुग्रहपरेण मया त्वमा[3]त्मनि परस्मिन् योगं[4] समाधिं प्रापितः, तदैतद्रूपं[5] तव प्रत्यक्षीकृतम्, व्यतिरिक्त[6]त्वेनास्य परमेश्वरस्य स्वरूपस्य द्रष्टुमशक्यत्वात् । अत एवाह—

न वेदयज्ञा[7]ध्ययनैर्न दानैः न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य[8] अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ५३ ॥

मा ते व्यथा मा च विमूढभावो[9] दृष्ट्वा रूपं घोरमीदृङ्[10]ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ५४ ॥

वेदानां यज्ञानां बहुत्वादधिगमबहु[11]त्वम्; अधिगमशब्देन च[12]ाध्यानश्रवणादयो गुणाः प्रतिपादिताः; दानक्रियातपःशब्दैः तदनुष्ठानम्; क्रियाशब्दश्चानुष्ठीय-

---

१. IO and BS[2] उक्ते
२. BN[1] यदनु
३. BN[1] त्वय्यात्मनि
४. IO योऽयं समाधिं प्रापितः तस्मादे-
　　तद्रूपं
५. BN[1] तस्मादेतत्
६. BN[1] रिक्तेनास्य
७. IO and BN[1] यज्ञाध्ययनैर्न दानैः
८. BN[1] शक्यो ह्यहं
९. IO and BN[1] विमूढभावः
१०. IO घोरमीदृङ् ममेदम्
११. IO बहुपुत्रं
१२. IO omits च

मानब्रह्मचर्यादिकर्मविशेषवाचकः । यतश्चैवंविधसदाचारव्यवस्थितैरपि परज्ञानशून्यत्वादशक्यदर्शनमेतत्परमं मम रूपं मदनुग्रहादेवोन्मीलितदिव्यचक्षुषा त्वया दृष्टम्, ततो भयमोहादीनां कोऽवसरः? प्रत्युत मत्स्वरूपनित्यानुसन्धानावहितात्मना त्वया तदेव स्मर्तव्यमित्यभिप्रायः । घोरैकालपुरुषाद्याकृतियोगादुग्रं संहारादिकर्मणा । शिष्टं स्पष्टम् ॥

अथैतद्धृतराष्ट्राय संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५५॥

स्पष्टार्थमेतत् । किन्तु महात्मा विश्वरूपः सन् सौम्यवपुः पुनः प्राक्तनपुरुषैविग्रहात्सुदर्शनाकृतिर्भूत्वा भगवानेनमर्जुनं तथाविधाद्भुतदर्शनसन्त्रस्तचित्तं वक्ष्यमाणेन प्रत्याश्वासयदिति तात्पर्यम् ॥

एवं प्रत्यागतप्रवृत्तिः अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५६ ॥

स्पष्टमेतत् ॥

---

१. IO वसरः मम नित्यानुसन्धान
२. BS[1] and BS[2] घोरं
३. IO षादावतियोगात्
४. IO कर्मणामिष्टं
५. IO and BN[1] सौम्यरूपः
६. IO omits पुनः
७. IO पुरुषनिग्रहात्मदर्शाकृति
८. BN[1] एवमर्जुनं
९. BN[1] प्रकृतिः
१०. IC स्पष्टार्थमन्यत्

अर्जुनाश्वासाय भगवानुवाच—

सुदुर्दर्शमिदं[1] रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५७ ॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५८ ॥

निगदव्याख्यातप्रायमेतत् । यतः सर्गादि[2]तत्तत्वाधिकारव्यग्रचित्तत्वादपरामृष्टस्वभावा ब्रह्मादयो देवा अप्य[3]स्य रूपस्य सदा साक्षात्कारमभिकाङ्क्षन्ति, न तु लभन्ते, ततः सुतरां सर्वेण केनचित् दुष्करदर्शनमेतद्[4]यत्त्वया मत्प्रसादाविर्भूतपरज्ञानचक्षुषा दृष्टम् ; अतो यथा मां त्वं[5] तत्त्वतः साक्षात्कृतवान् तथा दानादिक्रियासक्तैः द्रष्टुमशक्य[6]ः ॥

केन तर्ह्युपायेन शक्योऽसि इत्याह—

भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५९ ॥

भक्त्या मदिच्छयैव पर[7]दैवसर्गाभिज्ञानजनसुलभया परिचर्यया तत्प्रभावादेवाविर्भूतसम्यग्ज्ञानत्वादविद्यमानमद्व्यतिरिक्तभजनीयविषयत्वे सत्यनन्यया[8] ज्ञातु-

---

१. IO and BN[1] सुदर्शनमिदं
२. IO and BS[2] स्वर्गादि
३. IO omits अपि
४. IO and BN[1] एतादृक्त्वया
५. IO and BS[2] omit त्वं
६. IO and BN[1] add अहं
७. BN[4] परं
८. IO सत्यनया

मविसंवादिनावगमेन बोद्धुम्; तथा सम्यग्ज्ञानलक्षणेनोपायेन द्रष्टुं गोचरीकर्तुम्; तथा तादृशोपायपरिशीलनाभ्यासातिशयात् प्रवेष्टुमात्मतयावगाढुम्। एवंविधो यथा त्वयानुभूतः शक्योऽहं नान्यैरुपायैः। त्वं च परस्यास्य रूपस्य साक्षाद्दर्शनात् प्रवेशपर्यन्तां पैरां भूमिमधिरूढः। तेन दुस्तरद्वैतमोहसागरादुत्तीर्णः समाश्वसिहि। कुतस्तवेदानीमदृष्टपरमार्थजनोचितैर्भयादिभिर्दोषैः सम्बन्ध इत्यर्थः ॥

एतमेवार्थं सिद्धान्तीकुर्वन्नध्यायमुपसंहरति—

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ६० ॥**

यैं एवंगुणविशिष्टोऽन्योऽपि कश्चिदभियुक्तः स मामेति मदभेदलक्षणां सिद्धिमधिगच्छति। कीदृशः? मत्कर्मकृत् शास्त्रचोदितानि तानि तानि वर्णाश्रमक्रमागतानि कर्माणि करोति। किंतु मदर्थं यथोपपत्त्या मत्प्राप्तये, न तु फलान्तरसिद्धये, अत एव मत्परमः अहमेवोपादेयतया प्रकृष्टो यस्य। ततश्च मद्व्यतिरिक्तसमस्तहेयोपादेयवस्तुविरक्तचित्तत्वान्ममैव भक्तः सर्वास्ववस्थासु मय्येव समर्पितान्तःकरणः। तथा स हि सर्वभूतेषु चराचरेषु भावेषु निःसङ्गो रागरहितः। निर्वैरः द्वेषवर्जितः। यो ह्वैतत्त्वतया रागद्वेषविषयत्वेन सर्वसंसारिभिः परिगृहीतेषु वस्तुषु निरतिशयानन्दनिर्भरं मत्स्वरूपमेव सततमनुभवति, स मामेवैति, सिद्धो मुक्त इहोच्यते—इति तात्पर्यमित्योम् ॥

---

१. IO नागमेनोद्यतय सम्य-
२. BS[1] परा
BN[1] omits this word.
३. IO सिद्धार्थीकुर्वन्
४. IO अयं गुण
५. BN[1] क्रमगतानि
६. IO ह्यधिगततत्त्वतया

मुञ्चत्येष स्वभावं न[1] बत बहुविधैरेकमेकान्तशुद्धं
प्रेङ्खद्भिर्भावभेदैरिति विहितपरामर्षमुक्तभ्रमाणाम् ।
स्वात्मन्येवेश्वरं[2] वो मणिमुकुर इव व्यज्यतां वैश्वरूप्यं
स्वाध्यायस्यास्य नीतं स्फुटमभिमुखतां व्याख्ययैकादशस्य ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
एकादशोऽध्यायः ॥



१. BN[1] न तव बहु २. IO वेश्वरः

## ॥ अथ द्वादशोऽध्यायः ॥

---

एवं परमात्मभगवद्वचनलक्षणात्समस्त[1]प्रामाण्यहेतोः प्रमाणोत्त[2]मात् सम्यगवगतेऽध्यायैकादशके प्रतिपादिते प्रत्यध्यायसमुच्चयानुष्ठानपर्यवसिततात्पर्ये ज्ञानविज्ञानादौ प्रकरणाभिधेयवस्तुन्युपपन्नतमत्वेनोत्पन्ननिष्कम्पप्रतिपत्तिः, अत एव तथापात्रीभूतप्रज्ञत्वदर्शनप्रसन्नाद् भगवत एव परज्ञान[3]रूपं दिव्यचक्षुरुन्मेषकारणं परममनुग्रहम[4]वाप्तवान्; [5]स्वयत्नं विनैव पारमेश्वरपरानुग्रहप्रभावमात्रादेव क्षणमात्रं साक्षात्कृतस्य परस्य तत्त्वस्येदानीं स्वातन्त्र्येणानुसरणे सुगमः कः पन्[6]था मया स्थेयः? अथवा मद्वचनासादितपरानुग्रहेणाभियोगिना जनेन केन मा[7]र्गेण तत्तत्वमुपसादितव्यम्? इति स्वपरार्थं [8]गुणप्रत्याहारोपायं जिज्ञासुः **अर्जुन उवाच—**

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

यथा विश्वातीतस्वरूप एव वि[9]श्वात्मकतया साक्षात्कृतोऽसि, एवमनेन प्रकारेण ये सततयुक्ताः सततं सर्वदा जागरादिषु सर्वास्ववस्थासु युक्ताः समाहिताः सन्तो भक्ताः प्रणयिनस्त्वां पर्युपासते सेवन्ते, ये च केचन अक्षरं

---

१. BS[1] and BN[1] add प्रमाण
२. IO प्रमाणोत्तरात्
३. IO रूप
४. BN[1] आप्तवान्
५. BS[2] स्वं यत्नं
६. IO पन्था येन वा
७. BS[1] and BS[2] साङ्गेन
८. IO गुणाख्यानप्रत्यारोपाय
   BN[1] गुणप्रत्यारोपाय
९. IO श्वात्मना तथा साक्षात्कृतोऽपि

चिन्मात्रैकस्वरूपं[1] सञ्चलनैशीलम्[2], अत एवाव्यक्तं[3] व्यक्तादस्मात्सर्वेन्द्रियगोचरात्त्वानाभावलक्षणाद्वस्तुनोऽन्यं सर्वार्थनिषेधसमाधिनिष्णातधिषणास्त्वां पर्युपासते, तेषामुभयेषां [5]योगविदां मध्ये के योगवित्तमाः, अतिशयेन त्वत्स्वरूपोपलब्धिफलसमाधिज्ञाः ?

एवं विज्ञप्त एकतरपक्षप्राधान्यप्रतिपादनार्थं भगवानुवाच—

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

त एवंविधा योगिनो युक्ततमा निरतिशयसमाधिभाजो मम मता अभिप्रेताः ; तानहं परमयोगिनो मन्ये, नान्यानित्यर्थः । के ते ? ये[7] मयि सकलवस्तुप्रकाशकानन्यप्रकाश्यचित्प्रकाशैकस्वभावे मनोऽन्तःकरणमावेश्य तत्समापन्नं कृत्वा परमया समस्तसंशयादिविकल्पविच्छेदादत्युत्कृष्टया श्रद्धया यथोक्तफलसंभावनयोपेताः समन्विताः सन्तो नित्ययुक्ता नित्यं[10] स्थूलसूक्ष्मसर्वभावानुभवैमयीषु तासु तास्ववस्थासु यथोक्तसमाध्यवस्थिताः समुपासते, स्वरूपप्रत्यवमर्शलक्षणया

---

१. All except IO रूपा
२. IO संचलशील
३. BS² व्यक्तं
४. BN¹ सामान्य
५. BS² notes as an alternative reading योगिनां
६. IO omits फलसमाधि
७. BS¹ omits ये
८. IO प्रकाशकानन्दचित्प्रकाशैकस्वभावेच्छतत्समासन्नं
९. BN¹ फलसद्भावभावनया
BS² notes as an alternative reading फलसद्भावनया
१०. IO omits नित्यं
BN¹ नित्यस्थूल
११. IO भाव
१२. IO समाधावव

निरुत्तरया भक्त्या[१] सेवन्ते। तदेवं कर्मयोगिनामेव योगवित्त्वातिशयो[२]ऽनेन प्रतिपादितः ॥

[३]अतो योग्यन्तरोपायानामायासा[४]भ्युपगमपूर्वं[५] दुष्करत्वादिप्रतिपा[६]दनेनावरत्वमेव प्रतिपादयितुमाह—

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**

**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥**

ये तु ये पुनर्योगिन इन्द्रियग्रामं बाह्यानामाभ्यन्तराणां च इन्द्रियाणां समूहं सन्नियम्य सम्यगप्रमत्ततया नियम्य सर्वेभ्यो विषयेभ्यः प्रतिषिध्य मामुपासते। कीदृशम्? अक्षरमव्यक्तं च प्राग्व्याख्यातस्वरूपम्। अत एवानिर्देश्यम् इदन्तावसेयसमस्तसंवेद्यभावविलक्षणत्वात् निर्देष्टुमशक्यम्, वाक्पथातीतम्। तथा सर्वत्रगं सर्वं व्याप्यावतिष्ठन्तमप्यचिन्त्यं बुद्धिगोचरातीतम्। तथा[७] परमार्थनित्यत्वात् कूटस्थं निरुपप्लवविनश्वरै[८]कस्वभावनिष्ठम्[९], अत एवाचलं ध्रुवम्। न ह्ययं[१०] पर्वतादि[११]कूटस्थपदार्थवच्चलनलक्षणेनोपप्लवेनात्यन्ताभावलक्षणेन[१२] वा नाशेन कदाचित्संयुज्यते।

---

१. IO शक्त्या
२. IO शयेन प्रतिपादितम्
३. IO यतो योगान्तरोपायादभ्यु
४. BS² आयासात्
५. IO पूर्व
६. IO प्रतिपादितेनावतारयत्वमेव
७. IO omits तथा
८. BN¹ omits एक
९. IO निर्दिष्टम्
१०. IO and BS² अहं
११. BS¹ पवनादि
१२. BS² अभावचलनक्षणेन

कीदृशाः सन्त एवंविधं[1] मामुपासते? सर्वत्र समबुद्धयः। सर्वस्मिन् वस्तुनि मत्स्वरूपैकदर्शित्वात्[2] समा निर्विशेषा बुद्धिर्येषां ते तथोक्ताः। समबुद्धित्वादेव सर्वभूतानामेव हिते रताः सर्वस्यात्मत्वेन प्रतिपत्तेर्न[3] क्वचिद्द्वेषदोषकालुष्यमनुभवन्तः[4]। अनेन विशेषणद्वयेन विनास्य समाधेरनिष्पत्तिः प्रतिपादिता। न हि सर्वस्यास्य[5] दशानधिरूढो योगी निष्पन्न इत्युच्यते। एवंविधा योगिनो ये मामुपासते, ते सत्यं मामेव प्राप्नुवन्ति। यथोक्तयेतिकर्तव्यतया[6] [7] निष्पन्नसमाधीनां मत्स्वरूपसमापत्तिरेव समाधिफलं तेषाम्, नान्यत्॥

किंतु—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्[8]।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते[9]॥ ५॥

तेषां सर्वभावनिषेधसमाधिनिष्ठानां योगिनां सर्वभावनिष्ठत्वेन मदुपासनपरेभ्यो[10] युक्ततमत्वेन प्राक्प्रतिपादितेभ्यो योगिभ्योऽधिकतरः सातिशयः[11] क्लेशः। कीदृशानां सताम् अव्यक्तासक्तचेतसाम् अव्यक्ते वाङ्मनसगोचरातिक्रान्तस्वभावे[12] मय्यासक्तमालम्बनीयत्वेन तत्रैव निषण्णं[13] चेतोऽन्तःकरणं येषां तथाविधानाम्। कथम्?

---

१. BN[1] and BS[2] एवंविधाः
२. IO देशित्वात्
३. IO omits प्रतिपत्तेः
४. IO भवतोऽनेन
५. IO सर्वाभ्यासदशा-
६. IO omits निष्पन्न...व्यतया
७. BS[2] omits यथोक्तयेतिकर्तव्यतया
८. IO सर्वत्राव्यक्तचेतसाम्
९. IO देहवद्भिः
१०. IO मदुपासापरे
११. BN[1] सातिशयक्लेशः
१२. BN[2] and BS[2] गोचरातिक्रान्त
१३. IO and BS[2] निर्विण्णं

अव्यक्तासक्तचित्तत्वमधिकतरक्लेशकारणमित्युपपादयितुमाह । यस्मात् देहभृद्भिर्देहं नियतजात्यभिमानावच्छिन्नं शरीरमहमिति प्रतिपत्त्या धारयद्भिस्तैस्तादृशैर्योगिभिरव्यक्ता सर्वात्मना निराभासा गतिः[2] समाधिप्राप्तिदुःखमतिक्लेशेनावाप्यतेऽधिगम्यते । अयमभिप्रायः—शरीरेऽहन्तया प्रतिपद्यमाने सर्वभावव्यतिरिक्तमत्स्वरूपसमापत्तिरनुपपन्नैव । तदभिनिवेशश्च सुमहाक्लेश एव । अथास्ति काचिद्युक्तिर्यया देह एव मद्भावेन प्रतिपत्तुं शक्यः, सर्वात्मनां सर्वक्रियोपरमस्यासम्भावित्वेन प्राक्प्रतिपादितत्वात् । तस्माच्छास्त्रचोदितासु क्रियास्वेव वर्तमानः पारमार्थिकसत्स्वरूपमसौ यथा सुखमवाप्नोति, न तथा दुष्करसकलक्रियानिषेधाभिनिविष्टः ; न च तादृशो योगिनः सर्वत्र समबुद्धित्वमुपपद्यते, सर्वार्थेषु निषेध्यतया द्वेषादिव्यक्तेः [भिव्यक्तेः] । यस्तु सुप्रबुद्धत्वात् सर्वदा सर्वथा सत्स्वरूपैकविश्रान्तसंवित्कस्य [त्कः तस्य] सर्वत्र निवृत्तहेयोपादेयविकल्पस्य सर्वत्र समबुद्धित्वमुपपन्नम् ॥

सैषा मुख्या भगवत्स्वरूपोपासा चतुर्थी भक्त्यवस्था । या तु नित्यक्रियान्तःपातिनी नानादर्शनप्रसिद्धेतिकर्तव्यताविशिष्टा सौप्यनयैव[3] दृष्ट्या उपपन्ना इति प्रतिपादयितुमाह—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

---

१. IO omits सक्त...अव्यक्ता

२. IO गति

३. IO and BS[2] सर्वदृष्ट्युपपन्ना

ये तु ये पुनरव्यक्तोपासकेभ्यो योगिभ्यो[1] व्यतिरिक्ता योगिनः सर्व-कर्माणि शारीरीर्मानसीर्वाचिकीः शास्त्रीया लौकिकीश्च संकलाः[2] क्रिया मयि सकलकर्तृत्वेन[3] प्रतिपादितस्वरूपे संन्यस्य कार्यतया समर्प्य देहाद्यहङ्कारात्मक-क्षेत्रज्ञकर्तृत्वनिवृत्ताभिमाना मत्परा अहमेव परः[4] कर्तृत्वादिना प्रकृष्टो येषां ते तथाविधा अनन्येन अविद्यमान[5]मव्यतिरिक्त[6]तत्त्वान्तरेण योगेन विहितकर्मानुष्ठान-रूपेण समाधिना मां यथोक्तस्वरूपं ध्यायन्तोऽनुसरन्त उपासते, मुख्यया गौण्या वा भक्त्या सेवन्ते, तेषां तथाविधानां कर्मयोगिनां[7] न चिरादव्यक्तोपासकापे-क्षयाल्पीयसा कालेनाहं[8] मृत्युसंसारसागरात्पुनः पुनः नाशोत्पादप्रबन्धपयोधेः समु-द्धर्ता सम्यगुत्तारको भवामि । कीदृशानाम् ? मयि परमकारणे परमेश्वरे आवेशित-चेतसां मद्[9]भेदभावनया समर्पितान्तःकरणानाम् ॥

अथ कथमिदमत्याश्चर्यमुपपद्यते, यल्लोकवत्सर्वासु क्रियासु क्रियमाणा-स्वप्यद्वैतपरब्रह्मस्वरूपा[10]प्रच्युतिरूपपरमसमाधिनिष्पत्तिरित्यत्र प्राक्प्रतिपादितामपि भक्तिं सूक्ष्मत्वाद्दुर्ग्रहामुपदेश्यप्रतिपत्तिस्थैर्याय पुनराह—

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवत्स्यसि[11] त्वं मय्येव योगमुत्तममास्थितः ॥ ८ ॥**

---

१. IO omits this word.
२. IO क्रियाः सकलाः
३. BN[1] कर्तृकत्वेन
४. IO अपरकर्तृत्वादिना
५. BS and BS[2] विद्यमान
६. IO रिक्तदद्वारेण
७. BN[1] योगिनामचिरात्
८. IO अयं
९. IO and BN[1] omit मत्
१०. IO स्वरूपप्रच्युति परम
११. IO निवसित्यसि मय्येन
This is noted as an alternative reading in BS[2].

इह सर्वक्षेत्रज्ञानां मनोबुद्धिनिबन्धनाः सर्वार्थसंविदः। तथा हि—मनोवस्था द्विप्रकारा, स्वतन्त्रविकल्पात्मिका, पूर्वानुभूतस्मरणरूपविकल्पात्मिका च। सा[1] च द्विविधा, जागरस्वप्नभेदात्। एवं सर्वत्रैव[2]। बुद्धिवृत्तिस्तु निश्चया[3]त्मकत्वान्निर्विकल्पेत्येवं [4]स्थिते मय्येवैकस्मिन् परमा[5]र्थसति नित्योदितनिर्मलचित्प्रकाशस्वरूपे परमात्मनि यथोक्तस्वरूपं मन आधत्स्व संनिवेशय, यद्यन्मनसा विकल्पयसि तत्तन्मदात्मकत्वेन जानीहि, त[6]था बुद्धिं यथोक्तस्वरूपां मय्येव यथोक्तस्वरूपे निवेशय समर्पय; यद्यद्बुद्ध्या निश्चिनुषे त[7]त्तन्मदात्मकत्वेनैव जानीहि। अयमत्र तात्पर्यार्थः—यो योऽर्थो विकल्प्यमानो निश्चीयमानो वा तेन तेन रूपेण संवेद्यते, स संवेद्यमानत्वादेव संवित्प्रकाशादभिन्नः; संविदात्मकश्च प्रकाशो ममैव पारमार्थिकस्यैकस्य संवेदितुरव्यभिचारी धर्म इति वास्तवेन रूपेण सर्व[8]भावा सर्वास्ववस्थासु म[9]दात्मका एव केवलं मायाव्यामोहितो लोकै[10]स्तानिदन्तया व्यवच्छिनत्ति। त्वं तु सम्यग् ज्ञानोपदेशेन प्रथमं प्रसारितबुद्धिः, ततो योग्यतातिशयात्साक्षान्मत्स्वरूपमनुभावितः स[11]न् सर्वास्ववस्थासु सर्वभावान्परमार्थतो मत्प्रकाशकत्वेनैव [12]परिमृष—इत्येवंविधमिमं[13]मुत्तमं योगान्तरापेक्षया प्रकृष्टं योगं[14] समाधिमास्थितः

---

१. IO omits सा च...सर्वत्रैव
२. BN[1] सर्वथैव
३. All except IO यात्मिकत्वात्
४. IO त्ववस्थिते
५. BN[1] परमार्थे
६. IO omits तथा...जानीहि
७. BN[1] तत्तदात्मकत्वेन
८. BS[1] सर्वे भावाः
९. BN[1] मदात्मक एवं
१०. IO लोकस्था इदंतया
११. IO omits this word.
१२. BN[1] परिमृशत्येवं
१३. IO and BS[2] omit इमं
१४. BS[2] योग

समाश्रितः सन् मय्येव परमात्मनि निवत्स्यसि स्थितिं लप्स्यसे, मदभेदमा[1]प्स्यसीत्यर्थः । अस्य हि कर्मयोगस्य यथोक्तज्ञानसंस्कृतविहितकर्मानुष्ठानमात्रसाधनत्वात् सर्वथा सर्वदा सर्वत्र सुसंपूर्णरूपत्वेनानुभूयमानत्वात् दीर्घकालनैरन्तर्या[2]दासेव्यमानक्रमसूक्ष्मबहुविधानुष्ठाननिष्णाततयांशांशिकया कदाचित्कथंचिदनुभवनीयस्वरू[3]पादभ्यासयोगादुत्तमत्वम् ॥

एवं मुख्यं भगवत्स्वरूपोपासाक्रमं प्रतिपाद्य सर्वस्य कस्य[4]चित्तत्र[5] पात्रतामर्जुनवदसम्भावयन् अर्जुनोपदेशेनैवोपायान्तरा[6]भ्यनुज्ञामाह—

अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

अभ्यासेऽप्यसमर्थः[7] सन् मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमास्थितः[8] ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

अथेति प्रकारोपन्यासार्थम् । यदि यथाप्रतिपादितेन प्रकारेण यथोक्तस्वरूपे मयि चित्तं मनोबुद्धिवृत्त्यात्मकमन्तःकरणं स्थिरं सर्वास्ववस्था[9]सु विचलावधानतया

---

१. IO अवाप्स्यसि
२. IO नैरन्तर्यादिसंबध्यमानक्रमात् चक्षुर्बहु
३. IO स्वरूपाभ्यास
४. IO लोकस्य उचितत्वपात्रतां
५. BS² तत्तत्र
६. IO राण्यनुज्ञां
७. IO and BS² मर्थोऽसि
८. All except BN¹ माश्रितः
९. BS² अवस्थास्वपि

दृढमावेशयितुं समर्पयितुं मत्स्वरूपाभेदेन भावयितुं न शक्नोषि न प्रभवसि, ततोऽभ्यासयोगेन कर्मयोगांशतया षष्ठाध्यायसंसूचितसंविधानेन तत्तद्योगशास्त्र-प्रणीतेतिकर्तव्यताविशिष्टेन वा चित्तवृत्तिनिरोधप्रयत्नात्मकाभ्यासप्रधानेन समाधिना मां यथोक्तस्वरूपमाप्तुमभेदेन प्रतिपत्तुमिच्छ अभिवाञ्छस्व, मत्स्वरूपप्राप्त्यभि-सन्ध्यपरित्यागेनाभ्यासयोगमपि कर्मयोगयोग्यताहेतुभूतमनुतिष्ठेत्यर्थः। एवंविधेऽप्य-भ्यासेऽभ्यासयोग[गे अ]समर्थः अशक्तः सन् मत्कर्मपरमो मदर्थं कर्माणि मत्कर्माणि तान्येव परमाभीष्टसाधनतया प्रकृष्टानि यस्य स तथाविधो भव। कर्मयोगाङ्ग-तयाभ्युपगतस्येश्वरप्रणिधानाख्यस्य क्रियायोगस्यानुष्ठानमाचरेत्यर्थः। ततोऽपि हि मत्स्वरूपावाप्तिलक्षणसमाधिफलसिद्धिर्भवति। अत एवाह—"मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि" इति। अथैतदपि यथोक्तं कर्तुं निष्पादयितुमशक्तोऽसि, असमर्थः त्वं भवसि, तदा मद्योगं मद्विषयं समाधिमाश्रितः फलत्वेन समाश्रितः सन् सर्वेषां पूर्वोक्तानां कर्मणामनुष्ठीयमानानां यत्फलं तत्तल्लोकान्तरोपभोग्यनाना-भोगात्मकसिद्धिरूपं तस्य त्यागमनभिसन्धिना संन्यासं यतात्मवान् सर्वस्माद्विषया-न्निगृहीतान्तःकरणेन युक्तः सन् कुरु निष्पादय। मयि मनः समाधाय

---

१. IO तद्योग
२. IO and BN[1] अवाप्तुं
३. IO and BN[1] वाञ्छा मत्स्व
४. IO योगे सति कर्मयोगमपि
५. IO omits अभ्यासे
६. IO शक्तः
७. IO मत्कर्मपरमो भव। अत एव मदर्थं
८. IO परमान्यभीष्ट
९. IO तव
१०. IO and BN[1] add ईश्वरस्य
११. IO तदुद्योगं
BN[1] तन्मद्योगं
१२. BN[1] तद्योगान्तरोप
१३. BN[1] हेयान् विषयात्
१४. IO समाधौ

शास्त्रविहितानि सर्वाणि कर्माणि यथोक्तज्ञानप्रसाधनोपायतया फलान्तराभिसन्धानं विनानुतिष्ठेत्यर्थः ॥

एवमुपदिष्टानां भगवदुपासाभेदानां क्रमेण पूर्वस्य पूर्वस्यानु[1]ष्ठानासामर्थ्ये सत्युत्तरस्योत्तरस्यानुष्ठानं यदुपदिष्टं तन्नावरत्वापेक्षया; किन्त्वधिकारिविषयस्य त्यागस्य सुकरतरत्वमेव बोद्धव्यमिति प्रतिपादयितुमाह—

श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागः त्यागा[2]च्छान्तिरनन्तरा ॥ १२ ॥

हिशब्दो हेतौ । यस्मादेवंविधो व्याख्यातक्रम इह विवक्षितः, तस्मात् मत्प्राप्तये सर्वकर्मफलत्यागं योग्यतातिशयवशात् सुकरत[3]रत्वं कुर्विति पूर्वापरयोः[4] वाक्ययोः सम्बन्धः । कीदृशः क्रमः ? इह ज्ञानं यथोक्तयोपपत्त्या सर्वभावानां प[5]रब्रह्मरूपतावगमः; त[6]दभ्यासादभ्यासयोगात् पूर्वोक्ताच्छ्रेयः सु[7]करत्वात्प्रशस्यतरम् । अभ्यासयोगे[8] हि सर्वविषयप्रतिषेधक्रमेण चित्तवृत्तीनां निरोधे यत्नः; स च यथोक्तज्ञानलब्धप्रतिष्ठबुद्ध्यधिकारिवि[9]षयतः । ततः प्रतिष्ठितबुद्ध्यधिका[10]रिविषयं ज्ञानं तदपेक्षया सुकरत्वात् श्रेय उक्तम् । अत एवाभ्यासयोगिनामव्यक्तासक्तचेत-

१. IO omits नुष्ठाना....ररया
२. BN[1] त्यागं
३. BN[1] सुकरतरं त्वं
४. IO omits योः वाक्य...यथोक्त
५. IO परं
६. IO omits तत्
७. IO omits सुकरत्वात्
८. IO and BN[1] योगो
९. IO omits विषय...धिकारि
१०. BN[1] कारविषयं

सामधिकतरः क्लेश इति प्रागुक्तम्। एवंविधाच्च ज्ञानाद्ध्यानं ज्ञाननिश्चितोपेये[1]वस्तुचिन्तनं[2] विशिष्यते, सुकरत्वादतिरिच्यते। तस्य हि ज्ञानापेक्षया तत्त्वसाक्षात्कारप्रवृत्तेर्विशिष्टोऽधिकारी। तद्विषयत्वेनैव तस्य सुकरत्वमेवंविधाच्च ध्यानात् कर्मफलत्यागो विशिष्यते। यतो घटमानावस्थोऽसौ तादृग्ध्यानलक्षणे हि कर्मणि व्यतिरेकबुद्धिः स्फुरत्येव, तदधिकार्यपेक्षया त्यागः सिद्धावस्थाधिकारिविषयः तादृशस्यैव सुकर इति ध्यानात्कर्मफलत्यागो विशिष्यते इत्युक्तम्। यस्मात्तेहैवंविधस्त्यागो विवक्षितः, यस्य नाहं कर्ता न मे कर्मफलेन सम्बन्ध इति प्रलापमात्रेण निष्पत्तिः, किं तु व्यतिक्रान्ता[3]भ्यासा[4]दिपूर्वावस्थासिद्धयोगिविषयं सर्वभावानां परब्रह्मस्वरूपे नित्यमनुभवाद्व्यतिरिक्तस्य फलस्यादर्शनमेव त्याग उच्यते। अत एवाह—"त्यागाच्छान्तिरनन्तरा" इति। शान्तिः सकलविकल्पक्षोभप्रक्षयाद्द्वयचिन्मात्रस्वरूपे परमात्मन्येव भगवत्यहमित्यभेदेन निरुपप्लवा संविदो विश्रान्तिः। तस्याः त्यागस्य च नास्त्यन्तरं व्यवधानम्। य एव त्यागः, सैव शान्तिरीश्वरसमापत्तिलक्षणा सिद्धिरिति त्यागाच्छान्तिरनन्तरे[5]त्युक्तम्। अनन्तरमिति पाठे क्रियाविशेषणत्वेनैष एवार्थो बोद्धव्यः॥

अथेदृशस्य त्यागिनः पर[6]साम्यसमापन्नसंविदात्मभूतस्य भक्तस्य लक्षणमाह—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १२ ॥**

---

१. IO उपायवस्तु
BN[1] उपाये वस्तु
२. IO चिन्तनैः
३. IO क्रान्तान्यासा-
४. IO omits सादि...भावाद्व्य
५. IO निरन्तरेति
६. BN[1] परमसाम्य

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिः यो मद्भक्तः स मे प्रियः ॥ १४ ॥

परब्रह्मात्मकस्वरूपसमापत्तिसूचकैवंविधगुणविशिष्टो यः स मद्भक्तः, स एव च मे प्रियः, आत्मभूतत्वात् दयितः । कीदृशः ? सर्वसाम्यसमापन्नत्वाच्चराचरेष्वखिलेषु भूतेष्वद्वेष्टा द्वेषलक्षणदोषरहितः स्वात्मतया सर्वं भावजातं पश्यतस्तस्य हेयाभावात् द्वेषाभाव इत्यर्थः । अनेन भावनिषेधात्मके समाधौ द्वेषदोषानुवन्धै[1]च्छेदः प्रागुक्तो[2]ऽनूदितः । अत एव मैत्रः सर्वत्र सौहार्दवान् । तथा करुणो दयावान् यतो निर्ममः ममेदमेतदर्थक्रियाकारितया स्वमिति परिग्रहबुद्धेर्निष्क्रान्तः । तथा देहाद्यनित्यवस्तुनिष्ठादहङ्कारप्रत्ययान्निष्क्रान्तो निरहङ्कारः । त[3]था स मे वेद्यत्वमात्रेण प्रतिभासमानत्वादनन्तराविष्कृतद्वेषरागात्मकविकारत्वात् तुल्ये सुखदुःखे यस्य । तथा क्षमी क्रोधादिविकारहेतुषु तितिक्षावान् । तथा स्वीकृतज्ञानपरामृतत्वान्नित्यतुष्टः स[4]दानिरभिकाङ्क्षः । तथा यतात्मा यतः स्वात्मन्येवा[5]वस्थापित आत्मा येन स तथा । सर्वे ह्यप्रबुद्धाः अनात्मनिधनादौ नियमितात्मप्रत्ययाः । तथा दृढनिश्चयः केनचिद्विकल्पेन प्रकम्पयितुमशक्यत्वात् दृढः सुस्थिरोऽ[6]ध्यवसायो यस्य स तादृशः । तथा पूर्वव्याख्यातक्रमेण मयि परमात्मन्यर्पिते निवेशिते मनोबुद्धी येन स एवंविधगुणविशिष्टो[7] मद्भक्त उच्यते । एवंविधसामग्री मदाराधनोपकरणसम्पदित्यत्र तात्पर्यम् ॥

---

१. BS[1] वन्धानुच्छेदः
२. BN[1] and BS[2] प्रागुक्ते
३. BN[1] and IO तथा ममैव वेद्य
४. BS[2] and BS[3] सदातिनिरभि
BN[1] सदा हि निर
५. IO and BN[1] न्येवास्थापिता
६. IO प्यवसायो
७. All except BN[1] विशिष्टे

इदानीमुत्तरेषु श्लोकेषु प्रकृष्टभक्तविशेषणत्वेनोपात्तानि पदानि बहुशो व्याख्यातप्रायार्थत्वात् पठ्यन्त एव—

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैः[1] मुक्तो यः स च मे प्रियः ॥ १५ ॥**

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भफलत्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभफलत्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥**

**समः शत्रौ च मित्रे च तथा मानावमानयोः[2] ।**
**शीतोष्णसुखदुःखेषु समः[3] सङ्गविवर्जितः ॥ १८ ॥**

**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित् ।**
**अनिकेतः स्थिरमतिः भक्तिमान् मे प्रियो नरः ॥ १९ ॥**

गतार्थान्येतानि विशेषणानि । किंतु कृतकृत्यताव्यक्तिहेतुभिः परमयोगिसम्बद्धैरेवंविधैर्गुणयुक्तो यः स मद्भक्तो भवतीत्येतावदत्र तात्पर्यं प्रागेवोक्तम् ॥

अथाध्यायमुपसंहरन्नाह—

**ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

---

१. IO हर्षमन्युभयक्रोधैः
BN[1] हर्षामर्षभयक्रोधैः

२. BN[1] The ardha अनिकेतः etc. is read here also.

३. BS[1] and BS[2] मनः

ये मद्भक्ता मत्सपर्यापरा मत्[1]परायणा इदं यथाप्रतिपादितं धर्मामृतं मत्स्वरूपोपासनात्मकसदाचारमयम् अमृतमविनाशित्वकारणं वस्तूपासते, नित्यानुशीलनेनोपसेवन्ते, [2]तेऽतीव सुतरां मम प्रिया वल्लभाः; न ते मत्तो व्यतिरिक्ता इत्यर्थः। कीदृशाः सन्त उपासते? श्रद्दधानाः समस्तसिद्धिबीज[3]भूतां श्रद्धां भजन्ते। अत एव च मत्परमा अहमेव[4] यथोक्तस्वरूपः परमेश्वरः परमात्मा सर्वोपायैरुपेयतया पर[5]मः प्रकृष्टो येषां ते तथा; श्रद्धामूलमत्समापत्तिफलां परां सिद्धिमुपागता इत्योम् ॥

सर्वार्थप्रार्थनेहारहितमपि सतां मानसं लोभयन्ती
लक्ष्म्या यत्र स्वयैषा विकसति भगवद्भक्तिकल्पद्रुमश्रीः।
तां नित्यं नन्दनोर्वीविहरणविरसाः कौतु[6]कात्कामपीमा-
मेकां विश्रान्ति[7]भूमिं श्रयत कृतधियो द्वादशाध्यायवृत्तिम् ॥

इति श्रीमद्राजानकरा[8]मकण्ठविरचिते वाक्यार्थान्वयमाले
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
द्वादशोऽध्यायः ॥



---

१. IO and BN[1] omit मत्परायणाः
२. BN[1] omits ते
३. BN[1] omits बीज
४. BN[1] adds च
५. IO and BN[1] परः
६. All except BN[1] कौतुकाः
७. BN[1] विश्रान्ति
८. BS[1] and IO रामविरचिते
BN[1] रामकविरचिते

## ॥ अथ त्रयोदशोऽध्यायः ॥

---

अध्यायद्वादशकेन प्रक्रान्तप्रयोजनविषयमशेषमभिधेयतत्त्वमभिहितम् । प्रायशो न कश्चिद्[1]वक्तव्यशेषो विद्यते । केवलमुक्त [2]एवार्थोऽ[3]विशिष्टेनाध्यायपञ्चकेन निर्मलीकरणाये[4]दानीं प्र[5]वक्ष्यते । तथा च प्रस्तावनाप्रदर्शितप्रक्रियाक्रमेण पारमार्थिकयथोक्तैकस्वरूपव्यवस्थितोऽपि परमेश्वरो निरुपमनिजक्रीडामात्रप्रयोजनतया एकमेव स्वस्व[6]भावं वेद्यवेदकविभागपरिकल्पनया शाखाद्वयेन [7]प्रसृतमवभास्य यामिमां मायामयीं महावा[8]गुरामग्रथयत् सा विषयविषयिविभागेन शरीरशरीरिभावेन चावभासमाना समस्तं संसारिचक्रम[9]ध्यावस्थिता ; तस्याः स्वेच्छयानुग्राह्यत्वेन परिगृहीतं[10] जनं प्रत्युद्ग्रथनोपायभूते सकले प्रकरणे तत्र तत्र प्रतिपादितस्वरूपं ज्ञानलक्षणमर्थं परमेश्वर एवोपदिष्टवान् । तत्र विष[11]यविषयिविभागेनावस्थितायास्तस्या [12]उद्वेष्टनाय स[13]मस्तो ज्ञानलक्षणोऽर्थः प्रपञ्चितः । तथा हि—तत्र प[14]रमेश्वर-

---

१. IO and BS¹ किञ्चित्
२. BN¹ omits एव
३. IO अर्थे विशिष्टेन
४. IO इदं
५. BS¹ प्रपञ्च्यते
६. IO स्वभाव
७. IO प्रसृतसर्वभावाभासामिमां
८. IO गुरां प्रथयन् सा विषय
९. BS¹ चक्रं पर्यवदध्या BS². The reading adopted in the text is given as an alternative reading.
१०. BN¹ गृहीतजनप्रत्यु
११. BN¹ विषयिभावेन
१२. IO तद्वेष्टनाय समो ज्ञान
१३. BN¹ and BS¹ सप्तमो ज्ञान
१४. IO and BS² परस्यैव

स्यैव तत्त्वस्य जडचेतनविभागेन स्थूलसूक्ष्मप्रकृतिप्रपञ्चविवेकपुरःसरतया तस्यार्थस्य "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा"[1] इत्यादिना प्रतिपादितया ब्रह्मतत्त्वलक्षणया परतरया प्रकृत्योरभेदपरमार्थताप्रतिपादनेन[2] निर्णयः कृतः। इदानीं शरीरशरीरिभावेन व्यवस्थितायास्तस्या उद्देष्टनोपायभूतत्वेन[3] ज्ञानस्य निर्णयार्थं समनन्तरमध्यायमारभते[4]। तत्र तावत्तयोः शरीरशरीरिणोर्वितत्य व्याख्यास्यमानप्रतिपादकसंज्ञानिर्देशेन[5] सामान्यलक्षणं प्रतिपादयन् सङ्क्षेपतो विवक्षितस्य ज्ञानस्य स्वरूपमपि भगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेद तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ १॥

इदं सर्वप्रमातृप्रसिद्धतया व्यवस्थितं शरीरं देहः क्षेत्रसाधर्म्यात् क्षेत्रमित्युच्यते, क्षेत्रसंज्ञया कथ्यते। यथा कुसूलादिसंभृतानां[6] धान्यादिबीजानां मूलस्तम्भशाखाशिलादिविशेषप्रसवाभिव्यक्त्यधिकरणः[7] पृथिव्युद्देशः क्षेत्रमित्युच्यते, तथा कर्माशयसंभृतानां कर्मणां जात्यायुर्भोगलक्षणविपाकविशेषाभिव्यक्त्यधिकरणभूतं[8] शरीरमपीदं क्षेत्रमित्युच्यते। तेन तत्कर्मविपाकास्पदत्वेन यदनुभूयते तच्छरीर-

---

१. IO and BS[1] प्रलयः प्रभवः
२. BN[1] परतया प्रति
३. IO तद्वेष्टनोपायभूतस्य
४. BN[1] रभ्यते
५. BN[1] प्रतिपादितसंज्ञा
६. BS[2] notes as an alternative reading कुसूलादिगतानां
७. IO धिकारिणः
८. BN[1] omits लक्षण

मिति वेदितव्यम् । एतच्चैवंविधं[1]क्षेत्रं यो वेद जानाति, तं[2] तत्त्वविदः[3] क्षेत्रज्ञस्वरूपज्ञाः[4] क्षेत्रज्ञमिति विदुर्जानते । किमनेनोक्तं भवति? अस्मिन् शरीरे द्विप्रकारा प्रतिपत्तिरेव स्थिता सर्वदेहिनामहन्तया, इदन्तया च । तथा च 'अहं ब्राह्मणो यज्ञदत्तः' इत्यादिना देहमहन्तया व्यवस्यन्ति[5], कदाचित्[6] 'ममेदं शरीरम्' इतीदन्तया सर्वदेहिनः[7] व्यवस्यन्ति; अतोऽव्यवसायिता । प्रमाता तावत्कश्चिदत्र विद्यत एव । यश्चांशः प्रमातृतया प्रतीयते, स क्षेत्रज्ञो जीवश्चेतन इति प्रतिपत्तव्यः । एवमस्मिन् शरीरे यद्यद्वेद्यतया वेदकैक[8]सम्बन्धमात्रात्प्रतीयते,[9][10] तत् क्षेत्रांशतया वेदितव्यम् । योऽसौ वेदकतया प्रतीयते स क्षेत्रज्ञ आत्मेत्यवगन्तव्यः । एतावत्येव[11] नित्यावहितत्वं शरीरशरीरिणोर्विवेकज्ञानकारणम् । तच्च वेद्यवेदकसम्बन्धमात्रनिबन्धनं[12]सकलपरापरव्यवहाराणामपि सर्वदेहिनां मायानिमीलिततत्त्वदृशां स्वप्नेऽपि नोन्मिषति, यावदीश्वरानुग्रहशक्त्यैव सा तत्त्वदृक् येषां[13] नोन्मीलिता तेनानुगृहीत एव विषयोऽस्य ज्ञानस्येति तात्पर्यम्[14], यत उक्तम्—तद्विदः केचनैव योगिनस्तं विदुरिति ॥

---

१. IO and BN[1] विधं
२. IO omits तं
३. IO तद्विधः
BN[1] तद्विदः
४. BN[1] क्षेत्रज्ञस्य रूप
५. IO व्यवसन्तः
६. BS[2] omits कदा...अतो
७. BS[2] omits this word.
८. IO omits यत्
९. BN[1] omits वेद...मात्रात्
१०. BN[1] adds एतावद्वेदसंबन्धकमात्रात् प्रतीयते
११. IO एतावदेव
१२. BN[1] निबन्धसकल
१३. BN[1] and BS[2] तेषां
१४. IO तात्पर्यार्थः

नैनु परमार्थत एक एव प्रमाता प्रतिपादितः; प्रतिक्षेत्रं च पृथक्पृथक् वेदकप्रतीतिरबाधिता व्यैवस्थितेति स्वसिद्धान्तविरोधभ्रान्तिं परिहर्तुमाह—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तद् ज्ञानं मतं मम ॥ २ ॥

इह वेदकत्वमात्रमेकमव्यभिचौर्यसाधारणमात्मनो लैक्षणमुक्तम्। अतः परस्परभिन्नानां क्षणिकनानावस्थाजुषां वेद्यानां शरीराणामेव भिन्नरूपत्वं व्यवस्थितम्, न तु वेदैकत्वमात्रतयैव तदधिष्ठायकत्वेन व्यवस्थितस्य पारमार्थिकस्यैकस्य वेदकस्यात्मनो नानात्वमस्ति, सर्वदेहगतत्वेऽपि वेदकैकलक्षणाव्यभिचारात्। या तु प्रतिशरीरं जात्यवच्छेदेन पृथक्प्रतिपत्तिः, तदचिन्त्येश्वरमायाशक्तिविलसितमेव। अतस्तद्व्युदासार्थमेव चायमुपदेशः प्रबुद्धान् प्रत्यर्जुनमुखेनोच्यते। सर्वक्षेत्रेषु चतुर्दशविधभूतसर्गभेदेनावस्थितेष्वपैरिसङ्ख्येयेषु शरीरेष्वेकमेव मां क्षेत्रज्ञं परमात्मानं जानीहि। यथैकक्षेत्रगतनानावयववेदकैत्वेनैव क्षेत्रज्ञप्रतीतिर्मायादशायामवस्थिता, तथा समस्तशरीरवेदकत्वेनैकः पारमार्थिकोऽहमेव क्षेत्रज्ञः; ततश्चैवंविधयोः क्षेत्रक्षेत्रज्ञयोर्यद् ज्ञानं सम्यक्प्रतिपत्तिः, तदेव मम ज्ञानत्वेनाभिप्रेतम्, न तु सांख्यादिप्रतिपादितयोः शरीरशरीरिणोर्विवेकज्ञानमात्रं तात्त्विकं ज्ञानमिति तात्पर्यम्॥

---

१. BN[1] न परमार्थत एव प्रमाता
२. BN[1] व्यवस्थितेरिति
३. IO चार्यमाचरणमात्मनोपलक्ष
　BS[3] चरणमाचरणमात्मनो
४. BN[1] उपलक्षणं
५. IO वेदकमात्रे तथैव
६. IO and BS[1] परि
७. BS[3] कत्वेनैकक्षेत्र
८. BN[1] सात्त्विकज्ञानं
　BS[1] तात्त्विकज्ञानं

इदानीं नानादर्शनभेदेन व्यवस्थापितनानारूपस्यापि क्षेत्रस्य वेद्यत्वमात्रसामान्यलक्षणाभेदात्[1] कांचिदेव दर्शनक्रियामाश्रित्य तत्स्वरूपे[2] प्रतिपादयितव्ये वेदाद्यागमप्रसिद्धसाङ्ख्यप्रक्रियासमाश्रयणेन प्रतिपादयिष्यमाणक्षेत्रस्य स्वरूपमुपक्षेप्तुमाह—

तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्[3] ।
स च यो यत्[4]प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ॥ ४ ॥

तत् क्षेत्रज्ञज्ञेयं[5]तयोपक्रान्तम्, क्षेत्रं यत् यदभिधानमित्यर्थः । तथा यादृग्यादृशेन प्रकारभेदेन स्थितं तत् सङ्क्षेपेणावधारय । तस्मिंश्च क्षेत्रे यद्वस्तु विकारि विशिष्टकार्य[6]करणत्वाद्विकारवत् विकारसंयुक्तं तदपि शृणु । तथा यतश्च विकारिणो यद्विकारभूतं वस्तूपपद्यते तदपि शृणु । तथा स[7] च क्षेत्रज्ञ[8] एवमेव यो यत्पर्यायो यत्स्वभावो यादृशश्च तत्सर्वं संग्रहेणोच्यमानमवधारय । अस्य[9] वस्तुनः श्रुति[10]स्मृतिप्रसिद्धत्वप्रतिपादनार्थमाह—ऋषिभिः स्मृतिभिर्बहुधा बहुप्रकारं तत्र तत्र स्मृतिशास्त्रेषु[11] गीतम्; तथा छन्दोभिर्विविधैर्वेदशाखाभेदेन नाना[12]रूपैः, अत एव

---

१. IO लक्षणभेदात्
२. IO रूपमेव प्रतिपादितव्यम् । वेदा
३. IO यः
४. IO यत्प्रभावस्ते
   BN[1] यत्प्रभावश्च
५. IO omits ज्ञेय
६. BS[2] कार्यकारण
७. All except BS[1] omit सः.
८. IO and BN[1] क्षेत्रक्षेत्रज्ञः
९. BN[1] and IO यस्य यस्य
१०. All except BN[1] स्मृतिश्रुति
११. IO शास्त्रे
१२. IO omits नाना...भेदेन

पृथक्पृथक् प्रकरणभेदेन गीतम्; ब्रह्मसूत्रशब्देन रहस्यभागो वेदस्य वेदान्तसंज्ञ[1] उच्यते; तस्य यानि पदान्यवान्तरवाक्यानि तैर्हेतुमद्भिरुपपत्तिसंयुक्तैर्विनिश्चितं विशेषेण कृतनिश्चयम्। एवं वेदवेदान्तस्मृतिप्रसिद्धत्वमनेन वक्ष्यमाणस्य क्षेत्रादि-प्रतिपा[2]दकस्यार्थस्य प्रोक्तम्। [3]तत्र यत् क्षेत्रं यश्च क्षेत्रज्ञ इति [4]यदुक्तम्, [4]तत्र शरीरं य[5]श्च तद्ज्ञः स क्षेत्रज्ञ इति प्रागेवोक्तम्॥

[6]स्वरूपं त[7]योर्मन्यमानो यादृगित्यादिना शिष्टं वक्तुमाह—

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः[8] ॥ ५ ॥

इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

एतन्महाभूतादिवस्तु[9]समुदायात्मकं क्षेत्रं विका[10]रसंयुक्तम्, विकारग्रहणात् विकृतिभूतसंयुक्तमपि संक्षेपेण कथितम्। तत्र महाभूतशब्देन व्यापकत्वादिमहत्वे सति तन्मात्राण्येवोक्तानि वेदितव्यानि, यतः श्लोकार्धेन का[11]रणभूतं पदार्थचतुष्टयं

---

१. IO संज्ञकस्यातीतस्य यानि
२. BN[1] स्वप्रतिपादिक
३. IO omits तत्र...प्रागेवोक्तम्
४. BS[1] तत्र क्षेत्रं शरीरं वेदकः क्षेत्रज्ञः इति
५. BN[1] omits यश्च तद्ज्ञः सः
६. BS[2] adds अनयोः
७. IO यत उत्पद्यमानो
८. All except BS[2] गोचरः
९. IO वस्तुसंप्रकाशात्म
१०. IO विकारसंयुक्त अनन्तविकार-संयुक्त अनन्तविकारव्यापकत्वादि महत्त्वे सति
११. BN[1] करण

संगृहीतम् । तत्राहङ्कारः अस्मीति प्रत्ययः अस्मिताशब्देन क्वचिदुक्तः; बुद्धिः निश्चयात्मकं ज्ञानं महत्तत्त्वमिति प्रसिद्धम् । तथाव्यक्तं गुणत्रयात्मकं[1] प्रकृतिः । एतानि चत्वारि कारणभूतानि स्थूलादिक्रमेण निर्दिष्टानि । तानि च पृथिव्या-[2] दीनां भूतानां तन्मात्राणि कारणमहंकारः तैजसवैकारिक[3]भूतादिभेदेन त्रिविधः । तत्र तैजसत्वेन मनसः[4] कारणम्; वैकारिकत्वेनेन्द्रियाणाम्; भूतात्मत्वेन तन्मा-त्राणाम्—इत्यहङ्कारस्य त्रिविधगुणात्मकस्य कारणत्वम् । केचित्तु अहङ्कारतन्मात्र-लक्षणस्य षट्कस्य महत्तत्त्वं कारणमाहुः । केचिदहङ्कारस्यैवेति । बुद्धेः[5] कारणत्वात् बुद्धेश्च गुणत्रयरूपा प्रकृतिरव्यक्तशब्देनोक्ता कारणमिति कारण[6]भूतवस्तुचतुष्टय-प्रतिपादनेन यद्विकारीति प्रक्रान्तोऽर्थो[7] निर्णीतः । अत्र हि अव्यक्तं स्वाधि-कारापेक्षया मूलकारणम्; अहंकारश्च बुद्धिकार्यः[8] सन्निन्द्रियादिकारणम्[9]; तन्मा-त्राणि अहंकारकार्याणि, बुद्धिकार्याणि वा पृथिव्यादिकारणमिति चतुर्णामपि[10] कारणत्वाद्विकारित्वम् । अथ कार्यवर्गं प्रतिपादयितुमाह—इन्द्रियाणि पञ्च; बुद्धी-न्द्रियाणि श्रोत्रादीनि प्रसिद्धानि; पञ्च वागादीनि कर्मेन्द्रियाण्यपि; तत्त्वं मन-श्चैकादशं संकल्पविकल्पात्मकं पञ्चेन्द्रियगोचरः—इतीन्द्रियगोचरशब्देन यद्यपि शब्दादयो भूतगुणा उच्यन्ते, तथापि महाभूतानां स्वगुणोपलब्धिद्वारेण स्वरूपो-पलब्धिरिन्द्रिय[11]गोचरशब्देन स्थूलान्येव भूतान्युक्तानि । यतः षोडशकोऽसौ

१. IO and BS² त्मका
२. BN¹ पृथिव्यादिभूतानां
३. BN¹ वैकारभूतात्मकभेदेन
४. IO मनः कारणं
५. BN² and BS² बुद्धेः कारणत्वं
IO बुद्धिः कारणं
६. IO कारणवस्तु
७. IO अर्थोन्नीतः
८. BN¹ and IO बुद्धिकारणः
९. IO omits कारणं.. पृथिव्यादि
१०. BS² त्रयाणामपि
११. IO and BS² लब्धेन्द्रिय

विकारवर्गः ; एष च कर्म एव, न कारणम्। एवं साङ्ख्यदर्शनप्रसिद्धा तत्त्व-चतुर्विंशतिरेषा शरीरभावेन व्यवस्थिता क्षेत्रज्ञज्ञेयत्वात् क्षेत्रमित्युक्ता। इदानीं तु दर्शनान्तरेषु तत्तत्प्रक्रियाविशेषसमाश्रयणेन यथा[१] पदार्थसंग्रहः कृतो भवति, तस्य सर्वस्य प्रमेयत्वानतिक्रमादस्मत्पक्षे क्षेत्रज्ञत्वमेवेति[३] प्रतिपादयितुमाह—इच्छे-त्यादि। कैश्चिदिच्छाद्वेषसुखदुःखादय आत्मधर्मत्वेनाभ्युपगताः। ते वेद्यत्वात् क्षेत्रमेव। तथा शरीरेन्द्रियादिसमुदायसङ्घातः चेतना, चेत्यतेऽनयेति कृत्वा ; ज्ञानं बुद्धिवृत्तिर्धृतिः[४]। प्राणादिधारणानिबन्धनमहंप्रत्ययः प्रत्ययः[५]। एतत्सर्वं[६] वेद्यत्वानतिक्रमात् क्षेत्रमेवेत्यस्य श्लोकार्धस्य तात्पर्यम्। अत्र तु प्रमात्रैक-स्वभावस्यात्मनः कथं प्रमेयत्वम्, कथं वा[२] सर्वव्यवहारानुपपत्तिसिद्धानुसन्धातृ-लक्षणस्वरूपस्य तस्यासम्भवः[७], कथं वा देशकालाद्यनवच्छिन्नमहिम्नो यावज्जीव-भावित्वम्? इत्यादिनानाप्रवादप्रतिक्षेपाय बहवो विपश्चितः कृतपरिश्रमाः। सा च तत्त्वस्य साध्यसाधनावस्थासन्दिग्धबुद्धित्वदशानुत्तीर्णपुरुषविशेषविषयतया[८][९] अस्यां सिद्धान्तकथायामीश्वरानुग्रहाविर्भूतविशुद्धश्रद्धादिगुणपिशुनितसंशयादिदोषाभावनिर्म-लप्रज्ञोपदेश्यपुरुषविशेषविषयायामुपन्यस्तायां[१०] मतिकालुष्यादृते न किंचित्प्रयोजनम्। न हि स्वसिद्धं सुरसमाहारविशेषमास्वादयन्तं पुरुषं प्रति तत्साधनावस्थाप्रति-पादनेन प्रस्तुताहारवैरस्यजननमात्रातिरिक्तः कश्चिदुपकारः संभवतीत्यकाण्डपाण्डित्य-

---

१. BN[1] एष कारणमेव सा-
२. IO and BS[2] add यथा
३. BS[2] क्षेत्रत्वमेव प्रति
४. BN[1] वृत्तिधृतिः
५. BN[1] and BS[2] omit प्रत्ययः
६. BN[1] च
७. All except BS[1] असद्भावः
८. BN[1] साध्यमानावस्था
९. BN[1] बुद्धिदशानु
१०. BS[2] स्ताया मति

प्रकटनताण्डवा[1]डम्बरविडम्बितात्मनां मार्गो[2] न गन्तव्यः। तदेवं यथोक्तप्रक्रान्तं[3] क्षेत्रलक्षणं तावत् निर्णीतम्। इदानीम् "स[4] च यो यत्स्वभावश्च" इत्युपक्रान्तक्षेत्रज्ञ-लक्षणं निर्णीतव्यतया अवशिष्यते[5]; स च—"क्षेत्रज्ञं चापि मां विद्धि" इति मुख्य एवैकः क्षेत्रज्ञो विवक्षितः। तस्य "ज्ञेयं यत्तत्प्रवक्ष्यामि" इत्यादिना वितत्य लक्षणं वक्ष्यति॥

संप्रति तु तादृशस्य क्षेत्रज्ञस्य उक्तस्य च क्षेत्रस्य[6] यद् ज्ञानं सम्यक् संवेदनं[7] मुख्यज्ञानतया[8] प्राक्प्रतिपादितम्, यादृग्गुणद्वारेणाभिव्यज्यते, सोऽभि-व्यक्ति[9]हेतु[10]र्गुणगण एवं[11] ज्ञानमिति प्रतिपादयितुमाह—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥ ७॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥ ८॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९॥

---

१. All except BN[1] ताण्डवा दुर्भरविड
२. IO मार्गोऽनुगन्तव्यः
BN[1] मार्गोऽनुमन्तव्यः
BS[2] मार्गोऽनुसर्तव्यः
३. IO यथोक्तक्रमोपक्रान्तं
BS[2] यथोपक्रान्तं
४. IO समयो
५. BN[1] विशिष्यते
६. BN[1] omits this word.
BS[1] and IO क्षेत्रज्ञस्य
७. BN[1] वेदनं
८. IO मुख्याज्ञज्ञानतया
९. IO सोऽपि व्यक्ति
१०. BN[1] हेतुः
११. IO and BN[1] एवं

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

संघर्षादिदोषप्रसक्तस्य प्रसिद्धपुरुषान्तरानुष्ठीयमानसदाचारानुकरणे सङ्कल्पोपमान इत्युच्यते । स चानुष्ठितस्यापि सदाचारमात्रस्य संसारश्वभ्रपातफलतामावहन्नासुरसर्गभाग्जनविषयो महान् दोषः । तथा चोक्तम्—

"मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ।
चत्वार्येतान्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ॥" इति ।

चत्वार्यग्निहोत्रादीनि वस्तूनि आश्रमधर्मरूपाणि शास्त्रचोदितत्वादनुष्ठीयमानान्यभयं तावत्कुर्वन्ति । मानादिदोषदूषितचित्तत्वेन कृतानि प्रत्युत महद्भयमनुष्ठातुः फलन्तीत्यपि ह्यस्य श्लोकस्यार्थः । एवंविधो मानो विद्यते यस्य स मानी; तस्य भावो मानित्वम्, तदभावोऽमानित्वम् । शुद्धसङ्कल्पत्वं नाम गुणो ज्ञानाभिव्यक्तिहेतुत्वात् ज्ञानमित्युक्तम् । एवमेवादम्भित्वम् । दम्भो हि मानादिदोषदूषितसङ्कल्पत्वे सति दृष्टमात्रफलतया सदाचारानुष्ठानं व्याजेन धर्माचरणमित्यर्थः । स विद्यते यस्यासौ स दम्भी मिथ्याचारः, तस्य भावो दम्भित्वम्; तदभावो

---

१. IO संघत्वादि
२. BN[1] प्रयुक्तस्य
३. BN[1] सकल्पोमान
४. BS[2] धीतयुत
५. IO मानज्ञानं
६. IO सगुणे

अदम्भित्वम्, सम्यक् क्रियानुष्ठानमित्यर्थः। तदपि पूर्ववत् ज्ञानमेव। तथा हिंसा हि शास्त्रीयनियमनैरपेक्ष्येण द्वेषलौल्यादिप्रयुक्तस्य प्राणिनां जिघांसा; तदभावोऽहिंसा; निसर्गतः सर्वभूतेषु करुणार्द्रचित्तत्वादनभिद्रोहः, तदपि ज्ञानम्। तथा क्षान्तिः परैरभिद्रुह्यमानस्य सत्यपि प्रतीकारसामर्थ्ये स्वभावतः प्रशान्तचित्तत्वात् वाङ्मनःकर्मभिरविकारित्वम्; सापि हि ज्ञानम्। नन्वहिंसाक्षान्त्योर्यदि ज्ञानत्वम्, तत्कथं तत्त्वज्ञानोपदेशविषयत्वेन परिगृहीतस्यार्जुनस्य यज्ञसङ्ग्रामादिक्रियानुष्ठाने नियुज्यमानस्य तद्गता हिंसा क्षान्तिश्चानुष्ठेयत्वेनोपदिष्टा? उच्यते। यथोक्तज्ञाननिष्ठस्यावश्यानुष्ठेयैस्स्वकर्मभावेनावस्थिता हिंसा क्षान्तिश्च हिंसैव न भवति; न चाक्षान्तिरित्युक्तमेव प्राक्। आर्जवमृजुत्वम्; यथाहृदयं वाङ्मनःप्रवृत्तिहेतुरकुटिलता, यदेवं प्रशंसन्ति "सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्" इति; तदपि ज्ञानम्। एवं पञ्चैते धर्माः परमेश्वरानुग्रहसूचकदैवसर्गभाजो नान्यस्य प्रक्षीयमाणसदसत्कर्मसन्तानस्य संसारस्वरूपप्रत्यवेक्षायोग्यप्रज्ञस्य सहसैव जायन्ते। ते च तद्धृदयकृतप्रतिष्ठस्य ज्ञानतरोन्मूलसन्ततिस्थानीयास्तद्युक्तस्य पुरुषस्यानुग्रहशक्त्या कल्याणमित्रसंस्तवादिना प्रेर्यमाणस्याचार्योपासनं सद्गुर्वाराधनं नाम धर्मो य उत्पद्यते स ज्ञानम्; ज्ञानतरोः किलासौ

१. IO omits सम्यक्...तथा
२. IO and BN[1] हिंसा नाम सा
३. BN[1] दियुक्तस्य
४. IO अविदारित्वं
५. IO omits क्षान्त्योः...हिंसा
६. IO नुष्ठेयो
७. IO omits this word.
८. IO बाह्यात्मनः प्रवृत्ति
९. BS[2] सूचकाः
१०. IO प्रत्यवेक्ष्य योग्य-
११. BN[1] स्थापनीयाः

[1]छन्दस्स्थानीयो [2]धर्मः षडन्तरीयकाः [3]शाखाः प्रधानकल्पा अमी धर्माः प्रादुर्भवन्ति। तद्यथा[4]शास्त्राधिगमपुरःसरः संस्कारविशेषः, तथा हेयोपादेयवस्तुविषयो विवेको विज्ञाततत्त्वरूपस्य हेयापवर्जनपूर्वमुपादेया[5]नुष्ठानौन्मुख्यत्वमाचार्योपासनात्। एवंविधधर्मोदये सति पल्लवपुष्पस्थानीयाः शौचादयो जन्मादिदोषदर्शनपर्यन्ता धर्मविशेषाः समुन्मिषन्ति। तत्र विशिष्टक्रियानुष्ठाने प्राप्ताधिकारस्य कल्याणहेतुषु तासु तासु क्रिया[6]स्वासक्तचित्तस्य तद्गुणैः सम्बध्यमानस्य प्रथमः शौचो[7] नाम गुणः, सर्वक्रियाणां तत्पूर्वकत्वाच्च। तच्च द्विप्रकारं बाह्यमाभ्यन्तरं च। तत्र बाह्यमधिकारिदेशकालाद्यवस्थापेक्षया नियतेतिकर्तव्यतया मृज्जलादिना दुष्टद्रव्यगन्धलेपाद्यपासनपर्यन्ता मृजा; आभ्यन्तरं [9]बाह्यनिवृत्तौ सत्यां शुद्धोऽस्मीति निर्विप्लवा प्रतिपत्तिः, यां भावशुद्धिमित्याहुः। एतच्च शौचं कायवाङ्मनोनिर्वर्त्यानां तपःस्वाध्यायध्यानादीनां गुणान्तराणामुपलक्षणं वेदितव्यम्। अथ स्थैर्यं संशयादिदोषनिवृत्त्यानुष्ठेयेष्वर्थेष्व[10]चं[11]चलता। तस्मिंश्च सत्यात्मविनिग्रह आत्मनोऽन्तःकरणस्य निषिद्धाद्विषयाद्विनिग्रहो नियमनम्। ततश्चेन्द्रियार्थेषु क्षयातिशयादिदोषदर्शनाद्वैराग्यं रागदोषरहितत्वम्। तत्प्र[12]कर्षसमासादनात् सत्त्वान्तरेषु गुणेष्वपि पर्यवस्यति। तस्मिंश्च तादृशे गुणे सत्यनहङ्कार ईदृशोऽस्मीति दुरभिमानाभावः।

शौचमिति च भिति (?)... [handwritten margin note, partly illegible]

---

१. IO स्कन्धस्थानीयः
२. BN[1] स्थापनीयोऽसौ धर्मः
३. IO omits शाखाः...धर्माः
४. IO, BN[1] and BS[2] शास्त्रापि-
५. BN[1] अनुष्ठानोन्मुख
६. IO omits क्रिया...सर्व
७. BS[2] शौचं
८. IO मज्जनादिना
९. BN[1] द्युपासन
१०. IO adds नाम
११. IO अचलता
१२. BN[1] प्रकर्षमासादयत्सत्त्वा-
IO प्रकर्षं समासादयेत्

यदि वा शरीरादावहं[1]मस्मीति प्रत्ययनिवृत्तिः। ततश्च जन्मादिदोषप्रभवस्यैव दुःखस्य महादोषस्यानुदर्शनम् पृष्ठतो[2] निरूपणम्। तद्यथा गर्भवासादिनिरतिशयक्लेशानुभवादिकं जन्मनो दुःखम्, प्राप्तशरीरग्रहस्यावश्यं[3]भावि मरणदुःखम्, तथा सति शरीरे वार्धक[4]रोगादिदुःखमिति। शरीरित्वं[5] नामादिमध्यान्तावस्थासु दुःखमयमेवेति विवेकहर्म्या[6]धिरूढः स्वपरविषयत्वेन विवेक्तुं क्षमः, यथोक्तम्—

"प्रज्ञाप्रासादमारुह्य अशोच्यः[च्यान्] शोचतो[7] जनान्।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति॥" इति।

तथाविधस्य च स्वर्गादिफलेषु क्रियाविशेषेष्वसक्तिरसङ्ग औदासीन्यम्। तथा दृष्टसुखहेतुषु सुतकलत्रभावनादिष्वनभिषङ्गः सर्वस्वग्रहपरित्यागः[8]। एतां च दशां प्राप्तस्येष्टानिष्टोपपत्तिषु प्रियाप्रियपदार्थप्राप्तिषु सतीषु समचित्तत्वं हर्षशोकादिविकार[9]रहितान्तःकरणत्वम्। एवमेव तस्यां ज्ञानतरोर्नानाविधपल्लवपुष्पस्थानीयायां गुणसामग्र्यां निवृत्तायां फलस्थानीया मयि भक्तिः उपासा। कीदृशी? अव्यभिचारिणी निरपाया। केन हेतुना? अनन्येन योगेन[10] अन्येन यथा-

---

१. IO omits अहं
२. IO and BN[1] add अनु
३. BS[2] श्यभावि
४. IO and BN[1] omit वार्धक
५. BN[1] शरीरत्वं
६. IO विवेकधर्माधिरूढः
This is noted as an alternative reading in BS[2].
BN[1] विवेकधर्महर्म्याधिरूढः
This too is noted as an alternative in BS[2].
७. BN[1] शोच्यते
IO and BS[1] शोचते
८. BS[1] and BS[2] त्यागजातां
९. BN[1] विकास
१०. IO योगेन यथा-

प्रतिपादितमत्स्वरूपव्यतिरिक्तेन वस्तुना योगः सम्बन्धोऽन्ययोगः[1]; तदभावोऽनन्ययोगः, तेन। किमुक्तं भवति? सर्वभावानां मत्स्वरूपाव्यतिरिक्तत्व[2]दर्शनं ज्ञानतरोः फलभूता मुख्या मद्भक्तिः। सा हि चतुर्थी ज्ञानित्वरूपा भक्त्यवस्था। यथोक्तं प्राक्—"ज्ञानी त्वात्मैव मे मतः[3]" इति। तस्यां च सत्यां विविक्तदेशसेवित्वं विविक्तदेशस्य[4] तादृशनिरुत्तरभक्तिरसामृतास्वाद[5]विघ्नकारिचेतनाचेतनवस्तुरहितस्य गिरिगुहापुण्यसरित्पुलिनगुप्तगृहादिदेशस्य सेवित्वं भजनशीलता तद्विपरीतायां[6] जनसंसदि चित्तव्युत्थानहेतुलोकसभायामरतिरुद्वेगः, तत्परिहरणमित्यर्थः। तथा अध्यात्मज्ञाननित्यत्वम् अध्यात्ममात्मनि यत् ज्ञानं परमात्मस्वभावसंवेदनं[7] तन्नित्यमव्यभिचारि यस्य स तथा, तस्य भावस्तत्त्वम्; तस्मिंश्च सति तत्त्वज्ञानार्थदर्शनं तत्त्वस्य परमात्मस्वरूपलक्षणस्य परस्य भावस्य ज्ञानं बोधः स्वसंवेदनानुभवः; पूर्वेण[8] पदेन ज्ञानस्य सिद्धिं कल्पयता[9] उत्तरेण सिद्धत्वमेव प्रतिपादितम्। स एवार्थः प्रयोजनं फलं यस्येति तस्य[10] दर्शनं साक्षात्कारो निरुत्तरा सिद्धिरित्यर्थः। एते विविक्तदेशसेवित्वादयस्तत्त्वज्ञानार्थदर्शनान्ता धर्माः फलभूताया भक्ते रसस्थानीया इत्येतावती गुणसामग्री ज्ञानमिति[11] प्रोक्तम्। स्पष्टोऽर्थः। अत उक्तात् गुणसमूहादन्यथान्येन विपरीतेन[12] प्रकारेण[13] मानित्वदम्भित्वादिना यत्

१. IO संबन्धोऽसौ योगः
२. IO and BS[2] रिक्तत्वे
३. IO मतम्
४. IO omits विविक्त...देशस्य
५. All except BN[1] स्वाद
६. IO विपरीततायां
७. IO omits परमात्म...तत्त्वस्य
८. IO पूर्वेण ज्ञानस्य सिद्धिः
९. IO and BN[1] कल्पते
१०. IO omits तस्य
BN[1] omits इति तस्य
११. BN[1] ज्ञानमित्यर्थः। स्पष्टोऽर्थः
१२. IO omits this word.
१३. IO adds विपरीतं

स्थितं तत्सर्वमज्ञानं ज्ञानविपरीतं वेदितव्यम् । एतच्च[1] पुरस्ताद्देवासुरसर्गकथन-प्रसङ्गेन पुनरपि ज्ञानाज्ञानलक्षणं वक्ष्यति ॥

एवंविधेन च ज्ञानेन—

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**

ज्ञेयं ज्ञातव्यं यथोक्तेन ज्ञानेन फलतयावस्थितं[2] परमात्मलक्षणं वस्तु तदिदानीं प्रवक्ष्यामि, तत्स्वरूपं प्रकर्षेण कथयिष्यामि; यद्बुद्ध्वा[3] अमृतमविनाशि स्वरूपमश्नुते व्याप्नोति ॥

नन्वनन्य[4]संवेद्यस्य सर्वसंवेदकस्वभावस्य कथमिदन्तावसेयवस्त्वन्तरवत् ज्ञेयत्वेन व्यपदेशः कृतः? सत्यं न तस्य वस्तुनः परमार्थतो ज्ञेयता संभवति; किंतु आरुरुक्षावस्थायां ज्ञातृज्ञानज्ञेयविभागात्मकत्वादुपचारेण ज्ञेयशब्दस्तत्र प्रव[5]र्तते, न तु वास्तवेन रूपेण तस्य ज्ञेयता विवक्षिता । यतः 'सोऽयमहम्'[6] इति स्वात्मत्वेन प्रत्यवमर्श एव तस्य[7] ज्ञानम्, तद्वत् 'अहमिदं वेद्मि' इति व्यतिरेकेण तस्यैकस्यानुभवितृत्वमात्रलक्षणस्य तत्त्वस्यावगमः संभवति ॥

---

१. IO ततश्च
२. BN[1] वसितं
३. IO यद्बुद्ध्या. This is noted as an alternative reading in BN[1].
४. IO and BN[1] न त्वन्य
५. IO प्रवर्तितुं शक्यः न तु
६. IO सोऽहमहमिति
७. IO omits तस्य ज्ञानं

तथाविधान्येव तद्विशेषणान्याह—

अनादिमत्परं ब्रह्म न सन्नासत्त[सत्तन्नास]दुच्यते ॥ १२ ॥

सर्वतः पाणिपादं[1] तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं[2] गुणभोक्तृ च ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्[3] ॥ १५ ॥

अविभक्तं विभक्तेषु[4] विभक्तमिव संस्थितम्[च स्थितम्] ।
भूतभर्तृ च तद् ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्[5] ॥ १७ ॥

किं तद्ज्ञेयमिति स[6]संज्ञं निर्दिशति—परं ब्रह्मेति । परमार्थतः सर्वस्य वस्तुनो ब्रह्मरूपत्वे स्थिते यज्ज्ञेयतया संप्रत्याभासते, तदपरम्; य[7]त्तु ज्ञातृमात्र-

---

१. All except BS[1] पाणिपादान्तं
२. BN[1] निर्गुणो
३. BS[2] यत्
४. IO च भूतेषु This is an alternative reading in BS[2].
५. BN[1] and BS[2] वेष्टिंत
६. IO omits स
BN[1] ज्ञेयसंज्ञमिति निर्दि
७. All except IO यत्तज्ज्ञातृ

स्वरूपम्, तत्परं ब्रह्मेत्युक्तम्। कीदृशं तत्? अनादिमत्। इदं[१] वेद्यं वस्तु सर्वक्षेत्रज्ञसाधारणं पृथिव्यादिरूपं[२] विषयतया व्यवस्थितम्; तथा प्रतिक्षेत्रज्ञं शरीरतया व्यवस्थितम्; उभयरूपतया[३] प्राक्प्रतिपादितं कारणापेक्षतया सर्वमादिमत् आगमापायधर्मकर्तृत्वादिकोट्यवच्छिन्नमपि[४] तद्विपरीतं तत्कारणान्तरनिरपेक्ष[५]सद्भावमनादिमत्परं ब्रह्मेत्युक्तम्। अन्यच्च कीदृशम्? न सत्। इह यदिन्द्रियैर्बाह्याभ्यन्तरैरिदमिति गृह्यते, तन्मायीयैः प्रमातृभिः सदिति प्रतिपद्यते; ब्रह्म[६] तु प्रमात्रैकस्वभावत्वात्सर्वेन्द्रियगोचरभूतं तथा सन्न भवति; न चैवमसत्तदुच्यते; यत एवमपि सत्त्वेन प्रतिपन्नस्य सर्वस्य वस्तुनस्तथावभासकत्वात्तदेव सद्भावकारणम्, कथमसदिति वक्तुं शक्यम्? अत एव तस्य परमार्थसदेकप्रमातृरूपस्य विश्वरूपत्वं[७] प्रतिपादयितुमाह—"सर्वतः पाणिपादं[८] तत्" इत्यादिना। सर्वेषां क्षेत्रज्ञानां यानि पादादीनि[९] कर्मेन्द्रियाणि, यानि[१०] च[११] चक्षुःश्रोत्रादीनि बुद्धीन्द्रियाणि तत्तत्क्रिया[१२]ज्ञानसाधनत्वेन व्यवस्थितानि, तान्यसाधारणकर्तृज्ञातृशक्तेरेकस्यैव तस्य[१३] विश्वात्मनः[१४] शक्तिभेद इति तात्पर्यम्। यत आह—

---

१. IO सदिदं वेद्यवस्तु

२. IO रूपविषय

३. IO omits रूप

४. BS[3] त्वादन्तं ततश्चान्तकोटयवच्छिन्नमपि is noted as an alternative reading.
IO त्वादिकोटयवच्छिन्नमतचान्तकोटयवच्छिन्नमपि
BN[1] त्वादवच्छिन्नं तच्चान्तकोटयवच्छिन्नमपि

५. All except BN[1] तु कारणा-

६. BN[1] ब्रह्मत्वमात्रैक
IO ब्रह्म तु सर्वैकस्वभाव

७. BN[2] रूपं

८. BN[2] and BS[2] पादान्तमित्यादिना

९. IO and BN[1] पदादीनि

१०. IO omits यानि

११. IO and BN[1] omit च

१२. BN[1] क्रियासाधन

१३. All except BS[2] add एव

१४. IO स्वात्मनः

"सर्वमावृत्य तिष्ठति" इति; एकमेव तत्त्वं सर्वमिदं जगत्[1] कर्तृतया ज्ञातृतया च व्याप्य वर्तते इति। अत एवाह—"सर्वेन्द्रियगुणाभासम्" इति; यानि नानाक्षेत्रज्ञसम्बद्धत्वेनावभासमानानि सर्वाणि बाह्याभ्यन्तराणीन्द्रियाणि, तेषां शब्दादिविषयावभासक[2]त्वादयो ये गुणा धर्मास्तानवभासयति प्रकाशयति, यत्[3]त्तथोक्तम्। स्वयं तु सर्वेन्द्रियवर्जितम्; न हि तस्य मायावभासितावच्छिन्न[4]स्वरूपक्षेत्रज्ञवन्नियतेन्द्रियाधीनं ज्ञानमित्यर्थः। तथा असक्तं विशुद्धचिन्[5]मात्रैकस्वभावव्यवस्थितत्वाद्वेद्यरूपेण प्राकृतेन प्रपञ्चेन मिश्रीभूतम्। अथ च [6]सर्वभृत् सर्वं बिभर्ति धारयति यत्; तत्र हि तत्त्वे[7] वेद्यव्यतिरिक्तस्य भावेऽपि सर्वमिदमवस्थितम्, तद्विना कस्यचिदपि स्वरूपलाभाभावात्। अत एव निर्गुणं गुणेभ्यः सत्त्वादिभ्यः प्रकाश[8]प्रवृत्तिनियमात्मकेभ्यः [9]सर्वसुखदुःखमोहवृत्तिभ्यो निष्क्रान्तं तेभ्योऽत्यन्तव्यतिरिक्तं[10]स्वरूपम्; न हि ब्रह्म अनित्यसुखाद्यात्मकं भवति, केवलमाकाशमिव सूर्यातपरजस्तिमिरादिभिस्तैस्तैर्गुणैरत्यन्तासंस्पृष्टस्वरूपमपि, तत्त्वविचारशून्यैः प्रमातृभिस्तद्वत्तया गृह्यते[11]। वस्तुतस्तु गुण[12]भोक्तृत्वाद्गुणाननुभवितृतया

---

१. IO जगत्कर्तृकया
   BN[1] जगत्कर्तृज्ञातृतया व्याप्य
२. BN[1] भासत्वादयो ये गुणधर्माः
३. IO and BN[1] यत्तु तथोक्तं
४. IO वच्छिन्नं स्वरूपक्षेत्रज्ञनियतेन्द्रियातीतं ज्ञानं
५. IO मात्रकस्वभाव
६. IO यः सर्वत्र तत्सर्वं
७. IO तत्त्ववेदे व्यति
८. IO प्रकाशवृत्तिः
९. IO सुखमोहादिवृत्तिभ्यः
   BS[1] सर्वदुःख
   BS[2] सुखमोहवृत्तिभ्य
१०. IO रिक्तं स्वरूपं
११. BN[1] गृह्यन्ते
१२. BN[1] omits गुण
   IO गुणानुभवितृ

भुङ्क्ते, न तु तैस्तत्स्वरूपमाश्रीयते[1]। अत एवानवच्छिन्ननिजमाहात्म्य[2]विश्वरूप[3]त्वादाकाशमिव घटादीनां सर्वभूतानां चराचराणां बहिर्ज्ञेयभावे[4]नान्तर्ज्ञातृभावेन चावभासमानमपि परमार्थतः सामान्यसंवित्स्वभावमेवैकं[5] तत्त्वं व्यवस्थितम्। देहादिप्रत्ययव्यवधानमात्रकृतो बाह्याभ्यन्तरव्यपदेशः। अत एवाह नित्यनिश्च[6]लस्वभावमात्रप्रतिष्ठितत्वादचरं गतिधर्मविवर्जितम्। सर्ववस्तुवेदकतया नित्यप्रसृतशक्तित्वाच्चरं गमनशीलमिव। तथा इदन्तावसेयसर्ववस्तुविलक्षणस्वरूपत्वात्परमसूक्ष्मम्; तत्तस्मा[7]च्च सौक्ष्म्यात्कारणादविज्ञेयमित्यनवधार्य[8]स्वरूपम्; अत एव सर्वप्रमातॄणां ज्ञेयत्वाभावात् दूरस्थमतिविप्रकृष्टम्; अथ च तद्विना कस्यचिदपि ज्ञानस्य कर्मणो वाप्य[9]नुपपत्तेः सर्वेषामन्तिकेऽभ्यं[10]शे स्थितम्। तथा विभक्तेषु देवमनुष्यतिर्यगादि[11]ष्वेत् परस्परभिन्नेषु वस्तुषु सामान्यसंविदात्मकत्वेनाविभक्तमभिन्नैकस्वरूपम्; अथ च विभक्तवच्च स्थितम्, भेदेनावभासमानत्वात्। तथा[12] तत्तत्त्वं भूतभर्तृ सर्वभूतानां तस्य[13] तस्य रूपस्यावस्थित्येकहेतुत्वाद्धारकम्। तथा ग्रसिष्णु संहारशक्तियुक्तत्वात् ग्रसनशीलम्। तथा प्रभविष्णु उत्पादनहेतुत्वात् स्थितिप्रलयसर्गकारण-

---

१. IO तत्तत्स्वरूपमाद्रियन्ते
BN² तत्तत्स्वरूपमाद्रियन्ते
२. IO माहात्म्यं विशुद्धाकाशमिव
३. BN¹ omits रूप
४. BN¹ भावान्त
५. IO एकतत्त्वं
BN¹ एकं तत्तत्वं
६. BN¹ and BS² निर्मल
७. IO omits च
८. BN¹ अवधार्य
९. IO वाप्युपपत्तेः
१०. IO and BN¹ omit this word; but BN¹ reads त्यागे instead.
११. IO तिर्यगादिषु भिन्नेषु
BN¹ तिर्यगादिषु यत्परस्पर
१२. IO तथा तत्त्वं भूत
BN¹ तथा तत्त्वं भूतं
१३. IO and BN¹ omit तस्य

मित्यर्थः। तथा ज्योतिषां [1]सौरादीनां प्रकाशकानां प्रकाशहेतुत्वाज्ज्योतिः प्रकाशकम्; [2]तानि हि जगद्भावप्रकाशकान्यपि संवित्प्रकाशप्रकाश्यानि; अत एव तमसः परमुच्यते। यद्यत्परप्रकाश्यं तत्तत्स्वयंप्रकाशात्मकत्वात्तमोरूपम्; तस्मात्[3]तत्त्वं परं सर्वप्रकाशैकरूपत्वात्प्रकृष्टं [4]व्यतिरिक्तं वा। तथा ज्ञानज्ञेयं ज्ञानेन यथाप्रतिपादितस्वरूपेणोपायेन ज्ञेयम्, आत्मतया प्रत्यभिज्ञेयमित्यर्थः। यतो ज्ञानगम्यं ज्ञानं विना तथा विषयीकर्तुमशक्यम्, परमार्थतस्तु सर्वस्य कस्यचित्प्रमातुर्हृदि हृदये संवे[5]त्तृतया विशेषेण स्थितम्, सि[6]द्धावस्थायां तथा स्वसंवेदनसंवेद्यत्वात्॥

उपसंहरति---

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ १८॥**

इत्येतावता ग्रन्थेन क्षेत्रं महाभूतानीत्यादि[7]ना प्राकृतभावमयं शरी[8]रम्; तथा अमानित्वादितत्त्वज्ञाना[9]र्थदर्शनान्तधर्मरूपं ज्ञा[10]नम्; तथा—"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु" इत्यादिना मुख्यक्षेत्रज्ञरूपं ज्ञेयं तत्त्वमिति प्रधानं प[11]दार्थ-

---

१. All except BS[1] add सात्त्विक
२. IO न हि
३. BN[1] omits तत्
४. IO द्युति
५. IO संवेद्यं तथा विशे-
　BN[1] संवेद्यतया विशे
६. IO and BN[1] सिद्ध्यवस्थायां
७. BN[1] दिना कृत-
८. IO शरीरे
९. IO and BN[1] omit ज्ञानार्थ
　BS[2] notes a similar alternative.
१०. IO omits ज्ञानं
११. IO यदर्थत्रय

त्रयमेतदुक्तम् । यतो मद्भक्तो[1] मदनुग्रहादेव मत्सपर्यापरः एतत्त्रितयं[2] ज्ञात्वा मद्भावाय[3] मत्स्वरूपसमापत्तये उपपद्यते उपपन्नः समर्थो भवति ॥

अथ यदेतदत्र ज्ञानमुपदिष्टम्, तेन प्रकृतिक्षेत्रज्ञपरमात्मलक्षणं पदार्थत्रयं[4] निर्णीतमिति संग्रहेण क्रमेण प्रदर्शयितुमाह—

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ १९ ॥**

यैषा प्रकृतिः सप्तमे विषयभावेन, संप्रति शरीरभावेन विभज्य प्रतिपादितस्वरूपा, तथैव यः पुरुषो विषयित्वेन शरीरित्वेन प्रतिपादितः, एतावेवान्योन्यसम्बन्धत्वेन[5] अनादी[6] विद्धि जानीहि । न ह्येतयोरेकतासम्बन्धस्य[7] पूर्वकोटिरुपलभ्यते[8][9] । ज्ञानात्तु यथोक्तस्वरूपादन्तकोटिरस्त्येवानयोः । एवमनादित्वं सम्बन्धस्येत्यत्र तात्पर्यम्; न तु समशीर्षिकया नित्यत्वप्रतिपादनम्, यतः प्रकृतेर्वेद्यत्वादुदयव्ययधर्मयोगित्वे[10] सति प्रवाहेनित्यत्वम्[11] । पुरुषस्य[12] तु परमार्थतः

---

१. BN[1] मद्भक्ताः
२. BN[1] and BS[1] परजातत्रितयं
३. BN[1] adds मत्स्वरूपाय
४. IO परमार्थत्रयं
५. BS[1] संबद्धेन
६. IO omits this word. BS[2] notes it in the margin.
७. IO एतयोरेवं सं- BN[1] एतयोरेव सं-
८. IO omits स्य पूर्व...संबन्ध
९. BN[1] रूपा लभ्यते
१०. IO उभयधर्म
११. IO प्रवाहे
१२. IO omits पुरुषस्य...नित्यत्वं

संविद्रूपत्वात् कूटस्थनित्यत्वम् । अत एवाह—विकारान्महदादीन्, गुणांश्च सत्त्वादीन् वेद्यैकस्वभावान् प्रकृतिसंभवान् प्रधानकारणाद् जानीहि ॥

एवं सामान्येन प्रकृतिपुरुषयोः स्वरूपं प्रतिपाद्य इदानीं यथा प्रकृतिः प्रतिपुरुषं नानाशरीरभावेन सम्बद्धा, पुरुषश्च प्रतिशरीरं नानाक्षेत्रज्ञभावेन यथा सम्बद्धः, तथा प्रतिपादयितुमाह—

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

कार्यं महाभूताद्यात्मकम्, कारणानि बाह्याभ्यन्तराणीन्द्रियाणि इति शरीराद्यात्मकः समूहः कार्यकारणशब्देनोच्यते । तस्य कर्तृत्वे तावन्मात्रे निविष्टाहंप्रत्ययरूपे प्रकृतिरव्यक्तं हेतुः कारणम् । सा हि शरीरात्मना व्यवस्थिता सती तन्निविष्टाहंप्रत्ययनिमित्तम् । तथा सुखादीनां वेद्यत्वात् भोग्यानामात्मनो यो भोक्तृत्वाभिमानः तत्र वेदकस्वभावत्वात्पुरुष एव कारणम् ॥

सति पुरुषप्रत्यये सुखदुःखात्मनो भोग्यस्य विषयत्वम् । पुरुषस्य च विषयित्वव्यपदेशः कुतः ?

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

---

१. BN[1] स्वभावान्
२. IO and BN[1] omit प्रति
३. IO omits आदि
४. BS[1] मात्रविनष्ट

यस्मात् प्रकृतौ नानाकार्यकारणात्मकशरीरभावेन परिणते प्रयत्ने स्थिते[1] मायावशात् तावन्मात्राहङ्कारावष्टम्भेन[2] वर्तमानः प्रकृतेः संभूतान्[3] गुणान् सत्त्वादीन् सुखाद्यात्मना[4] परिणतान् भुङ्क्ते, वेदकत्वेन विषयीकरोति। यतो महाभूतगुणाः शब्दादयः सुखाद्यात्मना वेद्यत्वमापन्नाः पुरुषस्य विषयत्वव्यपदेशहेतवः, एवं शरीर-शरीरिभावेन विषयविषयिभावेन[5] च प्रकृतिपुरुषयोरविवेकजः सम्बन्धः। ततश्चास्य पुरुषस्य गुणेषु शरीराद्यात्मना[6] विषयात्मना च यः सङ्गोऽहङ्कारममकारात्मको[7] दृढः सम्बन्धः, तत्सतीषु सत्त्वगुणप्रधानासु असतीषु च रजस्तमःप्रधानासु योनिषु उत्पत्तिकारणमूर्तिषु[8] यानि जन्मानि पुरुषादिरूपतया संभवाः तेषु गुणसङ्ग एव कारणं हेतुः प्रकृतिपुरुषविवेकाभावमात्रनिमित्ता संसारिता पुरुषस्येत्यर्थः॥

यतः परस्य तत्त्वस्य देहेऽस्मिन् नानापुरुषसम्बन्धिनि द्विधा स्थिति-रित्याह[9]—

**उपद्रष्टानुमन्ता[10] च भर्ता[र्ता][11] भोक्ता महेश्वरः।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥ २२॥**

महेश्वरः सर्वपुरुषैश्वर्यापेक्षया महानत्युत्कृष्टः ईश्वरः प्रभुः परब्रह्मशब्दा-परपर्यायः स्वमायोद्भावितपुरुषैर्व्यपेक्षया[12] देहेऽस्मिन् उपद्रष्टा[13] भर्तानुमन्ता भोक्ता

१. BN[1] स्थितो
२. BN[1] ष्टम्भो वर्त
३. BN[1] समुद्भूतान्
४. IO omits सुखाद्या...शब्दादयः
५. IO विषयि
६. IO and BN[1] omit आदि
७. IO omits मम
८. IO omits कारण...एव
९. BN[1] इत्यर्थ इत्याह
१०. IO उपदेष्टा
११. IO कर्ता भोक्ता
१२. IO पुरुषापेक्षया
१३. IO उपदेष्टा भोक्तानुमन्ता कर्ता चेति

चेति व्यवस्थितः । यतः प्रकृत्यादिमहदहङ्कारात्मना दृश्यत्वेनोपस्थापितमर्थं पुरुषः पश्यति इत्युपद्रष्टासावित्युच्यते । तथा दृश्यमेव शरीराद्यहन्तया परामृषन् भर्ता कार्यकारणस्याहन्तया धारकः स एव व्यपदिश्यते । तथा प्रकृत्या मतं ज्ञातं वेद्यत्वेन प्रतिपन्नम्, सुखादिविषयभूतं वस्तु पृष्ठतः पुरुषो मन्यत इत्यनुमन्ता स उच्यते ; ततश्च तस्यैव भोक्तृत्वव्यपदेशः । इत्थं साङ्ख्यप्रक्रियया पुरुषस्य शरीरित्वविषयित्वारोपो य उच्यते तत्र विवेकाभावः कारणम् ; स च माया-निबन्धनः । यदा तु विद्योदयविवेकजज्ञानाविर्भावः, तदासावेवं पुरुषः परमात्मेत्यभिधीयते, प्रबन्धतो यथाप्रतिपादिताद्वयचिदेकस्वभावब्रह्मस्वरूपतयोच्यते ॥

एवं प्रकृतिपुरुषेश्वरविवेकलक्षणस्य ज्ञानस्य फलमाह—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

यो योगी एवमुक्तेन प्रकारेण पुरुषं नानाक्षेत्रज्ञरूपतयावस्थितं प्रकृतिं च गुणैः सुखाद्यात्मकविषयभावेनावस्थितैः सह वेत्ति स तत्त्वत्रयपरमार्थवेदित्वात् सर्वेणापि प्रकारेण तत्तद्वर्णधर्मात्मकेन तत्तदाश्रमधर्मात्मकेन वा वर्तमानः, तद-

---

१. IO उपदेष्टा
२. BN[1] कर्ता
३. IO परावाकारकः व्यप-
४. IO and BN[1] प्रक्रमो यथा पुरुषस्य
५. IO omits विषयित्व
६. IO विद्योदयाभिषेकज
७. IO तदा सखेव पुरुषः
८. IO एनं
९. BS[1] and BS[2] स यथा
१०. IO omits पुरुषं...प्रकारेण
११. BS[1] च

नुष्ठातृतया तिष्ठन्नपि भूयः पुनर्नाभिजायते न संसारी भवति, यथोक्तेन ज्ञानाग्निना संसारप्रसवहेतूनां बीजस्थानीयानां कर्मणां दाहात् । यथोक्तम्—

"बीजान्यग्न्युपदग्धानि नरो हन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैः नात्मा संपद्यते पुनः ॥"

स्पष्टार्थः ॥

अत्र च आत्मनो दर्शने यथोक्तं ज्ञानमेव यद्यपि मुख्यतयोपायः, तथाप्युपायन्तरैर्गौणैरप्यसौ कथंचिद् गम्यते इत्याह—

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

केचित् सहजसिद्धतत्त्वज्ञाना निरुत्तरपरमेश्वरानुग्रहभाजः ध्यानेनात्मानं पश्यन्ति, यथोक्तब्रह्मस्वरूपानुसरणेन साक्षात्कुर्वन्ति । अत एव केन क पश्यन्तीत्यभेदप्रतिपादनार्थमाह—आत्मनात्मानं पश्यन्तीति । किमुक्तं भवति?

---

१. IO पुनर्न जायते
२. IO and BN[1] omit यथोक्तं... स्पष्टार्थः This is read in the margin in BS[2].
३. IO प्रमुख्य
४. IO. The verse found at the end of the commentary on the previous verse is written here.
५. All except BN[1] चैवं
६. IO omits this ardha.
७. BN[1] स्वरूपतानु IO स्वरूपतयानु
८. IO omits इति
९. BS[1] and BS[2] add आत्मनि

यत्राधिकरणे हृदयादौ ध्यानं कुर्वन्ति, येन चान्तःकरणेन कुर्वन्ति, यच्च ध्यानेनोपलभन्ते, तत्सर्वं ब्रह्मरूपतयैव प्रत्यवमृषन्तीति तात्पर्यम्। तथा च पराकाष्ठात्मज्ञानस्य संप्रत्येतावतीं योग्यतामप्राप्ता अन्ये साङ्ख्येन प्रकृतिपुरुषविवेकरूपेण ज्ञानेनात्मानं पश्यन्ति ; अन्ये योगेन पातञ्जलादिप्रणीतविधिना समाधिना ; अन्ये तु कर्मयोगेन यथोक्तज्ञाननिष्ठतया स्वकर्मानुष्ठानरूपेण समाधिनात्मानं पश्यन्तीत्यात्मज्ञानस्य परापरभेदेन प्रकारद्वयमुपन्यस्तम् ; तत्र ध्यानेनेत्यादिना शुद्धज्ञानमात्रस्वरूपतया उक्तः ; सा च कर्मयोगिनामारूढावस्था, यथोक्तम् "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति। कर्मयोगेनेति समुच्चयात्मकत्वेऽपि कर्मप्रधाना कर्मयोगिनामारुरुक्षावस्था, "आरुरुक्षोर्मुनेर्योगम्" इत्यादिना प्राक्प्रतिपादितेति द्विप्रकारः पर उपायः, साङ्ख्येन योगेन च इति। अपरः स्थूलभेदप्रतिपत्तेरनुमानात्। अन्ये पुनः द्विप्रकारेऽप्युपाये संप्रति योग्यताभावात् एवं यथोक्तेन प्रकारेणात्मानमजानन्तस्तावन्मात्रश्रद्धादिगुणयोगादन्येभ्यो दृष्टानुमितं तत आप्तेभ्यः श्रुत्वावधार्य आगममात्रशरणास्तमुपासते भजन्ते। तेऽपि तथाविधाः श्रद्धालक्षणस्य सिद्धिबीजस्य क्षेत्रीभूताः सन्तो मृत्युमतितरन्त्येव अविनाशिनमात्मानं क्रमेण प्रतिपद्यन्ते, सत्यार्थाभिनिवेशित्वात्। यतः सत्यमसत्यं च द्वयमपि संभवति, विद्यानुगृहीताः सत्यमभि-

---

१. IO and BN[1] add तेन
२. IO प्राप्तः
३. IO omits पश्यन्ति...त्मानं
४. BN[1] omits रूपेण
५. IO रूपायोक्ता
६. IO omits यथो...वस्था
७. BS[1] and BS[2] प्रधानाः
८. IO तावद्रसत्वादि
९. BN[1] सत्यं चासत्यं च

निविशन्ति[1] मायामोहितास्त्वसत्यम्; ते च तादृशमेव फलमाप्नुवन्ति। तथा[2]-चोक्तम्—

"अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्।
[3]मृत्युमापद्यते मोहात् सत्यत्वेऽमृतमाहितम्॥" इति।

उक्तमेवार्थं स्फुटतरं प्रतिपादयितुम[मा] अध्यायपरिसमाप्तेरा[4]ह—

यावत्संभ[5]वति किंचित्[किंचित्संभवति] सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ॥ २६॥

या[6]वत्परिमाणमपरिसङ्ख्येयं [7]किंचित्सत्त्वं केनचिद्भेदेन युक्तं प्राणिजातं संभवति विद्यते, तत्सर्वं क्षेत्रस्य शरीरभावेन परिणतायाः प्रकृतेः, तथा क्षेत्रज्ञस्य नानाशरीर[8]त्वाभिमानेन व्यवस्थितस्यात्मनः संयोगादनादिप्रबन्धप्रवृत्तादन्योन्यसम्बन्धाद्धेतोर्विजानीहि। किमुक्तं भवति? अ[9]स्यापर्यवसानस्य नानाचराचरभावरूपस्य प्रपञ्चस्याविवेचितस्वरूपतया प्रकृतिपुरुषयोः श[10]रीरशरीरिभावेनैकतया सम्बन्धो निमित्तम्; अतः शरीरशरीरिणोर्विवेक आद्यः प्रकारः॥

---

१. BN[1] निविशन्ते
२. BN[1] यथा
३. IO मृत्युं संपश्यते
४. IO प्तेरेवाह
५. IO संजायते
६. BS[1] and BS[3] यावद्यत्
७. IO कंचित्
८. BN[1] शरीरित्वा
९. IO अस्य पर्यव-
१०. BS[1] omits शरीर

यथाप्रतिपादितस्य ज्ञानस्य तेन शरीरभावपरिणतप्रकृतिविविक्तस्वरूपे सुविज्ञाते आत्मनि वेदकैत्वमात्रैकलक्षणाव्यभिचारात्[1] सर्वक्षेत्रज्ञप्रतिपत्तिभ्रमनिवृत्तेः[2] योगी परमात्मनः स्वाभाविकैकत्वदर्शनात् सम्यग्दर्शी भवतीत्याह—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

सर्वेषु स्थावरेषु[3] जङ्गमेषु च द्विप्रकारेष्वप्यवान्तरभेदादनन्तविशेषेष्वपि[4] भूतेषु समं जन्मादिविकाररहितत्वात् निर्विशेषं कृत्वा, तिष्ठन्तं परमार्थनित्यत्वात् सदा वर्तमानमीश्वरं स्वतन्त्रं परमात्मानं यो योगी पश्यति आत्मत्वेन प्रत्यवमर्शात् साक्षात्कुरुते, स पश्यति; तस्यैव सत्यार्थदर्शित्वात्[5] पारमार्थिकं द्रष्टृत्वम्[6]; तद्व्यतिरिक्तात्मनानात्वदर्शिनः सर्वे मिथ्यादर्शिन इत्यर्थः । कीदृशेषु भूतेषु कीदृशं पश्यति? विनश्यत्सु विनाशान्त[7]जन्मादिविकारभागिषु[8] अविनश्यन्तं वेद-कत्वमात्रादेकस्मात्स्वभावाद[9]प्रच्यवमानम् । स हि तथाविधो योगी समुन्मिषितेन यथोपवर्णितेन[10] ज्ञानमयेन चक्षुषा प्रादुर्भावतिरोभावधर्मसंकल[11]वेद्यांशविविक्त[12]स्वरूपं वेदकैकलक्षणं परमात्मानं सर्वावस्थास्वेकत्व[13]मात्मत्वेन साक्षात्कुर्वन् सम्यग्दर्शन उच्यते; अन्ये तु विपरीतदर्शना इत्यर्थः ॥

---

१. IO वेदकमात्रैक
२. IO वृत्ते योगे
३. BN¹ जङ्गमेषु स्थावरेषु
४. BN¹ अनन्तभेदेष्वपि
५. BN¹ दर्शितत्वात्
६. IO युक्तत्वं
७. BN¹ omits विनाशान्त
८. BN¹ भागेषु
९. IO भावादप्रवस्यमानः
१०. IO यथोक्तवर्णितेन
११. IO and BN¹ add कर्म
१२. IO वेद्यांश
१३. IO एकतत्त्वमतत्त्वेन
BN¹ एकं तत्त्वमतत्त्वेन

स एव चात्मवानिति तत्र हेतुमाह—

**समं पश्यन्[1] हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥**

यस्माद्यथोक्तेन प्रकारेण सर्वत्र प्राकृत[2]भाव[3]मय[4]वेद्यवर्गे समं सामान्य[5]-संविद्रूपतया तुल्यं कृत्वा समवस्थितं स्वभावत एव सम्यक् कृतप्रतिष्ठमीश्वरं प्रभुं परमात्मानं पश्यन् [6]प्रत्यभिजानन् कश्चिदेवात्मना स्वयमेवात्मानं सत्यस्वभावं न हिनस्ति, अप्रत्यभिज्ञानेन सन्तमेव [7]भावं न प्रापयति । किमुक्तं भवति ? य एवं-प्रतिपादितेन ज्ञानचक्षुषा क्षेत्रक्षेत्र[8]ज्ञविविक्तं परमात्मानं न[9] पश्यति, स[10] आत्मघात-युक्तो मुख्यया वृत्त्या । यथोक्तम्—

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेण[11]त्मापहारिणा ॥" इति ।

कश्चैवंविधं परमात्मस्व[12]रूपं पश्यतीत्याह—

**प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥**

---

१. BN[1] यश्यति
२. BN[1] प्रकृत
३. BS[1] and IO समय
४. IO वशे
५. BN[1] omits सामान्य
६. IO omits प्रत्यभि...हिनस्ति
७. IO अभावं
८. BN[1] क्षेत्रज्ञं
९. IO omits न
१०. IO ममात्मघात
११. BN[1] चौरेण
१२. IO त्मानुरूपं

प्रकृतिश्चेतनाचेतनविभागेन परापररूपा प्राक्प्रतिपादितद्विप्रकारा परमेश्वरेच्छावशादेव क्षेत्रक्षेत्रज्ञभावेनानादिना सम्बन्धेन सम्बद्धा सती सर्वमिदं[1] जगच्चित्रं विरचयति। यथा च सप्तमे द्विप्रकारायाः प्रकृतेः स्वरूपं प्रतिपाद्योक्तम्—"एतद्योनीनि भूतानि सर्वाणीत्युपधारय" इति, अस्मिन्नध्याये "यावत्किंचित्संभवति" इत्यादिना श्लोकेनैष[2] एवार्थोऽभिहितः। तदेवंरूपया[3] प्रकृत्यैव केवलया क्रियमाणानि निर्वर्त्यमानानि नानाशरीरसम्बद्धत्वेनावभासमानानि कृत्स्नानि कर्माणि विविधाः क्रिया य आत्मतत्त्वदर्शी पश्यति सम्यङ् निरूपयति, स तादृशो योगी तथा तेन प्रकारेणात्मानं ब्रह्मस्वरूपं सत्यस्वभावं सर्वदा विशुद्ध[4]चिन्मात्रस्वरूपे स्वात्मन्येव स्वप्रतिष्ठं सन्तमकर्तारं परमार्थतः सर्वक्रियासु व्यापृतत्वात्स्वरूपव्यतिरिक्तकार्यनिर्वृतिप्रयत्न[5]रहितं पश्यति। किमुक्तं भवति? यथा क्षेत्रज्ञस्य प्रकृत्यभेदाभिमानेन कर्तृत्वम्, न तथा परमात्मनः। तस्य हि स्वरूपप्रत्यवमर्षमात्रे मुख्या कर्तृता क्षेत्रज्ञ[6]स्य कर्तृत्वोद्भावनेन[7] गौणीति योऽयं कर्तृकार्यव्यपदेशः सर्वो[8] भेदनिबन्धनः, भेदश्च मायामात्रविलसितत[9]:, न वस्तुसत्तामवलम्बते, तत एकस्य तत्त्वस्य व्यतिरिक्त[10]कार्यनिबन्धनं कर्तृत्वं न वास्तवमिति तात्पर्यम्॥

---

१. IO adds अपि
२. BN¹ omits एव
३. IO and BN¹ रूपतया
४. IO omits विशुद्ध
५. BN¹ निवृत्तिप्रयत्न
६. IO and BN¹ ज्ञकर्तृ
७. IO भावेन गौणीति योगः
८. BS² स च IO सर्वभेद
९. IO and BN¹ सितं
१०. IO व्यतिरिक्तादनि

इत्थं च[1] प्रकृतिपुरुषविवेकज्ञानादनन्तरं[2] वास्तवब्रह्मलक्षणैकतत्त्वविषये[3] परं ज्ञानमाविर्भवतीति प्रतिपादयितुमाह—

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

तदा तस्मिन् काले [4]योगी ब्रह्म संपद्यते, यथोक्तपरमात्मनि[5] परमार्थसत्ये एकस्मिंस्तत्त्वे समापत्तिमाप्नोति । कदा ? यदा यस्मिन् काले विवेकज्ञाननैर्मल्यात् सम्यक्प्रकाशमानसर्वगतैकक्षेत्रज्ञस्वरूपो[6] योगी भूतानां चराचराणामनन्तभेदानां पृथग्भावमन्योन्यव्यतिरिक्तत्वमेकस्थं पश्यति एकस्मिन् परमात्मन्यभिन्नसंवित्प्रकाशमात्रे स्थिते[7] तदात्मकत्वेनैव वर्तमानं साक्षात्करोति । किमनेनोक्तं भवति ? प्रकाशपदवीजुषां सर्वभावानां [8]प्रकाशमानतामात्राधीनात्मलाभानां[9] वास्तवीं परप्रकाशैकरूपतां तदानुभवति[10] योगी[11] । यथा च सर्वमेकस्थं पश्यति, तथैव यदा तत एवैकस्मात्तत्त्वाद्विस्तारं[12] नानाभावमयं विभूतिवैतत्यं[13] पश्यति, तदा ब्रह्म संपद्यते । अनेनापि किमुक्तं भवति ? विवेकज्ञान[14]निष्णातनिर्मलमतिर्योगी[15]

---

१. IO and BS[2] add स्थिते
२. BN[1] ज्ञानान्तरं
३. IO तत्त्वविपर्ययपरं BN[1] तत्त्वविषयं
४. IO यो योगी संपद्यते
५. IO omits परमात्मनि
६. IO and BN[1] स्वरूपं
७. IO and BN[1] स्थितं
८. IO omits प्रकाश...लाभानां
९. BN[1] लाभभावानां
१०. BS[1] यदानु
११. All except BS[1] add योगमित्यर्थः
१२. IO स्मात्तस्माद्विस्ता
१३. BS[2] and BN[1] विभूतिचैतन्यं
१४. BN[1] विवेकजज्ञान. This is noted as an alternative reading in BS[2].
१५. IO निर्णीतमतिः. This is noted as an alternative reading in BS[2].

यथैकस्मिंस्तत्त्वे लीनम्, सर्वभेदजातं[1] तदभिन्नं पश्यतीत्यर्थः, तथैव तदेवैकं तत्त्वं विश्वभावभेदात्मना[2] प्रसृतं तस्य सर्वात्मना भावनानात्वप्रतिपत्तिभ्रमो विगलतीत्यर्थः। तथा[3] चायमेवार्थः केनापि विपश्चितानूदितः—

"यत्पृथक्त्वमसन्दिग्धं[4] तदेकत्वान्न भिद्यते।
यदेकत्वमसन्दिग्धं तत्पृथक्त्वान्न भिद्यते॥
यद्यत्पृथक्त्वं[5] सन्दिग्धं तत्पृथक्त्वान्न भिद्यते॥" इति।

तदेवंविधस्य परमात्मनो बहुशोऽप्युक्तं लक्षणं प्रसङ्गात्पुनराह—

**अनादित्वान्निर्गुणत्वात्[6] परमात्मायमव्ययः।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥ ३१॥**

अयं भगवान् परमात्मा परं तत्त्वं स्वभावत एव सर्वत्र सर्वदा चाव्याहत[7]स्वभावः; ततश्च सर्वस्मिन् शरीरे स्थितिरबाधितैव; तथापि च तत्रस्थोऽपि[8] प्रतिपादितैकस्वरूपमात्रे सुस्थितत्वान्न[9] करोति, न भिन्नकार्यनिबन्धनं कर्तृत्वमनुभवति। ततश्च[10] का कथा कर्मफलानुभवस्येति न लिप्यते। यस्मादनादित्वात्

---

१. IO सर्वबीजजातं
२. IO omits विश्व...लतीत्यर्थः
३. IO ततश्च
४. IO. This and the third ardhas are omitted. BS[2] and BN[1] omit this and the next ardha.
५. BS[1] and BS[2] यद्यत्पृथक्त्वमसन्दिग्धं तत्पृथक्त्वान्न भिद्यते
६. IO निर्मलत्वात्
७. IO हतसद्भावः
८. BN[1] and BS[2] तत्स्थोऽपि
९. BN[1] मुक्तितत्वात्
१०. IO तच्च

तत्सर्वकारणत्वात् अत एव निर्गुणत्वा गुणेभ्यः उदयव्ययधर्मकेभ्यो निष्क्रान्तत्वात् तैद्विभक्तस्वभावत्वादव्ययो गुणवद्व्ययेन विनाशरहितः। यद्यप्यनादित्वमव्ययत्वं च क्षेत्रज्ञस्याप्युक्तम्, तथापि तस्य गुणमय्या प्रकृत्या सम्बद्धस्य तत्स्वरूपानुविधायित्वात् तत्तदुदयव्ययधर्मकत्वमुपचर्यते, अविद्योदयात्; परमात्मनस्तूपचारोऽपि नास्ति। अतः क्षेत्रज्ञवन्न तस्य कर्तृत्वम्, न कर्मफलसंयोगः॥

यथा चैतस्य सर्वशरीरस्थत्वेऽपि कर्मफलसंयोगलक्षणकलङ्कसंपर्काभावः, तथोपमानेन दर्शयितुमाह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते॥ ३२॥

यथा सौक्ष्म्यादणीयस्त्वात्सर्वगतं समस्तवस्तुव्यापकं देशकालाद्यनवच्छिन्नमाहात्म्यमाकाशमवच्छिन्नैर्व्याप्यैर्भावैर्न लिप्यते स्वधर्मेण न संयोज्यते, तथैव सर्वत्र सर्वस्मिन् सुरनरतिर्यगाद्यनन्तभेदेऽपि देहे शरीरव्यापकतया व्यवस्थितो नित्यसंनिहितोऽप्ययं परमात्मा तद्धर्मैः सुखदुःखादिभिरुत्पादविनाशादि-

---

१. IO and BN[1] तत्तद्विभक्त
२. BN[1] विनाशेन रहितः
३. IO omits यथा...संयोग
४. BN[1] शरीरस्थोऽपि
५. IO संपर्कभावः
BN[1] संपर्काभावस्तथा
६. IO and BN[1] अविच्छिन्नैः
७. IO and BN[1] संयुज्यते
८. BN[1] शरीरे
९. BN[1] अवस्थितः
१०. IO and BN[1] उत्पादितविना

भिर्वा कर्मफलसम्बन्धित्वाभिमानजन्मभिर्नोपलिप्यते, न संस्पृश्यते। तथा चोक्तं ब्रह्मविदा केनचित्—

"यथैकस्मिन् घटाकाशे रजोधूमादिभिर्वृते।
संयुज्यंते न सर्वाणि तथा जीवैः सुखादिभिः॥" इति।

एवं सर्वात्मना कर्मफलसंपर्काभावेऽप्यनन्यसाधारणप्रकाशकत्वधर्मयोगात् स एवैकः क्षेत्रक्षेत्रज्ञव्यवहारप्रकाशक इत्युपमानान्तरेण दर्शयितुमाह—

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ ३३॥**

यथा येन प्रकारेणायं सकललोकप्रत्यक्षपरिदृश्यस्वभावो भगवान् भास्करः कृत्स्नमखिलं लोकं नानाभावमयं विश्वमेक एवासहायः प्रकाशयति स्वस्वरूपं लम्भयति, तेनैव प्रकारेणायं क्षेत्री सर्वक्षेत्रज्ञव्यापक एकः परमात्मा क्षेत्रं प्रकाशयतीति। किमुक्तं भवति? प्रकाश्यवस्तुनानात्वात्प्रकाशस्य परमात्मधर्मस्य यदि परं नानात्वोपचारः, परमार्थतस्त्वेक एव सकलप्रकाश्यवस्तुप्रकाशकः, प्रकाशत्वमात्रे

---

१. BS[1] and BS[2] संयुज्यन्ते
२. All except BN[1] जीवाः
३. IO सर्वं कर्त्रात्मना
४. BN[1] सर्वलोक,
५. IO लम्भयति
६. BN[1] omits सर्व
७. IO क्षेत्रव्यापकः
८. IO प्रकाशपर
९. BN[1] सकलवस्तुप्रकाश्यवस्तुप्रकाशकः प्रकाशकत्व-
१०. IO प्रकाशः प्रकाशकत्व

चोपमानोपमेयभावो रविक्षेत्रिणोः। यथा हि रविर्भावानां प्रकाशको न[1] तथा[2] क्षेत्री; तथाहि कुतश्चित्कारणाल्लब्धात्मनां घटपटादीनामर्थानां अभिव्यञ्जकत्व-मात्रेण रविः प्रकाशको न जनकत्वेन; क्षेत्री[3] तु प्रकाश्यत्वापादनेनैव तान् जनयति; अतो जनकत्वं तस्येति प्राक् प्रतिपादितमेव ॥

तदित्थंरूपमध्यायेन क्षेत्रक्षेत्रज्ञपरमार्थ[4]लक्षणतत्त्वत्रयनिर्णयमुपसंहरन्नाह—

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

ये योगिन एवमुक्तेन प्रकारेण क्षेत्रस्य शरीरभावेन परिणताया अपरायाः प्रकृतेः[5], तथा क्षेत्रज्ञस्य नानाक्षेत्राहङ्कारावष्टम्भेनावस्थिताया जीवरूपायाः परायाः प्रकृतेरन्तरं[6] विशेषं परस्परविविक्तं स्वरूपं विदुर्जानते। केन? अमानित्वादिना तत्त्वदर्शनपर्यन्तेन ज्ञानेनैव चक्षुषा। न केवलं तयोरन्तरं जानते, यावद्भूत-प्रकृति[7]मोक्षं च ये जानते; भूतात्मिका चेयं[8] प्रकृतिः स्थूला निर्दिष्टा; ततो मोक्षं पुनस्तत्र प्रवेशाभावादात्यन्तिकं बन्धत्यागं ये विदन्ति; किमुक्तं भवति? क्षेत्रक्षेत्रज्ञयोः परस्परविविक्त[9]स्वरूपावगममात्रमागमोपपत्तिपरि[10]शीलनद्वारेण कदाचि-

---

१. IO omits न
२. All except BS[2] add च
३. IO क्षेत्रं तु प्रकाशत्वा
४. BN[1] परमात्मलक्षणं
IO परमार्थलक्षणं तत्त्रयमध्याय-मुपसं
५. IO प्रकृतिः
६. IO and BN[1] अनन्तरं
७. IO प्रकृतिः
८. BS[1] and BS[2] येयं
९. IO विविक्तमुक्तस्व-
१०. IO omits परि...भवति

त्संभवति, न तु तावता प्रकृतेर्मोक्षः प्रभवति ; स हि तद्विभक्तात्मस्वरूपनित्याबहितत्वेनैव भवति ; ततः पृथगुक्तं भूतप्रकृतिमोक्षं चेति ; ते[1] एवंविधाः परं निरुत्तरं तत्त्वं सप्तमे परतरप्रकृतित्वेन प्रतिपादितं[2] परमात्मानं यान्ति प्रतिपद्यन्ते[3], तदभेदलक्षणं परां सिद्धिमधिगच्छन्ति । ओम् ॥

भविभिरखिलैर्नित्यं तापत्रयीपरिशोषिता-
　　त्परमविरसात्क्षेत्राद्भोगो[4] यतः किल भुज्यते ।
चिदमृतघनात्त[5]द्बोऽध्यायात्त्रयोदशतः स्तुतै-
　　र्वचनपृषतैः सिक्तां[6] सूतां विमुक्तिफलश्रियम्[7] ॥

इति श्रीरा[8]जानकरामविरचिते वाक्यार्थान्वयमात्रे
[9]सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
त्रयोदशोऽध्यायः ॥



---

१. BN[1] omits त एवंविधाः
२. IO प्रतिपादयितुं
　BN[1] प्रतिपादितपर
३. BN[1] प्रपद्यन्ते
४. BN[1] and IO भोगी
५. IO तत्त्वोध्याय
६. All except IO सिक्तं
७. IO प्रियाम्
८. BN[1] श्रीमद्राजानकरामकवि-
९. BN[1] adds वाक्यार्थान्वयमात्रे

## ॥ अथ चतुर्दशोऽध्यायः ॥

त्रयोदशाध्यायपरिसमाप्तौ—“भूतप्रकृतिमोक्षं च ये विदुः” इति[1] यदुक्तम्, तत्र भूतादिविकारभावमापन्ना प्रकृतिः किल भूतप्रकृतिशब्देनोक्ता; ततश्च तस्याः कारणभूतं प्रकृत्यात्मकं तत्त्वमस्तीत्युपगतं भवति; तदभ्युपगमे च परब्रह्माद्वैतसिद्धान्तता शास्त्रस्यास्य[2] विरुद्धयते। इह हि नित्यैकचित्प्रकाशात्मकै[3]स्वभावपरामर्शप्रभवपरानन्दलक्षणं तत्तादृक्स्वभावसुव्यवस्थितमात्मतत्त्वं परब्रह्मशब्दाभिधेयमेकमेव परमार्थसत्त्वेनागमोपपत्त्युपलब्ध्[4]विसंवादिसिद्धं प्रवन्दतः प्रतिपादितम्, यस्य “अनादिमत्परं ब्रह्म” इत्यादिना लक्षणं कृतम्। ततश्च प्रकृतिर्नाम द्वितीयं तत्त्वमस्तित्वेन[5] कथं सिद्धयति? किं वा तस्य स्वरूपम्? कीदृशमेवा[6]परब्रह्मस्वरूपेण तत्त्वेन तस्य सम्बन्ध इति येन ज्ञायते, तथाभूतप्रकृतिर्द्विविधोक्ता, शरीरात्मना विषयात्मना च परिणामात्; ततः कथमात्मनो मोक्षः, किमत्यन्तपरिहारेण, अन्यथा वा? तत्राद्यपरिहारस्तावदिह नाभ्युपगतः। तथा चोक्तम्—

“अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥”

---

१. IO इत्यत्र
२. BN[1] omits अस्य
३. IO त्मैक
४. BN[1] उपलब्ध्यवि
५. IO and BN[1] अस्ति तेन
६. BN[1] कीदृशो वा

तथा—

"इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः"

इत्यादि । अनेन शरीरभावपरिणतयाः प्रकृतेरत्यन्तपरिहारेण मोक्षो नाभ्युपगतः । तथा विषयभावेन परिणताया अपि नात्यन्तपरिहारोऽभिमतः, यदुक्तम्—

"रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥"

तथा—

"सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसंग्रहम् ॥"

इत्यादि च । एवं कथं विषयरूपायाः प्रकृतेर्मोक्ष इति येन ज्ञायते तदुभयार्थविषयज्ञानं सूक्ष्मत्वात्प्रकृष्टं तत्र तत्र प्रागुक्तमपि पुनर्वक्तुं प्रतिजानंस्तत्प्रशंसापूर्वं भगवानुवाच—

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यद् ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

उक्तेन रूपेण परं प्रकृष्टं भूयः पुनर्बहुतरं वा ज्ञानानां क्षेत्रज्ञादिविषयाणां मध्ये उत्तमं प्रधानं ज्ञानं प्रकर्षेण कथयिष्यामि । वक्ष्यमाणेन ज्ञानेन पूर्वोक्तानां

१. IO and BN[1] omit न
२. All except BN[1] तदुक्तं
३. All except BN[1] प्रकृतिः
४. IO omits येन
५. IO सिद्धिमुपागताः
६. IO omits प्रधानं ज्ञानं
७. IO पूर्वोक्तानामसम्यक्

सम्यक् प्रतिपत्तिर्भविष्यतीति तेषां मध्ये तस्योत्तमत्वम् । अत एवाह—यद्विदित्वा पूर्वे मुनयः संयमिनः[1] परां सिद्धिं [2]परसमापत्तिलक्षणां प्रकृष्टां फल[3]सम्पत्तिम् इतः संसारात् प्राप्ताः ॥

यतोऽस्य ज्ञानस्यायं प्रभावः—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
[4]सर्गेऽपि नोपजायन्ते प्रलये न व्य[5]थन्ति च ॥ २ ॥

इदं व[6]क्ष्यमाणं ज्ञानमाश्रित्य सुगृहीतं [7]कृत्वान्येऽपि योगिनो मम साधर्म्यं मद्भावाभेदं प्राप्ताः सन्तः एतज्ज्ञानशून्यक्षेत्रज्ञान्तरवत् सर्गप्रलययोरपि नोत्पादविनाश[8]व्यपदेशभाजो भवन्ति, पारमार्थिकनित्य[9]त्वाभिव्यक्तेः ॥

अथैतत् ज्ञानं वक्तुमाह—

मम योनिर्महद्ब्रह्म तस्मिन् [10]गर्भं द[11]दाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

---

१. IO and BN[2] add सर्वे एव
२. BN[1] परमापत्ति
३. IO and BN[1] फलनिष्पत्तिं
४. All except BN[1] सर्गेऽपि
५. BN[1] व्यथन्ति
६. BN[1] omits वक्ष्यमाणं
७. IO भूत्वान्येऽपि
BS[1] and BS[2] कृत्वान्योऽपि
८. BN[1] omits व्यपदेश
९. IO नित्याभिव्यक्तेः
१०. BS[1] and BS[2] सर्गं
११. IO दधामि

यदेतत् भूतप्रकृतिकारणभावेन व्यवस्थितं तत्त्वं पर[1]ब्रह्मणो भिन्नत्वेनाशङ्कितं त[2]त्तस्मात्परमार्थतो न भिन्नम्, ब्रह्मैव तत्; किंतु महत्, तदपेक्षया स्थूलम्; यतो वेद्यतया परामृष्यमाणं मम परब्रह्मस्वरूपस्य जगद्भावक्रीडनकोत्पा[3]दनादिकारणत्वाद्योनिः तत्तस्मिन्। परमार्थतो हि योनिभूते[4] ब्रह्मण्यहं गर्भं ददामि, संविल्लक्षणस्ववीर्यसंक्रान्तिं करोमीत्यर्थः। किमनेनोक्तं भवति? यथोक्तलक्षणपरब्रह्मस्वरूपं परामृशन् प्रकृतिलक्षणं तत्त्वमवभासयामि, तस्येदन्ता[5]यामपि चित्प्रकाशानुप्रवेशं विना प्रकाशमानत्वाभावात् ब्रह्मस्वरूपत्वम्, व्यवच्छिन्नवेद्यस्वरूप[6]त्वात्तु स्थूलत्वमिति सकलजगद्भावभेदैक[7]हेतुभूतेदन्तात्मकं महद् ब्रह्म मम जगत्सिसृक्षारसिकस्य योनिस्थानीयम्। अत ए[8]वाह—सर्वभूतानां चराचराणां समस्तानां प्राणभृतां ततस्तस्मादिदन्तया परामृष्यमाणात्स्वभावादेव संभव उत्पत्तिः। तदेतदत्यद्भुतरूपत्वं पा[9]रमेश्वर्या मायाशक्तेः सुप्रबुद्धावसेयपरमार्थमनेन प्रतिपादितम्, यन्मनागपि स्वरूपप्रच्यु[10]त्यभावे सतीत्थं नानाजगद्भावप्रपञ्चरूपतयावभासमा[11]नत्वम्। एतच्चैवंविधमाश्चर्यरूपत्वं गर्भीकृत्य स्वरूपं प्राक् प्रतिपादितम्—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मा[12]यामेतां तरन्ति ते॥" इति

---

१. IO परं
२. BS[1] and BS[2] omit तत्
३. IO उत्पादनाधिकरणत्वात्
　BN[1] उत्पादनाधिकरणात्
४. All except IO add हि महति
५. BN[1] इदन्तयापि
६. BN[1] रूपत्वात् तत्स्थूल
७. BN[1] भेदक
८. BN[1] and IO omit एव
९. BN[1] पारमैश्वर्य
१०. All except IO प्रच्युताभावे
११. IO मानमेतच्च
१२. BN[1] मायामेतां तरन्ति

अथ लौकिकार्थरूपेण[1]गर्भीकरेण[2] योन्यादिशब्दप्रयोगोऽत्र यः कृतः, तमेव स्फुटीकर्तुमाह—

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

सर्वयोनिषु समस्तेषु भावाभिव्यक्त्यधिकरणभूतेषु क्षेत्रेषु स्त्र्याद्याश्रितेषु[3] या मूर्तयो जरायुजत्वादिचतुरुत्पत्तिप्रकारैश्[4]चतुर्विधस्थानभेदेनाकृतयो भूतानां संभवन्त्युत्पद्यन्ते, तासां सर्वासां यथाप्रतिपादितस्वरूपं महद्ब्रह्मेदन्तासामान्यलक्षणं[5] प्रकृत्यात्मकं योनिः मुख्यमभिव्यक्त्यधिकरणम् । तस्यां च योनौ संविल्लक्षणस्य बीजस्य स्ववीर्यस्य[6] प्रदानादहं पिता । यथा[7] कश्चित् ब्राह्मणादिपुरुषो[8] भार्यात्वेन परिगृहीते वनिताक्षेत्रे सन्तानोत्पादनाय वीर्यमवसृजन् गर्भमादत्ते, न च[9] रूपान्तरमासादयति, एवमहं स्वरूपादप्रच्युत एव यथोक्ते महति ब्रह्मणि जगद्भावहेतुं संविल्लक्षणं बीजमवसृजामीति स्वरूपाप्रच्युतिर्मात्रे[10]ऽपि तत्त्वेनात्मनोऽधिकरण[11]मात्रत्वेन[12] योनित्वेन स्थूलस्य ब्रह्मणो रूपणं[13] नानाभावहेतुत्वे बीजेन चिदंशस्य निरूपणमिति । यथा ह्यधिकरणभूतां योनिमन्तरेण सन्तानाभिव्यक्त्यभावः

---

१. IO रूपेण
२. BN[1] करण
३. IO स्त्र्यादिश्रितेषु
४. IO प्रकारैः
५. IO लक्षणप्रत्यात्म
BN[1] लक्षणप्रकृत्यात्म
६. BN[1] वीर्यप्रदा-
७. BN[1] यतः
८. All except BN[1] आदिः पुरुषो
९. BN[1] omits च
१०. BN[1] मात्रे पितृत्वेन
११. IO आत्मनः कारणमात्रेण
१२. BS[3] मात्रत्वयोनित्वेन
१३. BN[1] निरूपणं IO रूपं

पुरुषवीर्यस्य,[1] एवमिदन्तापरामर्शमात्रस्वरूपस्थूलब्रह्मात्मकप्रकृतिमन्तरेण सिसृक्षोः परमेश्वरस्य जगद्भावक्रीडनको[2]द्भवचिल्लक्षणस्य[3] वीर्यस्येत्यर्थः। एवमिदमिति परामृष्यमाणं स्वरूपमेव प्रकृतिः, न वस्त्वन्तरं किंचित्। तस्या[4]परस्य ब्रह्मणः प्रकाश्यप्रकाशकभावलक्षणः सम्बन्धः। स च प्रकाशाद्वैतं[5] विना न घटते, प्रकाश्यस्य प्रकाशरूपतामन्तरेण तथा स्वरू[6]पलाभाभावादिति प्रकृतिविषयं तावत् ज्ञानमुक्तम्॥

इदानीमेवं[7] लब्धजन्मनस्तस्याः शरीरादिभावेन व्यवस्थितभूतादिविकाररूपायाः कथं निर्मोक्ष ईत्यभेदार्थविषयं[8] ज्ञानं निर्णीयते। यत्र यैषा प्रतिपादितस्वरूपा प्रकृतिः, सा शरीरविषयभावेनाभासमानैः स्वविकारैः प्रकृत्यादिभिश्च देहिनं बध्नाति,[9] येन तत्परिहारादेव ततो निर्मोक्षः स्यात्; किं तु यैः प्रकारै[10]स्ते संवेद्यतामापद्यन्ते, ते प्रकाराः देहिनमहङ्कारममकाराभ्यां निबध्नन्ति। ततस्तेभ्यो निर्मोक्षो भूतप्रकृतिनिर्मोक्षो भवतीति क्रमेण प्रतिपादयितुमाह—

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥ ५॥**

---

१. IO पुरुषरूपस्य
२. BN[1] द्भावनक्री
३. BS[1] द्भावाभावश्चिल्लक्षणस्य
४. BN[1] तस्याः
५. IO प्रकाशत्वेन तं विना
६. BN[1] स्वरूपलाभभावात्
　BS[2] स्वरूपलाभात्
७. All except BN[2] add च
८. IO इत्येतदर्थविषयं
९. BN[1] प्रतिबध्नाति
१०. BN[1] विकारैः

परमार्थतो नित्यत्वादव्ययं विनाशरहितम्; अतश्च जन्मरहितमपि देहिनमात्मानं यथोक्तप्रकृतिसमुत्था गुणाः सत्त्वाद्यभिधाना वक्ष्यमाणस्वरूपा वक्ष्यमाणेन प्रकारेण निबध्नन्ति, विनाशोत्पादकदेहाहङ्कारारोपणधर्मानुविधायित्वादस्वतन्त्रीकुर्वन्ति ॥

कथं[1]मिति तेषां बन्धकत्वेन विभागमाह—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गे[2]न चानघ ॥ ६ ॥

तत्र तेषां मध्ये सत्त्वं नाम गुणो ज्ञानसङ्गेन बध्नाति, नियतविषयं नियतकरणा[3]धीनं यज्ज्ञानं तत्र यः सङ्गः 'इदमहं जानामि' इत्यभिमानेनास[4]क्तिः तल्लीन[5]त्वम्, तेन परतन्त्रीकरोति । तथा सुखसङ्गेन बध्नाति सुखं तत्तद[6]भीष्टविषयप्राप्त्या विषयान्तराकाङ्क्षानिवृत्तिपर्यवसायिनी निर्वृतिः[7] । तत्र[8] सङ्गः 'सुखितोऽहम्' 'सुखं ममास्ति' इति वाहङ्कारममकारावष्टम्भेन तल्लीनत्वं तेन परतन्त्रीकरोति[9] । कुतः? यत एवंस्वभावं[10] तन्निर्मलत्वादा[11]वरकतमोलक्ष[12]णम[13]लविव्यक्तस्वरूपत्वात्प्रकाशकं विषयप्रथाका[14]रणम्, अतो ज्ञानसङ्गेन बध्नाति । अनाम[15]यं रजोविविक्तत्वात्

१. BS$^1$ and BS$^2$ कथमिदं
२. BN$^1$ संघेन
३. IO करणाधानं
४. IO शक्तिः
५. BS$^1$ and BS$^2$ क्तिमुल्लीनत्वं
६. BN$^1$ अभीष्टं
७. BN$^1$ निवृत्तिः
८. IO omits तत्र
९. IO adds हि
१०. BS$^1$ and BS$^2$ add सत्त्वं
११. BN$^1$ अवारक
१२. IO omits लक्षण...अतो
१३. BS$^2$ मलविविक्त
१४. BN$^1$ करणं
१५. IO मयरजो

प्रवृत्तिदुःखात्मकेनामयेन रहितम् । अतः सुखसङ्गेन बध्नाति, सूक्ष्मत्वात् । ज्ञानसङ्गः पूर्वं व्याख्यातः ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्[२] ॥ ७ ॥

रजःसंज्ञं गुणं रागात्मकं सुखाभिलाषरूपं जानीहि । अत एव तृष्णासङ्गसमुद्भवमनादिप्रबन्धप्रवृत्तत्वात्[३] । तृष्णा विषयरसपिपासा ; तत्र सङ्गः[४] तदेकलीनत्वम् ; ततः समुद्भवो जन्म यस्य तत्तादृशं जानीहि । तदेवंस्वभावं रजः कर्मसङ्गेन क्षेत्रज्ञं बध्नाति । कर्मरागप्रयुक्तस्येष्टविषयाहरणानिष्टविषयपरिहारेण प्रवृत्तिः, तत्र सङ्गः, तत्परत्वम् ; तेन नियतकार्यकर्तृताभिमानरूपेण परवशीकरोति[५] ॥

तथा—

तमस्त्वज्ञानजं विद्धि मोहनं[६] सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

तमोलक्षणं पुनर्गुणमज्ञानजं प्रकाशस्वभावसत्त्वगुणप्रविविक्तत्वात्[७] ज्ञानभावप्रभवम्, ततश्च[८] सर्वशरीरिणां मोहनं ज्ञेयविषयाप्रतिपत्तिजननं[९] जानीहि ; तत्तथा-

---

१. BS[1] and BS[2] सङ्घः
२. All except IO देहिनां
३. IO प्रारब्धवृत्ततृष्णादिविषय
४. BN[1] सङ्गस्तत्र लीनत्वं
५. IO पराकरोति
६. All except BN[1] मोहिनं
७. IO कर्तृगुण
८. BN[1] and BS[2] यतश्च
९. IO विषयप्रवृत्त्यावृत्तिजननं

विधं तमः[1]प्रसादेनोपायोपेयविवेकनिरपेक्षत्वेन ; तथालस्येन प्रवृत्त्यात्मकरजोवि-विक्तरूपत्वात् कार्येष्वनुद्वेगेन ; तथा निद्रया मोहन[2]रूपेण सर्वेन्द्रियशक्तिविरामेण देहिनं बध्नाति नियच्छति, इति गुणत्रयस्य स्वरूपं बन्धप्रकारश्च प्रतिपादितः ॥

इदानीं यस्मिन् स्वकार्ये सति यस्य गुणस्योत्कर्षो भवति, तथा[3] तत्स्वरूपं प्रतिपादयितुमाह—

**सत्त्वं सुखे संजयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥**

सुखलक्षणे सत्त्वगुणकार्ये सति सत्त्वं संजयति, सम्यगतिशयं लभते । एवं रजोगुणकार्ये [4]कर्मणि रजः संजयति । तथा प्रमादे पूर्वोक्तलक्षणे [5]सति तम[6]: संजयति । किं कृत्वा ? ज्ञानं विषयावगममावृत्य तिरस्कृत्य ॥

अथैषामन्योन्याभिभव[7]वृत्तित्वं प्रतिपादयितुमाह—

**रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते ।**
**रजस्सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

रजस्तमसी अभिभूय न्यक्कृत्य सत्त्वगुणो वर्धते । किमुक्तं भवति ? यदा [8]सत्त्वं विवृद्धं बलवद्भति, न तदा तदितरो गुणः स्वकार्यमारभते । एव

१. BN[1] प्रमादेन

२. IO मोहनरूपया. This is noted as an alternative reading in BS[2].

३. IO तदा

४. IO and BN[1] omit this word.

५. IO and BN[1] omit सति

६. IO संजयति तमः

७. BN[1] भवनिवृत्तित्वं

८. IO and BN[1] सत्त्वं वृद्धं

तमःसत्त्वे अभिभूय रजोगुणो वर्धते। तथा रजःसत्त्वे अभिभूय तमोगुणो वर्धते ॥

अथैषां[1] गुणानां विवृद्धत्वव्यञ्जनानि लिङ्गान्याह—

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमश्च तृट्[2]।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ[3] ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च[4] प्रमादो[5] मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

अस्मिन् शरीरे यदा यस्मिन् क्षणे सर्वद्वारेषु श्रोत्रादिषु प्रकाशः स्फुटमसन्दिग्धं कृत्वा ज्ञानं शब्दादिविषयसंवेदनमुत्पद्यते[6], तदा सत्त्वगुणमभिभूत[7]-रजस्तमस्कत्वाद्विवृद्धमुपचितमिति जानीयात्। तथा[8] रजसि प्रवृद्धे अभिभूतसत्त्वतमस्कत्वादुपचिते सति[9] एतानि लिङ्गान्युत्पद्यन्ते। तद्यथा[10] लोभः[11] इष्टविषये

1. IO and BN[1] तथैषां
2. IO and BN[1] अशमः स्पृहा. This is an alternative reading in BS[2].
3. IO कुरुनन्दन
4. IO omits this verse.
5. BS[1] and BS[2] प्रसादो
6. BN[1] and BS[1] उपपद्यते
7. IO अभिभूय
8. IO and BN[1] यदा BS[2] यथा
9. IO omits सति
10. IO omits तद्यथा
11. IO लोभोऽनिष्ट

प्राप्तेऽपि नैव निवृत्तिः, तदाहरणार्थं प्रवृत्तिरुन्मुखीभावः, ततश्चानन्तरमारम्भः क्रिया तदाहरणव्यापार इत्यर्थः। तथा प्राप्तेऽपि कस्मिंश्चिद्विषये विषयान्तर-विषयाणां क्रियाणामशमः शान्त्यभावः। तथा क्षुत्तृष्णाभिलाषो राग इत्यर्थः। तथा तमसि विवृद्धे सत्त्वरजोऽभिभवात् लब्धबले सत्येतानि लिङ्गानि जायन्ते। तद्यथा प्रकाशः सत्त्वगुणाभिभवात् प्रकाशाभावो विषयासंवेदनम्, तथा रजोगुणाभि-भवादप्रवृत्तिः क्रियाभावः। ततश्च स्वयं विवृद्धत्वात् प्रमादमोहावुक्तलक्षणाविति॥

अथैषां वृद्धौ सत्यां प्राणप्रयाणे सति विशिष्टलोकान्तरप्राप्तिनिर्देशैर्न बन्धहेतुत्वमेव प्रतिपादयितुमाह—

यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते॥ १४॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।
तथा प्रलीनस्तमसि मूढयोनिषु जायते॥ १५॥

यदा यस्मिन् काले सत्त्वगुणे विवृद्धे बलवति सति देहभृत् शारीरः प्रलयं याति, विनाशव्यपदेशं लभते, तदोत्तमविदां प्रकृष्टज्ञानानां देवादीनां सम्बन्धिनो

---

१. BS[2] हरणस्य
२. IO and BS[1] प्राप्तोऽपि
३. IO मत्सररजोऽभिभावात् प्रकाशा-भावात्
४. IO omits लब्ध...भवात्
५. BS[1] and BS[2] प्रसाद
६. IO adds हेतुत्वेन
७. IO तमसि लीने तु
BS[1] notes this as an alternative reading.
८. IO गुण
९. IO विनाशं
१०. BN[1] तत्तदोत्तम
IO omits तदो...लभते

लोकान् भुवनानि सत्त्वगुणमयत्वादमलान् विशुद्धान् प्राप्नोति, तत्र जात[1]-व्यपदेशं लभते। तथा[2] रजसि प्रवृद्धे सति[3] प्रलीनः सन् कर्मसङ्गिषु रजोगुण-प्रधानत्वात् तत्तत्क्रियाविशेष[4]परेषु मर्त्येषु जायते। तथैव[5] तमसि प्रवृद्धे प्रलीनः सन् मूढयोनिषु तिर्यक्स्थावरादिषु तमःप्रधानेषु जायत इति॥

प्रयाणसमये सत्त्वादिगुणवृद्धौ[6] फलनिर्देशार्थमाह—

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम्॥ १६॥**

सुकृतस्य सत्त्वविवृद्धौ सत्यां यथाशास्त्रं सम्यगनुष्ठितस्य कर्मणो यज्ञादेः क्रियाविशेषस्य सात्त्विकं सत्त्वगुणादागतं निर्मलं विशुद्धं विशिष्टज्ञानसुखस्वरूपं फलं भवतीति शेषः। रजसस्तु रजोविवृद्धौ सत्याम्, यथाशास्त्रं कर्मण इत्यर्थः, दुःखं फलं संशयादिदुष्टचित्तत्वात् श्रद्धादिगुणविशुद्ध्यभावे यत्कर्म क्रियते तत्प्रवृत्तिलक्षणं दुःखमेव फलतीत्यर्थः। एवमेव तमसो विवृद्धौ सत्यां कृतस्य कर्मणो मोहा[7]दिदुष्टचित्तत्वाच्छास्त्र[8]वैपरीत्येन प्रयुक्तस्याज्ञानं[9] मोह एव फलम्॥

---

१. BS[1] and BS[2] जातस्य व्यप
२. All except IO तदा
३. BN[1] omits सति
४. IO विशेषणपरेषु
५. IO omits तथैव....जायते
६. BN[1] गुणविवृद्धौ
७. BS[1] and BS[2] मेदादि
८. IO शास्त्रविधिवैप-
९. All except BN[1] ज्ञान

संग्रहेणैतदेवाह—

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

स्पष्टार्थः श्लोकः ॥

एतस्य सत्त्वादीनां गुणानां पृथक् स्वरूपसमुदायाचारफलादिभेदप्रपञ्च-प्रतिपादनस्य सर्वास्ववस्थासु तेषां वेद्यैकस्वरूपताप्रतिपादनतात्पर्यं वेदितव्यम् । अस्य च प्रयोजनमाह—

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

स्पष्टार्थौ श्लोकौ ॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

---

१. BS[2] notes मोह as an alternative reading.
२. IO फलानि भेद
३. IO विद्यैक
४. IO विदितम्
५. BS[1] and BS[2] मृत्युमश्नुते

शरीरविषयादिभावेन परिणताः सर्वे प्रकृतिविकाररूपा भावा देहसमुद्भवाः[1]। सति हि देहे शरीरविषयात्मकत्वेन समुद्भवन्तीति तथात्मनैवोपलभ्यतामभिप्रपद्यन्ते। तानेतान् प्रतिपादितस्वरूपान् त्रीन् सत्त्वादीन् गुणानतीत्य वेदकैकस्वभावात् स्वात्मनो व्यतिरेचनेन निस्तीर्य देही[2] क्षेत्रज्ञः तद्व्यतिरेचनादेव शरीरादितो निवृत्ताहङ्कारममकाराभिमानत्वात्[3] शुद्धचिन्मात्रस्वभाव एव प्रतिष्ठितसात्त्विकाहङ्कारो[4] गुणमयशरीरादिभावप्रतिबद्धैर्जन्ममृत्युजरादुःखैरुत्पादविनाशपरिणामक्लेशैर्विमुक्तो विवर्जितः सन्नमृतं परं[5] ब्रह्म परमात्मानमश्नुते प्राप्नोति, तदभेदं गच्छतीत्यर्थः। किमनेनोक्तं भवति? गुणेभ्यः प्रतिपादितस्वरूपेभ्य आत्मनः स्वाभाविकविविक्तत्वभावना[6]भूतप्रकृतेर्मोक्षो न तु शरीरविषयादिरूपायास्तस्याः परिहारमात्रं[7] मोक्ष इति॥

अथ गुणातीतस्वरूपं विशेषतो जिज्ञासुः अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते॥ २१॥

कैर्लिङ्गैरभिव्यञ्जकैर्लक्षणैरेतानुक्तरूपान् गुणानतीतो[8] भवति, तेभ्यो विमुक्तः संपद्यते? यश्च गुणातीतः स किमाचारः? किं तस्य[9] चेष्टितमित्यर्थः।

---

१. IO समुद्भूता भावाः
२. IO देवः
३. All except BN[1] मानित्वात्
४. BN[1] सात्त्विक
५. BN[1] परं
६. IO विविक्तभावना
७. IO परिहापनम्
८. All except BN[1] गुणातीतो
९. IO omits तस्य

केन च प्रकारेण तीनतिवर्तते व्यतिक्रामति ? गुणातीतत्वप्राप्तिहेतुः को विधिः—इति प्रश्नत्रयनिर्णयार्थमुत्तरं भगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥
समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥
मानावमानयोस्तुल्यः तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भफलत्यागी गुणातीतः स उच्यते ॥ २५ ॥

स एवंविधः श्लोकचतुष्टयप्रतिपाद्यविशेषैर्विशिष्टो गुणातीत उच्यते इति सम्बन्धः । कोऽसौ ? य एतानि वस्तूनि संप्रवृत्तानि सम्यगभिव्यक्तानि सन्ति न द्वेष्टि समाधिविपर्ययत्वात्तेषु प्रीतिं न भजत इत्यर्थः । तथा निवृत्तान्यलब्धवृत्तय एवैते भवन्त्विति न प्रार्थयते इत्यर्थः । कानि तानीत्याह—प्रकाशं सत्त्वगुणस्य विवृद्ध्यभिव्यञ्जकं ज्ञानादिरूपं लिङ्गम् ; तथा प्रवृत्तिं रजोगुणस्य

---

१. IO एतान्
२. IO गुणातीतप्राप्ति
३. IO निश्चयार्थ
४. BS[1] and BS[2] इत्येवं
५. IO and BN[1] स्थः[स्वस्थः]
 BS[2] स्वस्थः
६. IO and BN[1] विशेषण
७. IO omits प्रीतिं न
८. IO omits तथा...इत्यर्थः
९. BN[1] प्रार्थयन्ते
१०. BN[1] omits तथा
११. IO omits प्रवृत्तिं...तथा

तथाविधं क्रियात्मकं लिङ्गम्; तथा मोहं तमोगुणस्य[1] तादृशमेवाज्ञानात्मकं लिङ्गम्—इत्येतेषु सत्त्वादिगुणवृद्धिचिह्नभूतेषु वस्तुषु प्रवृत्तिहेतुषु निवृत्तिहेतुषु वा नित्यनिर्विकारस्वरूपप्रतिष्ठत्वात् यो रागद्वेषाभ्यां मनागपि नाद्रियते[2] स गुणातीत उच्यते—इत्येतन्मुख्यं गुणातीतसत्तालिङ्गम्। एतच्च गुणातीतलक्षणमुक्तं वक्ष्यमाणं च द्वितीये स्थिरप्रज्ञत्वलक्षणकथनप्रसङ्गेन प्रतिपादितमिहाप्यनुवर्तनीयम्। ननु प्रवृत्तिमोहौ प्रवृत्तौ[3] सन्तौ रजस्तमोविवृद्धिलिङ्गभूतौ अप्रकाशत्वात्[4] द्वेष्यौ भवतां नाम योगिनः; प्रकाशस्तु सत्त्वविवृद्धिलिङ्गभूतः प्रवृत्तः सन् कस्य द्वेष्यो[5] भवेत्? येनोक्तप्रकाशं[6] प्रवृत्तिं[7] यो न[8] द्वेष्टि स गुणातीत इति। अत्रोच्यते—इहाभ्यासयोगिनो रजस्तमोलिङ्गवत्सत्त्वलिङ्गमपि प्रकाशात्मकं प्रवृत्तं निषेध्यत्वात् द्वेष्यं भवति; तथा च पातञ्जले चितिशक्तिस्वरूपमुक्त्वा सत्त्वगुणात्मिका चेयम्, अतो विवेकविपरीतख्यातिः[9] इति। अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धीत्युक्तम्। कर्मयोगिनस्तु गुणातीतदशाधिरूढस्य[10] विशेषो[11]ऽयमुक्तः, तत्प्रकाशमपि प्रवृत्तं द्वेष्टि। न च तस्य निवृत्तिमभिकाङ्क्षति[12]। तथा हि सति द्वेषरागानुषङ्गात् गुणातीतता न घटते। तेन विशुद्धस्वभावाप्रच्युतसंविदः[13] प्रकाशादीनि प्रवृत्तानि निवृत्तानि वा हेयतयोपादेयतया वा यस्य द्वेषरागौ

---

१. BN[1] omits तमोगुणस्य
IO omits गुणस्य only
२. BN[1] नाध्रियते
३. IO omits प्रवृत्तौ...लिङ्गभूतः
४. BN[1] and BS[2] omit this word.
५. IO द्वेषः
६. All except IO उक्तं प्रकाशं
७. BN[1] प्रवृत्तं
८. BS[1] and BS[2] येन
९. IO विपरीतविवेकख्यातिः
१०. IO दशाविकृतस्य
११. BS[1] omits वि
१२. IO निवृत्तिं
१३. BS[1] संविदाः

नोद्भावयतः स गुणातीत उच्यते। तदेतत् गुणातीतं लिङ्गमित्यर्थः। तस्य लिङ्गान्तरमाह—"उदासीनवदसीनः" इत्यादि। यो गुणैः प्रवृत्तैर्निवृत्तैर्वा न विचाल्यते, स्वरूपान्न प्रच्यवते, स गुणातीत इति सम्बन्धः। कुतो न विचाल्यते इति हेतुगर्भं विशेषणमाह—"उदासीनवदासीनः" इति। यः परस्य सुखं दुःखं वा प्रवर्तमानं तेनामिश्रीभूतचित्तत्वात्स्वस्थो निर्विकारस्तटस्थ एव पश्यति, स उदासीन इत्युच्यते। तेन तुल्यं स एव प्रकाशादिप्रवृत्तिनिवृत्त्योः परकीययोरिव निर्विकार एवासीनः स्वरूपविश्रान्तः। अत एव ये गुणा वर्तन्ते प्रवृत्तिमनुभवन्तीति एतावतिज्ञो बोद्धा संस्तिष्ठति, स्वस्थितिं भजते। अत एव नेङ्गते, न स्वरूपाच्चलति स गुणातीत उच्यते। तदस्य लिङ्गमित्यर्थः। एतेन कैर्लिङ्गैर्गुणातीतो भवतीत्यत्रोत्तरमुक्तम्, किमाचार इति। अत्रोत्तरमाह—समसुखदुःख[दुःखसुख] इत्यादि। सुखदुःखस्वप्न इति सत्त्वरजस्तमोवृत्तय उक्ताः। समा अविशेषेण निरूप्यमाणत्वात्तुल्यास्ते यस्य स तथोक्तः; न सुखे प्रीयते, न दुःखं द्वेष्टि, न स्वप्ने मुह्यति—इत्येवंविधस्तस्य समाचारस्तुल्यो मित्रारिपक्षयोरिति। एतदन्तमनयैव दिशा किमाचार इत्यस्योत्तरमेतत्। कथं चैतान् गुणानतिवर्तते

१. IO and BN[1] गुणातीत
२. BS[2] प्रच्याव्यते
३. IO इति स्वरूपः कुतो
BN[1] reads in the same way but omits इति
४. IO omits हेतु...इति
५. BN[1] यस्य
६. IO स्वस्थे तस्यास्त एव
७. BN[1] एव
८. IO समदुःखस्वप्ना इति सत्त्व
९. BS[2] दुःखसुख
१०. BS[2] रजस्सत्त्वतमोवृत्तयः
११. IO adds
यस्य तं तथाविधं यतः सत्सु क्लेशेषु शुभाशुभभोगाधिकरणभूतेभ्यो भुवनेभ्यः क्षेत्रज्ञानां पुनः कर्मभूमौ निपतनमवश्यमेव स्थितम्। यदुक्तम् "आ ब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति। समदुःखसुखस्वप्नः
१२. IO इत्यत्रोत्तर

इत्यत्रोत्तरमाह—सर्वेत्यादि । सर्वेषामारम्भाणां यज्ञतपोदानादिक्रियाविषयाणामुद्यमानां निरतिशयनिजानन्दनिर्भरनिर्भवस्वात्मोपासाप्रवणत्वात् फलस्य स्वर्गादिभोगप्राप्तिलक्षणस्य त्यागी[2] निरभिसन्धानत्वाद्वर्जयिता, ज्ञाननिष्ठत्वेन फलाभिसन्धिशून्यतया[3] शास्त्रोक्तस्वकर्मानुष्ठानलक्षणो विधिः गुणातीततत्वप्राप्तिहेतुरित्यर्थः[4] ॥

परं विधिमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

यश्च यथोक्तस्वरूपं मामव्यभिचारेण मद्व्यतिरिक्तविषयान्तरालम्बव्यभिचाररहितेन भक्तियोगेन प्राक्प्रतिपादितचतुष्प्रकारेण समाधिना सेवते आर्तत्वादिज्ञानित्वपर्यन्तावस्थासमुचितविधिपूर्वमुपास्ते, स परां काष्ठां प्राप्तः सन् एतान् यथोक्तान् गुणानतीत्य अतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते यथोक्तस्वरूपं ब्रह्मैव संपद्यते इति; इदानीमेवोपायान्तरदुस्तराद्वैतमोहमहासागरादुत्तीर्णो भवतीत्यर्थः । यतो यथोक्तेन क्रमेण प्रत्यभिज्ञाताद्वयचिन्मात्रस्वरूपपरब्रह्मरूपे मयि

१. BN[1] omits निर्भरनिर्भव
IO reads निर्भरनिर्भय
२. IO and BN[1] त्यागो
BS[1] त्यागे
३. IO and BN[1] शून्या
४. All except IO हेतुं परं
५. IO सन्निष्ठां यथोक्तस्वरूपं ब्रह्मैव
६. BS[1] adds तत्
७. BS[2] दुस्तरान् द्वैत
८. IO ज्ञातान्वय
BS[1] and BS[2] ज्ञताद्वय

परमात्मनि सुविश्रान्तसंविदो योगिनोऽनन्तरूपं किंचिद्व्यतिरिक्तं पदार्थान्तरमवशिष्यते। यस्माद्यथाप्रतिपादितं तात्त्विकं मत्स्वरूपमेवाचिन्त्यमन्मायामहिम्नैवेदन्तया परामृष्यमाणं यथाप्रकृत्याख्यभावस्वरूपतामापत्स्यते, तथैव सात्त्विकाः सद्धर्मा अमी परामृष्यमाणाः सत्त्वादिगुणव्यपदेशभाजो भवन्ति। तथा च प्रकाशो नाम सद्धर्मव्यतिरिक्तप्रकाश्यानपेक्षनित्योदितचिदात्मकज्योतीरूपः सव्यतिरिक्तपरिमितप्रकाश्यनिष्ठतया तत्स्वरूपानुविधायित्वात्परिमितत्वमिवापन्नः सत्त्वगुणव्यपदेशं लभते। एवं स्वरूपानुभवमात्रलक्षणक्रियात्मापि सद्धर्मः सव्यतिरिक्तपरिमितप्रकाश्यनिष्ठतया रजोगुणव्यपदेशं लभते। तथा देशकालाद्यनवच्छिन्नमहिम्नि स्वाभाविकी नित्या या स्थितिः सैव भिन्नाश्रयनिष्ठतया नियमात्मकतमोगुणव्यपदेशं लभते। एवं परामर्शवैचित्र्यात् भावनामात्रव्यापारो मायाशक्तिः प्रकृतिगुणादिभावविकल्पात्मकमत्यद्भुतमिदं त्रैलोक्यालेख्यमुल्लिखन्ती सर्वदेहिनो मोहयति। सैव यदा भक्तिरूपेण विजृम्भमाणया विद्याशक्त्या तिरस्कृता भवति, तदा पारमार्थिकं ब्रह्मैवैकं तत्त्वमवशिष्यते। तत उक्तं यो भक्तियोगेन मां सेवते स ब्रह्मभूयाय कल्पते इति ॥

---

१. BN[1] and BS[2] स्वविश्रा
२. IO प्रकृताख्या
३. IO तात्त्विका
४. BS[1] and BS[2] अपरा-
५. IO omits नाम
६. BN[1] अव्यति-
७. IO omits प्रकाश्यान,..परिमित
८. IO adds तथा तथा
९. BN[1] गुणात्माधिभाव
१०. IO मायाशक्त्या
११. IO ब्रह्मैकत्वमव-
१२. IO तत उक्तं भक्तियोगेन सेवेत सां[मां] स ब्रह्म
BN[1] तत उक्तेन भक्ति-

अत्र हेतुमाह[1]—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखैकस्या[सुखस्यैका]न्तिकस्य च ॥२७॥

यस्माद् ब्रह्मणो यथोक्तस्य च परस्य तत्त्वस्याहं प्रतिष्ठा मयि तदव्यभिचारितया[2] तत्त्वस्वरूपानुविधायि प्रतिष्ठितम्, यतः क्षेत्रज्ञक्षेत्रादिभावेनावस्थितं ब्रह्मैव यदप्युक्तम्, तथापि तदवच्छिन्नवस्तुनिष्ठतया तत्स्वरूपानुविधायि सर्वत्र[3] प्रतिष्ठितम् । कीदृशस्य ब्रह्मणोऽहं प्रतिष्ठा ? अमृतस्याव्ययस्य च । न व्ययः अपक्षयलक्षणो विकारः, तेन रहितस्य ; अत एवामृतस्य नित्यसद्भावस्य ; न केवलं ब्रह्मणोऽहं प्रतिष्ठा यावत्तद्धर्मस्य शाश्वतिकस्य चित्प्रकाशात्मनोऽहंप्रतिष्ठानपेक्षितव्यतिरिक्तकारणः[4] सहज आनन्द ऐकान्तिकं सुखं तस्याहं प्रतिष्ठा । किमुक्तं भवति ? प्रकाशानन्दाक्षरत्वरूपं यत्परं ब्रह्म सोऽहं भक्तिलक्षणेनैवैकेनोपायेन[5] प्राप्य इत्योम् ॥

यैस्तुच्छैस्त्रपुसीसताम्रमलिनैः सत्त्वादिभी रूपकै-
र्दौर्गन्ध्यं भजते जनो व्यवहरन् संसारदीर्घापणे ।

---

१. IO omits हेतुं
२. BN[1] चारतया
३. IO सन् प्रति
BN[1] सन्नप्रतिष्ठं
४. IO करणः
५. BN[1] नैकेनोपा

सिद्धे[1] चास्य रसे चतुर्दशमहाध्यायाभिधेयात्मके[2]
नीतास्ते[3] परमार्थतां ददतु वो लक्ष्मीं क्षणादक्षयाम् ॥

इति श्रीराजानकरामविरचिते[4] वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
चतुर्दशोऽध्यायः ॥



---

१. IO सिद्धेऽभ्यासरसे
BN[1] सिद्धे यस्य रसे
BS[2] सिद्धेशस्य रसे

२. IO महासाध्याभिधे धातुके

३. BN[1] नीतस्ते

४. BN[1] रामकविरचिते
BS[2] रामकण्ठविरचिते

## ॥ अथ पञ्चदशोऽध्यायः ॥

---

एवं त्रयोदशाध्याये स्थूलदृष्ट्या भूतप्रकृतेर्मोक्षः पर[1]मप्राप्तिहेतुत्वेन प्रतिपादितः। चतुर्दशेन तु सूक्ष्मया दृष्ट्या गुणपरमार्थायाः तस्यास्तद[2]तिक्रमेण विशेषतो ब्र[3]ह्मभावप्राप्तिरुपदिष्टा। इदानीं भुवनसन्तानभावे[4]न परिणतायास्तस्याः निर्मो[5]क्षप्रतिपादनक्रमेणापुनरावृत्तिपदप्राप्तिं प्रतिपादयितुं **भगवानुवाच**—

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ १॥**

प्रतिपाद्यमानविशेषणसाधर्म्यादश्वत्थवृक्षा[6]ध्यवसायेन नानाभुवनसन्तानरूपः संसारप्रपञ्चो विवक्षितः। तम[7]श्वत्थमेवंविधमाहुः, परावरद्रष्टारः कथयन्ति। कीदृशम्? ऊर्ध्वमू[8]लम्; बहुलप्रपञ्चस्यापि भुवनसन्तानस्य केवलभोगभूमिकर्मभूमिभेदेन संग्रहात् द्विप्रका[9]रत्वे सति भोगभूमिरूपो भाग ऊर्ध्वशब्देनोक्तः भोगस्य फलत्वात्, फलस्य च प्राधान्यात्; मूलशब्दे[10]न चाविद्यादिक्लेशजालमुक्तम्; सति हि तस्मिन् भोग-

---

१. IO परमाप्ति
२. BN[1] तदतिक्रमक्रमेण
३. IO ब्रह्मप्राप्ति
BN[1] ब्रह्ममात्रप्राप्ति
४. IO omits भावेन...वृत्तिपद
५. BS[2] निर्दिष्टप्रति
६. IO वृक्षव्यवसायेन
७. IO तदश्व
८. IO मूलं बहुप्रप.
BN[1] मूलबहुलप्रप-
९. BN[1] प्रकारे
१०. BN[1] शब्दे च

भूम्यात्मना क्षेत्रज्ञान्[1] प्रति प्रकृतिर्विपरिणमति। अन्यच्च[2] कीदृशम्?[3] तमधःशाखम्। अधःशब्देन कर्मभूम्यात्मको भाग उच्यते, तेन[4] पुनरावृत्त्यधिकरणत्वादधो-विषयत्वेनोक्ताः[5] कर्मभूमय[6] एव[7] शाखाः। इत्थमधःशाखाः[8] यस्य[9] तं तथाविधम्। यतः सत्सु क्लेशेषु शुभाशुभभोगाधिकरणभूतेभ्यो भुवनेभ्यः क्षेत्रज्ञानां पुनः कर्मभूमौ निपतनमवश्यमेव स्थितम्, यदुक्तम्—"आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति। अन्यच्च कीदृशम्? अव्ययम्। अनन्तत्वात् परमेश्वरमायावभासितानां[10] क्षेत्र-ज्ञानां गमागमानिवृत्तेः, तान् प्रति तथास्य परिणमतः प्रवाहनित्यत्वेनाविद्यमान-व्ययत्वम्। अन्यच्च कीदृशम्? यस्य छन्दांसि वेदाः, पर्णानि पत्राणि। किमुक्तं भवति? वेदसमुद्भवत्वात्तानि तानि कर्माणि छन्दःशब्देनोक्तानि; तान्येव तादृक्-परिणामावधिभूतत्वात् पर्णत्वेनास्याध्यवसितानि। तमेवंविधमेनं[11] क्लेशप्रभवत्रयी-नियमितकर्मफलभूतभोगाधिकरणात्मकं भुवनसन्तानरूपमूर्ध्वमूलत्वादिना सादृश्या-दश्वत्थत्वं यो वेद, वेद्यत्वेन वेदकात्[12] स्वरूपाद्व्यतिरिक्तं जानाति, स वेदार्थवित्; न तु यस्तस्मिन् ममत्वादिग्रहेण निमग्न[13] इत्यर्थः ॥

---

१. IO क्षेत्रज्ञानां
२. IO अतश्च तमधः
३. BN¹ omits कीदृशं
४. IO ते पुनः
५. All except BN¹ आवृत्त्याधि
६. BS¹ and BS² विषयत्वेनोक्तः
BN¹ विषयेनोक्तः
७. IO omits एव
८. IO शाखः
९. IO omits यस्य...अर्जुनेति
१०. IO and BN¹ मायावसितानां
११. BN¹ तदेवंविधं
१२. BS¹ and BS² वेदकाख-
१३. BS¹ adds माना

ननु किमयमश्वत्थ ऊर्ध्वमूल एव, अधःशाख एव च स्यात्, उत रूपान्तरमप्यस्तीत्याशङ्कायां तत्प्रतिपादनार्थमाह—

**अधश्चोर्ध्वं प्रसृता यस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके॥ २॥**

यस्य चाश्वत्थस्योक्तेन क्रमेणाधः शाखाः प्रसृता ऊर्ध्वं च प्रसृताः; कुतः? चशब्दो हेतौ। यस्मादधो मर्त्यलोकशब्देनोक्तायां कर्मभूमौ मूलान्यनुसन्ततानि क्लेशा एव प्रसृता इत्यर्थः; कर्माण्यपि हि क्लेशमूलानि; अत एव तादृंशि मूलानि कर्मानुबन्धीनि कर्माणि शुभाशुभाः क्रिया अनुबन्धं गमयितुं शीलं येषां तानि तथोक्तानि। भोगभूमिषु हि भोगत्वेन क्लेशा एव यथा विजृम्भन्ते, ततश्च कर्मप्रभवा एव भोगभूमय ऊर्ध्वप्रसृतशाखात्वेनाध्यवसिताः; तथा उभयरूपा अप्यस्य शाखाः कीदृशा इत्याह—गुणप्रवृद्धा इति। गुणैः सत्त्वादिभिः सुखाद्यात्मना परिणमद्भिः प्रवृद्धा उपचयं प्राप्ताः। यावान् हि प्रसरस्तासां स सर्वो गुणानुविद्ध एव भोगात्मना कर्मात्मना वा विजृम्भते; तेन यथा रसेन शाखा वृक्षस्य प्रवर्धन्ते, एवं गुणैः कर्मभूमयः फलभूमयश्च प्रवर्धन्ते; तदात्मका एव ता इत्यर्थः। तथा विषयप्रवालाः, विषयाः शब्दादयो बुद्धिप्रधानासु भूमिषु अध्यवस्थिताः प्रवालस्थानीयाः

---

१. IO मप्यस्यास्तीति
२. IO सन्तानि
३. IO भूमिषु भोगभोगत्वेन
४. BN[1] शाखात्वेन
५. IO and BN[1] यावन्ति प्र
　BS[2] यावान्हि प्र-
६. BN[1] सर्वे
७. BN[1] विजृम्भन्ते
८. BN[1] विषयस्य प्रवा-
९. IO अध्यवसिताः

पल्लवतुल्या यासां उपरितनीष्वधस्तनीषु सर्वास्वेव हि भूमिषु शुभाशुभविषयत्वेन परिणता गुणा एव पर्यायेण गमागमहेतुत्वमापाद्यमानाः क्षेत्रज्ञान्निबध्नन्तीति तात्पर्यम् ॥

तदेवंविधस्योक्तस्य भवस्य वक्ष्यमाणज्ञानाभावादाह[२]—

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।**

अस्य यथा[३]प्रतिपादितस्याश्वत्थस्य तथा तेन प्रकारेण रूपं स्वभावो नोपलभ्यते, तत्त्वतो नैव प्रतिपाद्यते,[४] अन्यथैव ह्ययमचिन्त्येश्वरमायामात्र-निबन्धनतया तत्त्वनिःसाररूपत्वेन स्थितो ज्ञानशून्य[५]त्वाच्चान्यथैव परमार्थसत्त्वे-नावभासमानो [६]ममकारग्रहेण प्राणिनो निबध्नाति, य[७]थास्य स्वरूपं नोपलभ्यते, न च संप्रतिष्ठा, [८]आभ्यन्तरालवर्तिनी सम्यक् स्थित्यवस्थापि न लभ्यते । यतो य[९]तो येन येन रूपेणास्य स्थितिः तत्सर्वं परिणामित्वादस्थिरम् ॥

अत एवंविधस्यास्य स्वभाव[१०]प्रकाशस्य व्यवधायकस्य छेदोपायमाह—

**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण शितेन छित्त्वा ॥ ३ ॥**

**ततः पदं तत्परिमार्गितव्यं यस्मिन् गतो न निवर्तेत भूयः ।**

---

१. IO and BN[1] omit this word.
२. IO and BN[1] omit this word.
३. BN[1] omits यथा
४. BN[1] प्रतिपद्यते
५. IO शून्यतयैव पर
६. IO omits मम...रूपं नो
७. BN[1] तथास्य
८. IO आद्यन्तराल
BN[1] अभ्यन्तराल
९. All except BN[1] omit यतः
१०. IO स्वभावप्रका-

एवं[1] यथाप्रतिपादितस्वरूपं क्षेत्रज्ञानां[2] क्लेशनिमित्तकर्मानुरूपपरिपाकानुभवाधिकरणभूतभुवन[3]सन्तानात्मकमश्वत्थम्, तत्साधर्म्यादश्वत्थेन निरूपितम्; अत[4] एव सुविरूढमूलं सुष्ठु दाढर्येन विविधं कृत्वा रूढानि[5] प्ररोहंप्राप्तानि क्लेशा[6] एव मूलानि यस्य[7] तं तादृशम्; असङ्गशस्त्रेण ममता[8]ग्रहरूपगाढाश्लेषत्यागात्मना विवेकपाषाणकषणवशाच्छितेन तीक्ष्णेन कुठारेण[9] छित्वा मूलतो द्विधा कृत्वा ततोऽनन्तरं पुनःपुनः प्रतिपादितस्वरूपं पदं[10] निरुत्तरं धाम मार्गमन्वेषणीयम्। कीदृशम्? यस्मिन् प्राप्ते योगी भूयो न निवर्तेत[11] पुनः संसारवर्त्मनि नाविर्भवेत्[12], अकृत्रिमस्वभावविश्रान्तिलक्षणं मोक्षमवाप्नुयात्। यस्मादेतस्मिन्नेव परप्रकाशावरणहेतौ महति विघ्ने यथोक्तेन रूपेण[13] निकृत्ते[14] सति योगी,

**तमेव चाद्यं पुरुषं प्रपद्ये[15] यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

यदेतदुक्त[16]व्यवधानविच्छेदाद्योगी प्राप्नुयात् स एव परमः पुरुषः[17] परमकारणं परमात्मा[18]; ततः तस्मिन् पदे[19] प्राप्ते परं पुरुषं प्रपद्येत्[20] तत्समापन्नो भवेद्योगी-

---

१. IO एवं
२. IO क्षेत्रज्ञानं क्लेशनिमित्तककर्मानु-
३. BS[1] and BS[2] सत्तात्मकं
४. BN[1] एवं instead of अत एव
IO अत एव सुविभक्तफलमूलं
दाढर्येन
५. IO रूपाणि
६. IO क्लेशत एव
७. IO यस्यैतादृशं
८. IO समतान्तग्रहरूपगाढक्लेशत्याग
९. BS[2] adds कृत्वा
१०. BN[2] omits पदं
११. BN[1] निवर्तते
१२. IO नाविर्भवति
१३. IO स्वरूपेण
१४. BN[1] निवृत्ते
१५. BN[1] प्रपद्ये यतः
१६. IO उक्तस्य
१७. BS[1] omits पुरुषः
१८. IO omits परमात्मा...सर्वकारण
१९. BS[1] पदं
२०. All except BN[1] प्रपद्ये

52

त्यर्थः। कं तं परं पुरुषं प्रपद्येत्[1], यतो यस्मादेकस्मात्सर्वकारणभूतात्[2] पुराणी प्रवहमानत्वाच्चिरन्तनी[3] प्रवृत्तिः यथाप्रतिपादितजगत्क्रीडनकनिर्माणात्मिका क्रिया प्रसृता[4], इत्थमवभासमानत्वात् प्रकर्षेण सृता गता व्यापिनी संवृत्तेत्यर्थः। किमुक्तं भवति? यदैव[5] परपदप्राप्तिलक्षणपरमात्मस्वभावविश्रान्तिरुपजायते, तदैव[6] तदिच्छामात्रैककारणत्वं जगद्वैचित्र्याभासस्य योगिनः प्रतिपद्यन्ते[7]॥

अत एव—

**निर्माणमोहा जितसङ्गदोषा अध्यात्मनित्या[8] विनिवृत्तकामाः।**
**द्वन्द्वैर्विमुक्ताः[9] सुखदुःखसंज्ञैः गच्छन्त्यमूढाः पदमव्ययं तत्॥५॥**

तदव्ययं नित्यत्वादपक्षयादिरहितं[10] पदं स्वाभाविकात्मलक्षणं स्थानम् अमूढाः प्रत्युदितविद्याशक्तित्वात्[11] प्रबुद्धा गच्छन्ति प्राप्नुवन्ति, तादात्म्यं लभन्त इत्यर्थः। कीदृशाः सन्तः? निर्माणमोहाः अनात्मादिष्वात्मादिप्रत्यय[12]लक्षणाभिमानमयान्[13]मोहान्निष्क्रान्ताः; यतो जितसङ्गदोषाः, सङ्गः[14] आसक्तिः अनात्मादौ वस्तुन्यात्माभिमानेन गाढनिमग्नचित्तत्वम्, स एव दोषः संसारहेतुत्वान्महदवद्यं[15] जितः तिरस्कृतो

---

१. All except BN[1] प्रपद्ये
२. IO भूता
३. IO and BN[1] प्रवाह
४. BN[1] omits प्र
५. BN[1] यदेव परप्राप्ति
६. IO तदेतदिच्छा
७. BN[1] प्रतिपद्येत
IO प्रतिद्यते न तु
८. IO अध्यात्मनिष्ठाः
BS[2] अध्यात्मविद्या
९. BN[1] विमुक्ताः
१०. IO अपक्षयदोषादिरहितं
BN[1] अपक्षयादिदोषरहितं
११. BN[1] प्रोत्पादित
१२. IO अनात्मादिप्रत्य
१३. IO क्षणादिमयात्
BN[1] क्षणोऽभिमान
१४. BS[1] and BS[2] सङ्गाः
१५. IO and BN[1] अगम्यं

यैस्ते तथाविधाः। कथंभूतैः[1] स जेय इति हेतुगर्भं विशेषणमाह—अध्यात्म-नित्या[2] इति। अध्यात्ममात्मनि[3] पारमार्थिके स्वस्वभावे[4] नित्याः[5] सदा तदेक-निष्ठा इत्यर्थः। कथमध्यात्मनित्यत्वं स्यादिति पूर्ववद्विशेषणं[6] विनिवृत्तकामा इति। काम्यन्त इति कामाः, ऐहिकामुष्मिका इष्टाः शब्दादयो भोगा विनि-वृत्तास्तत्त्वज्ञानाभ्यासात् विच्छिन्नास्ते येषां ते[7] तथाविधाः। कामा हि बाह्यविषयान्[8] प्रति चित्तमाकर्षयन्तो[9]ऽध्यात्मनिष्ठतां विघ्नयन्ति। अतो विनिवृत्तकामा[10] अध्यात्मनित्या[11] इत्युक्तम्। विनिवृत्तकामत्वं[12] च[13] कथं स्यादिति पूर्ववद्विशेषणमाह—"द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः" इति[14]। द्वन्द्वैः क्षुत्तृष्णाशीतोष्णजरामरणा[15]-दिभिः। तथा एतद्विपरीतैस्तृप्तिह्लादादिभिरनित्यशरीराद्यहङ्कारनिबन्धनैः[16] क्लेशैः सर्वैरेव सुखदुःखात्मकत्वाद्यभिमानैर्विमुक्ताः[17] परिवर्जिताः; ते हि तथाविधा निवृत्तकामा भवन्ति। तदयमत्र क्रमो विवक्षितः—ये[18] भगवदनुग्रहाविर्भूतविवेकजज्ञानत्वात् प्रबुद्धयोगिनो हेयोपादेयविवेकक्षमबुद्धयो जायन्ते, ते सुखाद्यात्मकत्वेन संवेद्यत्व-मापन्नान्[19] सर्वान् प्रकृतान् भावान् हेयत्वेनात्मतत्त्वं[20] च यथाप्रतिपादितस्वरूपमुपादेयत्वेन[21]

---

१. IO omits कथं
२. IO निष्ठा इति
   BS² विद्या इति
३. IO अध्यात्मनि
४. IO and BN¹ omit स्व
५. IO निष्ठाः
६. IO and BN¹ add इति
७. IO एते
८. BN¹ and BS² बाह्यान्
९. IO आकर्षन्ते
१०. IO निर्वृत्तकामाः
११. IO निष्ठाः
१२. IO omits विनिवृत्तकामत्वं
१३. BN¹ omits च
१४. IO omits इति द्वन्द्वैः
१५. IO जरामरणशीतोष्णादि
१६. BN¹ तथा तथा तद्विप-
१७. BN¹ द्यभिधानैः
१८. IO and BN¹ omit ये
१९. BN¹ आपन्नाः सर्वान् प्राकृतान्
२०. BS¹ आत्मत्वं च
२१. BN¹ and IO उपादेयत्वेन

निश्चिन्वन्तो द्वन्द्वात्मकैः क्लेशैर्विमुच्यन्ते ; तेभ्यो निवृत्ताश्च तद्विधधर्मिणि[1] सहजनित्यानन्दमये स्वात्मन्येव नित्यावहिता भवन्ति ; ततश्च बाह्येषु भावेषु प्रतिपादितोपपत्त्या शास्त्रीयकर्मापरित्यागे[2] सति स्पृश्यमानेष्वपि शरज्जलदपटलेष्विव सौधवो[3] निःसङ्गा भवन्ति ; ततश्च निःसङ्गत्वात् निर्मलाः[4] विच्छिन्ना विपर्ययप्रत्ययाः सन्तः परमात्मन्येव परमार्थसत्ये सुप्रतिष्ठाहंप्रतीतयः[5] परमं पदमाप्नुवन्ति ॥

कीदृशं तत् ?

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

तत्पदं सूर्यादयो न भासयन्ति । तेषां हि प्रकाशं कारणान्तरलब्ध-[6]जन्मकं चेतनाचेतनभावाभिव्यञ्जकत्वेन प्रकाशकमनन्यप्रकाश्यसंवित्प्रकाशात्मना परमशब्दप्रतिपादितेन स्वस्वभावेन परमात्मेच्छामात्रेण[7] भासयन्[8] प्रकाशयति ; अतः सूर्यादीनां कथं[9] तत्पदं प्रकाश्यं स्यात् ? अथ तदेव[10] मम यथोक्तस्वरूपस्य[11] परमकारणस्य परमेश्वरस्य धाम स्थानं यत्प्राप्य यत् समापद्य योगिनो न निवर्तन्ते ; न पुनः संसारभूमिमन्यजीववदवतरन्ति[12] ॥

---

१. BN[1] धर्माणि
२. IO त्यागेनातिस्पृश्य
३. All except IO वायवः
४. IO निर्मलविच्छिन्न-
५. IO and BS[2] स्वप्रतिष्ठा
६. BN[1] कारणालब्ध
७. IO परमात्मनि
८. IO भासयति
BS[2] notes as an alternative reading भावयन्
९. IO कार्यं
१०. IO तदैव
११. BN[1] स्वस्वरूप
१२. BN[1] भूमिं नानाजीववत्

ननु स्वेच्छामात्रेण सर्वभावप्रकाशके[1] अनन्यप्रकाश्यचित्प्रकाशैकस्वभावे परमात्मन्येवैकस्मिंस्तत्त्वे परमार्थसत्त्वेन व्यवस्थिते प्रतिशरीरं ज्ञत्वादि[2]धर्मयोगिनोऽन्योन्यभिन्नाः क इमे[3] जीवानामयथेच्छमिन्द्रियवर्गं स्वस्वविषये प्रवृत्तिनिवृत्ती लम्बयन्तीति संशयानान्प्रति जीवविवेकार्थमाह—

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

य एव जीवो नाम पदार्थः प्रकृतिस्थानि शब्दादिभावेन परिणतायां[4] यथोक्तस्वरूपायां प्रकृतौ स्थितानि तदेकालम्बनत्वात्[5] तदाश्रितानि प्राधान्याच्छ्रोत्रादिबुद्धीन्द्रियविवक्षया पञ्चेन्द्रियाणि मनसा[6] प्रवृत्तिनिवृत्तिसाधनभूतेनान्तःकरणेन षष्ठेन सहितानि कर्षति[7], उपादेये स्वविषये युञ्जानो हेयांश्च ततो निवर्तयन्नाक्षिपति विक्षिपति[8] च, स जीवलोके जगति ममैवांशः; स च प्रतिपादितस्वरूपस्य परमकारणस्यांशो भाग इव[9] सनातनो नित्यो जीवभूतो मदिच्छावशादन्योन्यभिन्नं[10] जीवरूपतां प्राप्तः। किमुक्तं भवति? जीवपरमात्मनोर्नास्ति मनागपि वास्तवो भेदः। एवकारेण जीवस्य चिन्मात्रस्वरूपातिरिक्तवस्त्वन्तरसंपर्क[11]संभावनाभावोऽवधारितः। तेन परमार्थतः परमकारणा[12]दभिन्नस्यापि प्रतिक्षेत्रं विभक्तेन्द्रिय-

१. IO सर्ववस्तुप्रकाशके
२. All except IO ज्ञात्वादि
३. All except BS[2] add इव
४. IO परिणतया
५. IO भेदकालम्ब
६. IO omits this word.
७. IO कर्षयन्ति
८. IO निक्षिपति
९. BN[1] एव
१०. BN[1] omits भिन्न
११. BN[1] असंपर्के
१२. BN[1] कारणभिन्न

वैर्गापकर्षत्वादिना[1] नानात्वप्रतीतिरचिन्त्यमन्मायाशक्तिजनिता नास्य[2] वास्तवी ; सा हि मायाशक्तिः तत्त्वज्ञानावसरविभाव्यनिःसारस्वरूपा[3] संप्रति सर्वभावभेदै[4]र्विभ्रमोद्भावनेनेत्थं व्यामोहयतीति, "दैवी ह्येषा गुणमयी मम[5] माया दुरत्यया" इत्यादिना प्रागेव प्रतिपादिताद्भुतस्वरूपा ; ततश्चाकाशस्य[6] नित्यनिर्मल[7]-निर्विभागानन्तमहिम्नोऽपि[8] घटाद्य[9]वच्छेदकवस्तुवशाद्यथांशवत्त्वपरिकल्पना, तथा परमात्मनोऽपि शरीराद्यवच्छेदकवस्तुवशात् जीवरूपां[10]शवत्त्वपरिकल्पनेयम् ; न तु तस्योक्तस्वरूपस्य वस्तुतो[11] भागाः संभवन्ति । योऽपि प्रदीप्तहुताशराशिस्फुलिङ्ग-निचयोपमानप्रतिपादनव्यवहारः परमात्मजीवात्मनोरागमेषु[12] श्रूयते, सोऽप्यौपचारिक एव[13], न वास्तवः ; यतो ब्रह्मविद एकमेव तत्त्वं परमार्थसद्ब्रह्मसंज्ञया[14]नेकमिव चकास्तीत्याचक्षते ; तथा च कश्चिदीश्वरो[15]ऽव्याकृतप्राणविरा[16]ड्भूतेन्द्रियोर्मिभिः यः प्रनृत्यन्निवाभाति तस्मै ब्रह्माब्धये[17] नम इत्याह ॥

---

१. IO वर्गकर्षत्वादिना
२. BN[1] अस्य न वास्तवी
 IO omits अस्य
३. IO निर्माणस्वरूप
४. BN[1] omits भेद
५. BN[1] omits मम माया दुरत्यया
६. IO ततश्च प्रकाशस्य
७. BN[1] निर्मलविभाग
८. IO महिम्नो हि
९. IO omits द्यवच्छे...शरीरा
१०. IO जीवरूपस्य यावत्त्वं परिकल्पनीयम्
११. IO वस्तुनो
१२. IO and BN[1] आगमे
१३. BN[1] एक एव
१४. IO संज्ञायामनेकं वा
 BN[1] संज्ञायामनेकमिव
१५. IO कश्चिद्योगीश्वरः
१६. IO omits रा
१७. IO ब्रह्मर्षये

ननु ततस्ततः शरीरा[1]दुपात्तशुभाशुभकर्मणोपचितवास[2]नाधिवासित एव जीवः शरीरान्तरं प्रतिपद्यमानः संसारपर[3]म्परापरिवर्तनमनुभवन् कथं न वस्तुतोऽन्यो भिन्नो भवेदिति भेदभ्रान्तिमपाकर्तुमाह—

**शरीरं यदवाप्नोति य[4]च्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

एवं मदंशत्वाद्वस्तुतो[5] मदभिन्नो जीवपदार्थो यच्छरीरमवाप्नोति केनचिन्नवेन शरीरेण [6]सम्बध्यमानत्वात् जातव्यपदेशं लभते इत्यर्थः; तथा यच्चाप्युत्क्रामति तत्कर्मवि[7]पाकप्रक्षये केनचिच्छरीरे[8]ण वियुज्यमानत्वात् उत्क्रामन् तद्व्यपदेशं लभते । तदयमीश्वरः स्वतन्त्रस्वरूपमात्रप्रतिष्ठः परमात्मैव सन् एतानि सूक्ष्मरूपाणीन्द्रियाणि गृहीत्वाधिष्ठेयत्वेन स्वीकृत्य संयाति, देहात् देहान्तरगन्तृत्वव्यपदेशभाग् भवति ; न पुनर्नित्यनिर्विभागव्यापकचिन्मात्रै[9]कस्वरूपस्यास्य देहाद्दे[10]हान्तरगमनलक्षणं संयानं जन्ममरणशब्दवाच्यं वस्तुतः संभवति । इदमत्र तात्पर्यम्—पारमार्थिकस्वरूपप्रत्यवमर्शाभावमात्रात् लब्धजन्मनो निजमायाशक्त्युद्भावितो[11]वच्छेदविविधशरीरसम्बन्धाज्जीवनानात्वमिवावभासयत्ययमीश्वरः । तेन यथा

---

१. IO शरीरोपात्त
२. IO omits वासनाधि
३. IO परस्परापरिवर्तमानस्तव कथं
४. IO and BN[1] यश्चापि
५. IO वस्तुनो
६. IO omits संबध्य...शरीरेण
७. BN[1] परिपाक
८. IO adds युज्यमानत्वात्
९. IO omits एक
१०. IO and BN[1] देशाद्देशान्तर
११. IO उद्भाविततावच्छेदहेतुविविध
BN[1] उद्भाविताात्तदवच्छेद

घटकुसूलगृहाद्यवच्छेदकवस्तुसम्बन्धादेकमेव निर्विभागमाकाशं घटाकाशं[1] कुसूलाकाशमित्यादिभेदव्यपदेशमतत्त्वविदः प्रतिपद्यन्ते, तथैवायमीश्वरः स्वरूपप्रतिष्ठ एव[2] सन् नानाकार्यकारण[3]सम्बन्धात् नानात्वमिव प्रतिपद्यते[4]। तत्सम्बन्धेऽपि सति यथैव विशुद्धसंविन्मयस्वरूपमात्रप्रतिष्ठ एव त[5]थोपमानेन प्रकटयति, कुतश्चिदाशयात् कमलाकरादेर्यथास्पर्[6]शमात्रस्वभावो वायुर्गन्धान् क[7]मलकुवलयादिमकरन्दामोदान् सूक्ष्मरूपान् स्वीकृत्य कुमु[8]दाकरादिकमाशयान्तरं संयाति, तथैवायमिन्द्रियादीनि गृहीत्वा देहाद्देहान्तरं चिन्मात्रस्वरूपप्रतिष्ठ एव संया[9]तीव। किमनेनोक्तं भवति? यथा तत्त[10]दाशयगतगन्ध[11]परमाणुपरिग्रहेऽपि स्पर्शमात्रगुण[12]ात् स्वरूपादप्रच्यवमानो गन्धवत्तां नावपद्यते पवनः; अथ च[13] तत्सम्बन्धात् कमलसुरभिः कुमुदमकरन्दसु[14]गन्धिरिति भिन्नव्यपदेशभाग्भवति, तथायमात्मा निरावरणानन्तनिर्विभागचिदेकस्वभावोऽपि मायोद्भावितदेहादिपदार्थसम्बन्धात् नानाव्यपदेशं भजते; न तु वस्तुतोऽस्य भेदः। संभवति चायमुपमानोपमेयभावो विवक्षितः॥

---

१. IO omits घटाकाशम्
२. IO एवमर्वाक्कार्य
३. BN[1] करण
४. IO प्रतिपद्यन्ते
५. IO and BN[1] यथोप
६. BN[1] स्पन्दमात्र
७. IO omits कमल
८. IO कुमुदादिकमाश
   BS[1] and BS[2] कुमुदादिकरादि
९. IO संयात्येव
१०. BN[1] तत्तदाकाशगतं
११. IO omits गन्ध
१२. BN[1] गुणान्
१३. BN[1] omits च
१४. BN[1] सुरभिरिति

यद्वस्त्वन्तरसम्बन्धेऽपि स्वरूपाप्रच्युतिरस्येति जात्यायुर्भोगलक्षणविपाकाभिव्यञ्जकजन्ममरणधर्मयोगिशरीरादिसम्बन्धेऽपि वास्तवीं स्वरूपमात्रप्रतिष्ठतामस्यात्मनः प्रतिपाद्य इदानीं तदन्तरालवर्तिभोगलक्षणविपाकाभिव्यञ्जकदशासम्बन्धोऽप्यस्य, तां प्रतिपादयितुमाह—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इत्यादिना प्रदर्शितन्यायेनायमेक एवात्मा नानाक्षेत्रवर्तिविभिन्नविषयाधिष्ठातृमात्रेण नानात्वमिव प्रतिपद्यमानो विषयान् शब्दादीन् सुखादिहेतूनुपसेवते; तत् उपलब्धृत्वमात्रैकस्वभावाव्यभिचारादेक एव सन् भजते; भोक्तृत्वावस्थायामपि तैरनावृतस्वरूप एवासावित्यर्थः ॥

**तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

तिष्ठन्तं लब्धव्यपदेशत्वात् कस्मिंश्चिच्छरीरे तेन तेन जात्यादिना व्यपदेशेनावच्छिन्नतया स्थितिमनुभवन्तम्, तथा उत्क्रामन्तं तस्मात्तादृशात् शरीराच्छरी-

---

१. IO वास्तव
२. BN[1] प्रतिष्ठितां
३. IO and BN[1] भाग
४. BN[1] संबन्धे
५. IO विभिन्नयथावशाधि-
६. IO and BN[1] ततोऽनुपलब्धृ
७. IO उत्क्रामन्तं स्थितं वापि भुञ्जानं
८. BN[1] अविच्छिन्नतया

रान्तराश्रये[1]णायोद्गच्छन्तम्, जन्ममरणयोगि[2]व्यपदेशं भजन्तमित्यर्थः ; तथा तद[3]न्तराले गुणान्वितं सत्त्वादिगुणसंयुक्तं शब्दादिविष[4]यजं सुखाद्यात्मकं भोगमुपभुञ्जानं वेदकत्वमात्रेण तद्भोक्तृत्वव्यपदेश[5]भाजमिति जन्ममरणस्थित्यवस्थास्वप्येकस्मिन्नेव स्वाभाविके सर्वक्षेत्राधिष्ठा[6]तरि स्वरूपे प्रागुक्तेन रूपेण वर्तमानं विमू[7]ढा मायाशक्ति-महिम्ना मनागपि स्वरूपप्रत्य[8]वमर्शानुन्मेषलक्षणेन विशेषेण मूढा विचेत[9]सः सम्यग्ज्ञानरहिता नानुपश्यन्ति, पारमार्थिकेन रूपेण स्थितमपि तथाप्रत्यवमर्शाभावात् न साक्षात्कुर्वन्ति। के तर्हि तं पश्यन्तीत्याह—ज्ञानचक्षुषः। ज्ञा[10]नं यथावस्थित-वस्तुसंवेदनमेव चक्षुर्लोचनं येषां ते, पश्यन्ति आत्मतया साक्षात्कुर्वन्ति ; न ह्यसौ रूपात्मकविषय[11]साधनभूतेन चक्षुरात्मनेन्द्रियेण दृश्[12]यते। तद्दर्शने सम्यग्ज्ञानमेव साधनम् ; अतस्त[13]च्चक्षुष्ट्वेन निरूपितम् ॥

किंच—

यतन्[14]तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः॥ ११ ॥

---

१. All except BN[1] राश्रयणया
२. BN[1] omits योगि
IO योगित्वव्यपदेशे
३. BN[1] तदनन्तरालगुणान्वितं
४. IO विषयं
५. BN[1] देशमात्रभाजं भजन्तमिति
IO देशभाजं भुञ्जन्तं
६. IO धिष्ठानस्वरूपे
७. BN[1] विमूढः
८. IO omits प्रत्यव...पि तथा
९. BN[1] विचेतसा
१०. BN[1] omits ज्ञानं
११. IO विषयरूपसाधन
१२. IO adds सन्
BN[1] adds सा
१३. IO omits तत्
१४. All except BS[2] यतन्ते

येऽपि ज्ञानचक्षुषो योगिनः समाहिताः, तेऽप्येनं परमात्मानं[1] यथोक्तेन क्रमेण यतमाना नित्याविलुप्तोत्साहतया यत्नपराः सन्तः आत्मन्यवस्थितं सदा स्वभावत एवापरोक्षतया वर्तमानमेव पश्यन्ति, यथावत्प्रत्यभिजानन्तीत्यर्थः। अकृतात्मानस्तु यतमाना अप्येनं न[2] पश्यन्ति। किमुक्तं भवति? परमेश्वरानुग्रहं विनानुन्मिषितसम्यग्ज्ञानत्वादकृतैः[3] तद्दर्शनायासम्पादित आत्मा अन्तःकरणं यैस्ते तादृशा आसुरसर्गभाजो यतमाना[4] अपि तेन तेन केनचित्प्रकारेणोद्युक्ता अपि न पश्यन्ति, सम्यग्ज्ञानलक्षणस्य मुख्यस्य[5] तद्दर्शनसाधनस्याभावात्॥

यश्चायमेवमद्भुतशक्तिः परमात्मा सोऽहमेवेत्यात्मनिष्ठत्वेन तत्स्वरूपं प्रतिपादयितुमाह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥ १२॥

यदेतदादित्यगतं[6] सूर्यसन्निविष्टं तेजो ज्योतिः समस्तं भुवनमभिव्यञ्जकतया प्रकाशयति, यच्चन्द्रमसि सोमे सन्निविष्टमखिलं जगदाप्याययति, यच्चाग्नौ जातवेदसि स्थितं पाकादिस्वकार्यं निर्वर्तयति, तत् त्रिधा भासमानमपि ममैवैकस्य सम्बन्धि एकमेव प्रकारं संविदात्मकं जानीहि। न ह्यसंविदात्मकत्वे

---

१. IO एनमात्मानं
२. IO omits न
३. IO अकृतं
४. IO माना मुधितेन तेन केनचित्प्रकाशेन
५. IO चात्माख्यस्य तद्दर्शन
६. IO आदित्यान्तर्गतं

कस्यचित्स्वकार्यस्य संपादनपर्यवसायितोपपद्यते । संविच्चैवैकस्य पारमार्थिकस्य संवेदितुर्ममैवासाधारणो धर्मः । ततोऽहमेव सर्वमित्येतत्परम्[1] ॥

अत एवाह—

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

गां पृथिवीमाविश्य स्वशक्त्या व्याप्य भूतानि चराचरान् प्राणिनः अहमोजसा स्वबलेन धारयामि बिभर्मि ; पृथिवीगता धारणशक्तिर्ममैव स्वाभाविकं बलमित्यर्थः । तथा रसात्मकोऽमृतमयः सोमो भूत्वा चन्द्रात्मतयात्मानमेवाभास्य[2] सर्वा औषधीः समस्तप्राणिप्राणनहेतुभूता द्रव्यजातीरहमेव पुष्णामि उपचिताः संपादयामि ; आप्यायनरूपा ममैव शक्तिरित्यर्थः । तथैव[3] वैश्वानरो जातवेदो भूत्वा तदात्मकः सन्नहमेव प्राणभृतां शरीरमाविष्टः प्राणापानाभ्यां बहिः[4]सूर्येन्दुभावेनावस्थिताभ्यां[5] शक्तिभेदाभ्यां समायुक्तः सहितः[6] भक्ष्यादिभेदाच्चतुर्विधमन्नम्[7],

---

१. All except IO add एतत्
२. IO अवभास्य
३. BN[1] omits एव
४. IO omits बहिः...भेदाभ्यां
५. BN[1] ध्यव
६. IO omits सहितः
७. BS[2] भेदश्चतु-
IO भेदाच्चतुर्विधमन्नं क्रमेणाभ्यवहार्यं

अन्नमभ्यवहार्यं[1] द्रव्यम्, पचामि परिणामं प्रापयामि। जाठरस्याग्नेः सकलशरीर-विभक्तात्मतया वर्तमानस्य समस्तान्नरसपाचिका सर्वप्राणिजीवनहेतुर्या शक्तिः सा ममैवैकस्य शक्तिमतः सम्बन्धिनोति सप्तमाध्यायादावुक्तन्यायेन[2] प्रतिपादितैवात्रोपपत्तिः॥

किं बहुना[3]—

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदवि[दक्]देव चाहम् ॥१५॥

सर्वस्य कस्यचित्प्राणभूतोऽहमेकः परमात्मा हृदि सर्ववस्तुसंवेदनाधिकरणभूते शरीरैकदेशे संनिविष्टः सर्वार्थसंवेदितृतया कृतस्थितिः। अतो मत्तः मत्सकाशादेव नान्यतः[4] कुतश्चित्सर्वक्षेत्रज्ञानां स्मृतिज्ञानापोहनलक्षणः[5] शक्तिप्रसरः। किमनेनोक्तं भवति? इह सर्वक्षेत्रज्ञानां क्षेत्रविषयादिविभागविभक्तभावसंवेदकस्वभावानां संवेदनशक्तिः[6] तत्तत्पदार्थभावाभावपरिच्छेदकत्वात्[7] द्विधा प्रवर्तते। तथाहि—कदाचित् कस्यचिदपोहनरूपतया प्रसरति। भावकत्वेन च प्रसरः[8] द्विप्रकारः—ज्ञानात्मकः स्मृत्यात्मकश्च; यदभूतपूर्वस्य प्रकाशनं तज्ज्ञानम्; यदनुभूतपूर्वस्य प्रत्यवमर्शनं सा स्मृतिः; उभयथापि[3] प्रकाशनभावस्त्वपोहनमिति त्रिप्रकारोऽप्ययं

१. IO शक्तिपात
२. IO ध्यायो युक्तन्यायेन
३. All read किञ्च बहुना
४. BN[1] omits न
५. IO स्मृतिज्ञानसंमोहनलक्षणः BN[1] स्मृतिः ज्ञान-
६. IO संवेदने
७. IO पदाभाव
८. All except BN[1] प्रसरेत
३. IO omits अपि

क्षेत्रज्ञशक्तिप्रसरः संवेदकात्मकत्वात् परमार्थसंवेदितुरेकस्मान्मत्त एव प्रसरन् मायावशान्नानाक्षेत्रज्ञसम्बन्धतया[1] प्रतीयत इत्यर्थः। यथा चैवं प्रसरो मत्तः प्रसरति,[2] तथा सकलजगत्क्रियाप्रपञ्चप्रथनप्रथमकारणभूतः[3] परापरतत्त्वरूपः शब्दराशिरपि[4] मत्त एव; तेन चानन्तप्रपञ्चप्रसृतेनाप्यहमेवैको वेद्य इत्याह—"वेदैश्च सर्वैः" इत्यादि। वेदो वर्णाश्रमविभागव्यवस्थितविविधक्रियानियामकः[5] शब्दराशिः; तस्यान्तो[6] निष्ठा वेदान्तः, आत्मैव परमेश्वर एकं[7] तत्त्वमित्यादि ज्ञानव्यवस्थापको वचनप्रपञ्चः; तस्योभयरूपस्याप्यहमेवैकः कर्तेत्यनेन वेदवेदान्तात्मकशब्दस्य स्वतःसिद्धत्वं द्वैतवादिव्यवस्थापितेश्वरप्रणीतत्वं च पराकर्तुमभिप्रेतम्। यतोऽयमत्राशयः—इह[8] अद्वयचित्प्रकाशैकस्वभाव एकः पदार्थः परमार्थसन्नित्ययं[9] तावत्सिद्धान्तो व्यवस्थापितः; स चैवंविधोऽहं येनाव्यभिचारिणा[10] प्रत्यवमर्शात्मकेन धर्मेण तथाविधं स्वरूपं व्यस्थापयामि; तत्परं शब्दतत्त्वं तस्य[11] परमार्थतो मत्स्वरूपाभिन्नस्यापि मदिच्छोद्भावितेदन्ताभासमाननानाजगद्भावभेदव्यवस्थापकत्वेन विजृम्भमाणस्य तद्वदनन्तविकल्पात्मकं स्वरूपमपरं शब्दतत्त्वम्; तस्य चैवंविधस्य ज्ञानधर्मस्यैव[12] विकल्पात्मकस्य श्रोत्रग्राह्यध्वनिविशेषात्मकतयावभासितः[13] पदार्थः

१. BN[1] मायाशक्तिवशात् न क्षेत्रतया संबन्ध-
२. BN[1] adds इति
३. BN[1] जगत्प्रक्रिया
४. IO and BN[1] omit परापर...शिरपि
५. BN[1] नियामिकः
६. BN[1] अन्ते
७. IO एकतत्त्वं
८. IO इत्यहमद्वय
   BN[1] इहाहमद्वय
९. IO सदित्ययं
१०. All except BN[1] चारिण्या
११. BN[1] तदस्य
१२. BN[1] omits ज्ञान
१३. IO तयाविभासितं पदार्थं

सङ्केततया मयैव सत्यसङ्कल्पेन परमगुरुणा पूर्वेषामपि[1] पूर्वेण परेण[2] पुरुषेण मुख्य-कार्यज्ञेयार्थविषयतया वेदवेदान्तरूपवाचकत्वेन[3] प्रतिनियमितः तादृगर्थवाचकत्वेन[4] चावभासमानमेव वेदवेदान्तयोर्मत्कार्यत्वम्; तदनेनानन्तप्रपञ्चेनापि वेदवेदान्त-प्राधान्यप्रतिपादितेन शब्दात्मकेन स्वशक्तिप्रसरेण नानावाच्यनिष्ठतयावस्थितेनापि परमार्थतश्चिदात्मकमत्स्वरूपव्यतिरिक्तपदार्थान्तराभावादहमेवैको बोद्धव्य इति "वेदैश्च सर्वैरहमेव वेद्यः" इत्यनेनोक्तम् ॥

तदित्थं स्थिते[5] त्रिप्रकारः[6] प्रमातृव्यवहारो व्यवस्थितः। तथा च[7] यस्य[8] भौतिक-शरीरनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः[9], स स्थूलः प्रमाता; यस्य च तादृक्-शरीरवेदकतद्व्यतिरिक्तजीवनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः स[10] सूक्ष्मः प्रमाता[11]; द्वावेतौ भेदस्फुरणान्मायीयौ प्रमातारौ; यस्य पुनरशेषक्षेत्रव्यापकपरमार्थसत्य[12]-सामान्यसंवित्प्रकाशैकस्वभावपरमात्मनिष्ठाहंप्रत्ययनिबन्धनो भेदप्रतीतिकल्पनामात्र-संस्पर्शशून्यस्वरूपप्रत्यवमर्शमात्रात्मकव्यवहारः स परमार्थसत्यः परमपुरुषः। तत्स्वरूप-समापत्तिश्च परा सिद्धिः—इति क्रमेण प्रतिपादयन् शास्त्रसिद्धान्तसंग्रहं[13] दर्शयितुमाह—

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**

---

१. IO omits पूर्वेषामपि
२. IO परमपुरुषेण
३. IO क्त्वे प्रति
४. IO गर्थवादकत्वेन
५. IO omits स्थिते
६. IO त्रिकारणप्रोक्तमातृव्यव-
७. IO omits च
८. BN[1] omits यस्य
९. IO omits व्यवहारः.. निबन्धनः
१०. IO सुसूक्ष्मः
११. IO omits प्रमाता...मायीयौ
१२. BN[1] omits सत्य...सामान्य
१३. BN[1] सिद्धसंग्रहं

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात्क्षरमतीतोऽहमक्षरस्यापि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

यद्यप्यापातनिकयैव श्लोकचतुष्टयमेतद्व्याख्यातप्रायम्, तथापि विस्पष्टार्थं व्याख्यायते। इह हि लोके परमेश्वरमायाशक्त्युद्भावितक्रीडामात्रपरमार्थे[1] समस्ते जगति द्वावेव पुरुषौ, द्विप्रकारैव भेदनिबन्धनव्यवहारा पुरुषजातिरित्यर्थः। अत एव तावन्योन्यभिन्नतया सर्वप्रमातृसंवेद्यस्वरूपत्वे सति इमाविति प्रत्यक्षनिर्देशविषयेणेदं[2]शब्देन निर्दिष्टौ। कौ तौ द्वाविति तयोः संज्ञामाह—क्षरश्चाक्षर एव च इति[3]। एतयोर्लक्षणमाह—एकस्तावत् क्षरः प्रतिक्षणविनश्वरजन्मादिविकारयोगिभौतिक[4]शरीरनिष्ठाहंकारात्मकत्वात् स्वरूपसञ्चलनशीलः। तथाहि—शरीरगता[5] जन्मादयो विकारास्तद्धर्मानुविधायिनि तद्व्यतिरिक्तस्वभावे[6]ऽपि तस्मिन्नुपचर्यन्ते; ततः सर्वाणि भूतानि क्षरः इत्युक्तम्। तथा निर्विकारसंविन्मात्रनिष्ठत्वात् कूटवत्[7]पर्वत-

---

१. IO पारमार्थसमस्त-
२. IO omits इदं
३. IO इति तयोः
BN[1] इति च तयोः
४. IO omits गिभौतिक...जन्मादयो
५. BS[1] गतजन्मादयः
६. IO स्वभावेनापि
७. IO कूटवत् सर्वतः

शिखरादिवन्निष्प्रकम्पतया स्थितः कूटस्थः। अत एव क्षरस्वरूपविपरीतत्वादक्षर इत्युच्यते। अनेन मध्यमा सूक्ष्मा दशा पुरुषस्य प्रतिपादिता। यस्यां ज्ञातृमात्र-स्वरूपनिष्ठत्वात् क्षरस्वरूपं[1] ज्ञेयशरीरधर्मानुविधायित्वं च नास्ति परस्परभेदेन व्यवस्थिता नानाक्षेत्रज्ञप्रतीतिश्च न तावदुच्छिन्ना, एवं मायोद्भावितं पुरुष-[2] जातिद्वैविध्यं प्रतिपाद्य पारमार्थिकं परपुरुषस्वरूपं प्रतिपादयितुमाह—उत्तमः पुरुष इत्यादि। एताभ्यां क्षराक्षरशब्दप्रतिपादिताभ्यां पुरुषाभ्यामन्यः सत्यस्वरूप-मात्रप्रतिष्ठत्वात् विलक्षणः; अत एवोत्तमः सर्वपुरुषातिशायिधर्मा[3]। अत एव परमात्मा मायाहेतुकागमापायानित्यधर्मसामानाधिकरण्याभावात्परमो निरुत्तरः सत्य आत्मा चेतनोऽसावित्युक्तः। कोऽसौ? यो निष्प्रतीघातस्वच्छन्देच्छापरिस्पन्दत्वा-दीश्वरः सन्निदं चराचरमनन्तभावजातं[4] सन्ततं लोकत्रयं सकलं जीवलोकमाविश्य, तथा प्रकाशकतया व्याप्य बिभर्ति धारयति, इत्थं स्थितिमनुभावयति, सामान्य-संवित्प्रकाश्यमात्रप्रकाशमानतामन्तरेण[5] न कश्चित्पदार्थो न केनचित्पदार्थेनावस्थातु-मलमित्यसकृदुक्तमेवैतत्प्रकरणे[6][7][8]। लोकत्रयस्य चाव्ययमिति विशेषणं प्रवाहनित्यत्वा-दक्षयत्वविवक्षया बोद्धव्यम्[9]। अत एव मायीयपुरुषवैलक्षण्यं प्रतिपादयितुमाह—यस्मादित्यादि। यतो हेतोर्यथाप्रतिपादितस्वरूपं क्षरं स्थूलं[10] पुरुषमतिक्रान्तः, अक्षरस्यं

१. IO and BN[1] रूपज्ञेय
२. IO पुरुषं जानन्ति। द्वैविध्यप्रति
३. BS[2] धर्मः
४. IO भावसन्ततं
५. BS[2] प्रकाशमात्र
६. IO मिति महदुक्तमेवै-
७. IO and BN[1] प्रकारेण
८. IO adds इति
९. IO सूक्ष्मं
१०. BN[1] adds सूक्ष्मस्य

च यथाप्रतिपादितस्वरूपस्य सूक्ष्मस्यासत्यभेदप्रत्ययाभावादुत्तमः प्रकृष्टस्ततोऽन्वर्थया संज्ञया लोकशास्त्रयोः पुरुषोत्तम इत्यहं प्रतीतः ; एवं च यथोक्तेन प्रकारेण यो योगी मामसंमूढः सन्देहादिमोहैरहितः सन् पुरुषोत्तमतया जानाति आत्मत्वेन प्रत्यवमृषति, सविशेषितज्ञेयत्वात्सर्वभावेन सर्वात्मकत्वेन वास्तवेन भजति सेवते, स एको मुख्यया वृत्त्या मद्भक्त इत्यर्थः। सर्वभावसंवित्स्रोतसां सामान्यसंवित्प्रकाशसागरसामरस्यानुभवलक्षणं विज्ञानं मद्भक्तेः परं रूपमुक्तम्। यदुक्तं स्तोत्रे केनचित्—

" चित्प्रकाशपरामर्शशक्तिमूर्त्या विशिष्यते ।
अप्यद्वयदशोन्मेषे भव्यानां भक्तिरेव ते ॥" इति

यथोक्तज्ञानफलनिर्देशेनाध्यायमुपसंहरन्नाह—

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥**

इति यथोक्तेन प्रकारेण, गुह्यतमं सर्वरहस्यातिशायि शास्त्रमिदं भवता प्रत्यक्षानुभूतफलं मयाभिहितम् ; नातः परं वक्तव्यमस्तीत्यर्थः। अत एवाह—एतद्बुद्ध्वा

---

१. IO and BN[1] omit सूक्ष्मस्य
२. IO अन्वर्थतया
३. IO and BS[1] भेदरहितः
४. BN[1] adds सः
५. BN[1] तत्त्वत्वात्
६. BN[1] सर्वाभावसरित्स्रोतसां
७. IO स्वरूपं
८. IO स्तोत्र
९. IO ज्ञानदल
१०. IO शास्त्रं मया प्रोक्तं तवानघ

[1]यथावदवगम्य बुद्धिमान् पुरुषः स्यात् ; अविज्ञाते त्वस्मिन् सत्यामपि बुद्धाव[2]बुद्धिमन्त एव प्रमातारः शरीरादिहेयवस्तुनि मग्नचित्तत्वात्तेषां तथैतदेवानुष्ठाय कृतकृत्यः पुरुषः स्यात् ; कृतं निरवशेषितं कृत्यं यथाकरणीयं येन स तथा ; एतद् ज्ञान-प्रतिपादितार्थानुष्ठानव्यतिरेकेण या काचित् क्रियानुष्ठीयते, तया सम्यगनुष्ठित-यापि न कृ[3]तार्थः स्यात्—इति सर्व[4]ज्ञानानां सर्वक्रियाणां च यथोक्तज्ञान-निष्ठत्वेनानुष्ठितानां परमात्मस्वरूपसमापत्तिलक्षणपरसिद्धिसाधनत्वमित्योम् ॥

ऊर्ध्वाधःक्लेशमूलाश्रितफलपदवीकर्मभूमूरिशाखा-
सन्तानव्यक्तसत्त्वाद्युपचितविषयव्रातपत्रौघचित्तम् ।
अश्वत्थं छेत्तुमेनं भुवनचयमयं तत्त्वदृग्व्यक्तिहेतोः
सन्तोऽध्यायेऽत्रं[5] शस्त्रं तपनत्रिगणिते बोधमुत्तेजयन्तु ॥

इति [6]श्रीमद्राजानकराम[7]विरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
पञ्चदशोऽध्यायः ॥



---

१. BN[1] omits यथाव...बुद्धाव
२. BN[1] च बुद्धि-
३. BN[1] कृतार्थी
४. BN[1] सर्वज्ञानां
५. BN[1] omits अत्र शस्त्रं
६. BS[2] omits श्री...नाम्नि
७. BN[1] रामकवि

## ॥ अथ षोडशोऽध्यायः ॥

---

एवमस्य पञ्चदशाध्यायपर्यन्तशास्त्रोपनिषद्भूतस्य ज्ञानस्य पूर्वम्,

"महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्तेऽनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥"

इत्यादिना, तथा—

"मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥"

इत्यादिना सर्गद्वयोपोद्घातेन विषयविषयिविवेचनादि यत्सूचितं तदिदानीमध्यायेनानेन वितत्य निर्णेतुं भगवानाह—

**अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

---

१. BS[2] पर्यन्तं
२. BS[1] अव्ययीम्
३. All except BS[2] इत्यादि
४. BS[2] omits तथा
IO omits तथा...इत्यादिना
५. BN[1] omits प्रकृतिं...श्रिताः
६. BS[1] reads सर्गद्वयोपोद्घातेन after सूचितं
IO and BN[1] add च
७. IO भगवानुवाच

अहिंसा सत्यमक्रोधस्त्यागो[1]ऽसैक्तिरपैशुनम् ।
दया भूतेष्व[2]लौल्यं च मार्दवं ह्रीरचापलम् ॥ २ ॥

तेजः क्षमा धृतिस्तुष्टिरद्रोहो नाभिमानता[3] ।
[4]भजन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

इह प्रथमाध्यायोपोद्घातप्रदर्शितविभागेन दैवस्यासुरस्य च सर्गस्यावान्तर-भेदपरिकल्पनया यद्यपि बहवः प्रकारा उक्ताः, [5]तथाप्यधुना सूक्ष्मैकनिष्ठताभि-व्यञ्जकगुणसामग्रीसंपन्नस्योत्तमस्य दैवस्य सर्गस्य परापरभेदेन द्विप्रकारत्वं तावत् प्रतिपाद्यते । तत्राभयादयो [6]नाभिमानान्ताः सप्तविंशतिगुणाः सामान्येन दैवीं संपदं दैवसर्गसम्पत्तिमभि तदाभिमुख्येन तां स्वीकर्तुं जातस्य कर्मभूमौ लब्ध-जन्मनः पुरुषस्य भवन्तीति यद्यप्यु[7]क्ताः, तथाप्यभयादयः प्रथमे चत्वारो गुणाः परां दैवीं संपदमभिजातस्य भवन्ति; दानादयस्तु विशेषा अपरामभिजातस्य भवन्तीति विशेषोऽत्र विवक्षितः । स तथैव व्याख्यायते । तत्राभयं सर्वतः कुतश्चिच्चेतनाचेतन[8]रूपात् भावजाताद्यथोक्ताद्द्वयज्ञानप्रतिष्ठितबुद्धित्वे सत्या[9]त्माभेदेन प्रतिपद्यमानाद्द्वयस्यात्मा[10]व्यतिरिक्तपदार्थाश्रयस्य प्रेप्सितविषयाप्राप्तिविघातादिहेतोः [11]सौध्वसस्याभावः । तच्च पर[12]मात्मस्वरूपमापन्नकल्पस्य योगिनो भवति,[13] यदुक्तम्[14]—

---

१. IO त्यागश्शान्तिरपोशनम् [पैशुनम्]
 BN[1] त्यागो भक्तिरपैशुनम्
२. BS[1] अलोलुत्वं
३. All except BN[1] नातिमानिता
४. IO and BN[1] भवन्ति
५. IO तथापि मोक्षैक
६. All except IO नातिमानितान्ताः
७. BN[1] उक्तः
८. IO भूतात्
९. BN[1] आत्मभेदेन
१०. BS[2] आत्मव्यति
११. IO सर्वस्यास्य
 BN[1] सत्त्वस्यास्य
१२. IO परमात्मतत्त्व-
१३. BS[1] and BS[2] भवन्ति
१४. BS[1] adds उत्पलदेवपादैः

"यो विकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥" इति ।

तथा तस्य कारणभूता सत्त्वशुद्धिः, सत्त्वगुणप्रधानत्वात् सत्त्वशब्दवाच्यस्य चित्तस्य शुद्धिः भेदमलप्रक्षालनाभ्यासान्नैर्मल्यम् । तथा तस्या अपि कारणभूता ज्ञाने यथाप्रतिपादितशास्त्रार्थबोधे[2]व्यवस्थितिः निरुपप्लवा प्रतिष्ठा[3] । तथा तद्धेतौ योगे शास्त्रचोदितस्वकर्मानुष्ठानलक्षणे परस्मिन् समाधौ व्यवस्थितिः । तथैव निर्विप्लवा प्रतिष्ठेत्येते[4] परां दैवीं संपदमभिजातस्य योगिनो धर्माः संभवन्ति । स ह्यारूढदशां प्राप्तः । अथ दानं स्वद्रव्यस्य परस्वत्वापादनम्; तच्च द्विप्रकारम्—करुणामात्रहेतुकं दीनार्द्यर्थिजनविषयत्वेनाविशेषप्रवृत्तिकमेकम्, शास्त्रचोदितविधिशेषसम्पत्तये विशिष्टेतिकर्तव्यतासंस्कृतं पात्रदेशकालादिविशेषमपरम् । तथा दमः शास्त्रविरुद्धेभ्य अर्थेभ्य इन्द्रियाणां बाह्याभ्यन्तराणां निग्रहः । तथा यज्ञो वर्णाश्रमक्रमविभक्तो नित्यनैमित्तिकभेदेन द्विविधो विशिष्टदेवतायागः । तथा स्वाध्यायो यथास्वमध्येयत्वेनोपदिष्टस्य शास्त्रस्य मन्त्रादेर्वाध्ययनमभ्यासेन बोधः । तथा तपः तथैव नित्यनैमित्तिकभेदेन शास्त्रीयनियमपूर्वं क्षुत्तृष्णादिसहिष्णुतया शरीरतपनम् । तथा आर्जवमृजुत्वं प्रकृतिसरलं ब्रह्ममार्गैकालम्बनत्वात्

---

१. BS[2] notes as an alternative reading इममर्थ-
२. BN[1] बोधो व्यव
३. IO प्रकृष्टा
४. IO इत्येतैः
५. IO दीनार्थार्थिजन
६. IO संभवं
७. IO क्रमविविक्तो BN[1] क्रमे
८. IO योगः
९. IO मन्त्रादेवाध्ययन
१०. IO सरलब्रह्माशङ्कापुरस्तनत्वात् BN[1] सरलब्रह्माण्डकालम्बन

समस्तकायवाक्चित्तसाध्यक्रियाविशेषसाफल्यैककारणमकौटिल्यम्। तथा अहिंसा शास्त्रनिषिद्धायाः प्राणिवधादिक्रियायाः कामक्रोधलोभहेतुकायाः कृतकारितानुमोदितादिविशेषपरिशुद्धं[1] परिवर्जनम्। तथा सत्यमात्यन्तिकभूतहितसंपादनाभिसन्धिपरिशुद्धे यथादृष्टानुमितार्थकथनम्। अक्रोधो हिंसानिष्पत्तिहेतोर्विवेकहारिणः कोपाख्यस्य[2] चित्तक्षोभस्याभावः। त्यागः, दानस्योक्तत्वात्, तैत्तत्क्रियाफलाभिसन्धेः[3] परिहारः।[4] असक्तिः शास्त्रविहितसेव्येषु विषयेष्वनिमग्नचित्तत्वम्। अपैशुनम्, पिशुनः परदोषसूचकः, तस्य भावः पैशुनम्[5], तदभावो राजादिविषयद्वेषात्परावद्याविष्करणाभावः। तथा[6] दया भूतेषु सर्वप्राणिषु क्लेशापन्नेषु तदुज्जिहीर्षया करुणा। तथा अलौल्यं[7] निषिद्धेषु लम्पटत्वं[8] लौल्यम्; तदभावः अलौल्यं तेषु प्रवृत्तिरित्यर्थः। विहितेषु प्रवृत्तो निषिद्धेषु विषयेषु प्रवृत्तावपि सत्यां रागद्वेषरहितत्वेन[9] भाव्यम्। तथा[10] मार्दवं मृदुषु निखिलेषु भूतव्रातेषु स्वात्मरूपेश्वरत्वभावनयातिकोमलान्तःकरणः; तस्य भावो मार्दवम्। तथा ह्रीर्लज्जा अस्मिन् निषेव्यमाने साधुजनो मा विगर्हेदित्याशङ्कया दुश्चिन्तितदुर्वचनदुश्चेष्टितेषु जुगुप्सेति[11] यावत्। तथा चापलं चपलः सत्कार्येष्वस्थिरः; तस्याभावश्चापलम्; तदभावोऽवश्यकरणीयेष्वप्रमत्तते[12]-

---

१. IO शुद्धि
२. IO कोपावेशस्य
३. IO and BS[2] ततः क्रिया
४. IO परिहारः शान्तिशास्त्रविहिते मेध्येऽध्वनि सन्नचित्तत्वं
५. BN[1] पैशुन्यं
६. IO तथा भूतेषु सर्वभूतेषु सर्वप्राणिषु
७. BN[1] adds लौलः
८. IO omits लम्पट...विषयेषु
९. IO रागदोष
१०. IO omits तथा...मार्दवम्
११. BN[1] जुगुप्सितेति
१२. BN[1] अप्रमत्तत्वं

त्यर्थः। तेजः परै[1]रनभिभवनीयत्वै[2]कारणं स्वाभाविकमोजः। तथा क्षमा तेजस्वित्वे सत्यपि परापराधसहिष्णुता। धृतिरवसादहेतौ सन्निहितेऽपि स्वै[3]परिस्पन्दाच्च्यवनलक्षणं धैर्यम्। तथा तुष्टिः सर्वथा सर्वदा विषाददोषानाक्रान्तचित्तत्वम्। तथा अद्रोहः[4] प्राणिनां हननविषयाया इच्छाया अप्यभावः। तथा नाभिमानिता[5] मानो देहादिषु अनित्येष्वहंकारः; तथा परतन्त्रेषु भोगेषु ममकारः; स[6] सर्वदा निश्चलत्वादतिशयवानभिमानः[7], तदभिभवो[8] नाभिमानः; स च मुमुक्षूणामेव संभवति; ते हि यथोक्ताभिमानमहादोषो[9]च्छेदे[10] नित्योद्यता भवन्ति; अत एव च तस्मिन् सति दानादयो धर्मा दैवसंपदभिव्यक्तिहेतवः सम्पद्यन्ते इति सर्वेषां संस्कारकत्वेन[11] तस्य पर्यन्ते निर्देशः कृतः। एवं मुमुक्षुजनाव्यभिचारिणीं दैवसर्गाभिव्यञ्जिकां परापरां गुणसामग्रीं प्रतिपाद्य इदानीं तथैव द्विप्रकारस्य तद्विपरीतस्यासुरस्य सर्गस्य [12]तां क्रमेण प्रतिपादयति। दैवसर्गवत्परापरभेदेनासुरोऽपि[13] सर्गो द्विप्रकारो विवक्षितः[14]। तत्र तमोगुणप्रधानो नैरकतिर्यग्योनिपातहेतुः[15][16] कर्माधिकृतपुरुषात्मकोऽपर इत्यस्याग्रे विस्तरेण विशेषणानि वक्ष्यति॥

---

१. IO पराभिभव
२. BN[1] नीयकारणत्वं
३. BN[1] सुपरि
४. IO अद्रोहः
५. IO and BN[1] नाभिमानिता
६. IO omits स
७. BS[1] and BS[2] अतिमानः तदभिभावो नातिमानः
BN[1] अनभिमान उच्यते तदभावो नाभिमानः
८. BS[1] तभिभावः
९. BS[1] and BS[2] क्तातिमान
१०. IO and BN[1] च्छेद
११. IO संस्कारत्वेन
१२. IO अतः
१३. IO omits अपि
१४. IO विसर्जितः
१५. IO नरकबहिर्योग्यो निपातकर्मा
१६. All except BN[1] हेतु

संप्रति तु सामान्यगुणोद्देशद्वारेणासुरीं संपदं प्रतिपादयितुमाह—

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥**

एते धर्मा आसुरीं रजस्तमःप्रधानत्वादासुरशब्देनोक्तां संपदं शरीरादिसंपत्तिमभिमतां स्वीकर्तुं जातस्य कर्म[1]भूमावुत्पन्नस्य पुरुषस्य भवन्ति । तत्र दम्भो दृष्टमात्रपरतया श्रद्धा[2]दिरहितचित्तत्वेन नानाविधधर्मक्रिया[3]चरणम्[4] । दर्पः स्वगुणसंभावनया हर्षमोहात्मकः चित्तविकारः अभिमानात्मा ख्यातः । क्रोधो हिंसाहेतु[5]र्विकारः । पारुष्यं वाक्चित्तचेष्टानां रूक्षता[6] । अज्ञानं ज्ञानस्य पदार्थ[7]तत्त्वबोधस्याभावः दम्भादिसर्वदोषहेतु[8]भूतत्वात् सर्वेषा[9]मन्ते निर्दिष्टः—इत्येते रजस्तमःप्रभवा[10] धर्मा आसुरं सर्गं सूचयन्ति ॥

एतयोः सर्गयोः फलं निर्देष्टुमाह—

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

---

१. IO कर्मणः क्रमादुत्पन्नस्य
२. BN[1] श्रद्धारहित
३. IO धर्मकृत्
४. IO omits चरणं
५. IO हेतुविकारः
६. IO क्रौर्यं instead of रूक्षता
७. IO पदार्थत्वे बोध
BN[1] पदार्थतत्त्वे बोध-
८. BN[1] भूतहेतुत्वात्
९. IO सर्वेषां सर्वे निर्दिष्टाः
१०. IO प्रभवधर्माः

एषा यथानिर्दिष्टा दैवी संपद् दैवसर्गनिर्वृतिः[1] विमोक्षाय संसारदुर्गापक्रान्तये ; न हि यथोक्तगुणानुमितदैवसर्गभाग्विमोक्षमनवाप्य[2] ततो निवर्तेत इत्यर्थः। आसुरी पुनस्तद्विपरीता बन्धलक्षणं[3]तद्विपरीतफलैव। ततश्च त्वं[4] दुस्तरात्संसारदुर्गात् कथमहमेवंविधो मुच्येयेत्यात्मन्यसामर्थ्यजनितं[5] शोकं मा कार्षीः, यतो यथोक्तलक्षणसंवादाद्दैवीं[6] संपदमभिजातोऽसि॥

अथ द्विविधत्वमेव सर्गस्य कर्माधिकृतं जनं प्रति नियमितुमाह—

**द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु॥ ६॥**

यथाप्रतिपादितेन विभागेन द्वौ द्वावेव, न तृतीयः, भूतानां कर्मभूमिजन्मनां पुरुषाणां सर्गौ प्रादुर्भावौ[7]। कौ तौ? दैव आसुर एव च। तत्र सत्त्वगुणप्रधानत्वाद्देवसम्बन्धिसर्गसदृश उपचाराद्दैवशब्देनोक्तः[8][9] एकः। तथा रजोगुणप्रधानत्वात् आसुरसम्बन्धिसर्गसदृशः तथैवोपचारात् द्वितीयः; तयोर्मध्याद्दैवः परापरगुणप्रतिपादनक्रमेण[10] वितत्य प्रतिपादितः। आसुरस्तु सामान्यतः प्रतिपादितः। तमिदानीं कथ्यमानमवधारय॥

---

१. BN[1] निवृत्तिः
२. IO भारिद्विमोक्ष
३. IO लक्षणं
४. IO omits त्वं
५. IO जनित
६. BN[1] दैवीसंपदति
७. IO प्रादुर्भूतौ
८. IO दैव
९. IO omits उपचारा...तथैव
१०. IO and BS[2] पादनमात्रेणोद्दिष्टतो विस्तरेण प्रतिपादितः। BN[1] प्रतिपादनमात्रेणोद्दिष्टो न न विस्तरेण गुणप्रतिपादकक्रमेण वितत्य

तत्रापरस्य[1] तावदासुरस्य सर्गस्य स्वरूपमाह—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

असत्यमप्रतिष्ठं ते[2] जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिंचित्कमहेतुकम् ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः[3] ॥ ९ ॥

आसुरा उद्रिक्ततमसो जनाः प्रवृत्तिं संसारप्रवर्तनहेतुभूतं शास्त्रचोदितं[4] कर्म न विदुः न जानते; न च निवृत्तिं[5] संसारनिवर्तनहेतुभूतं ज्ञानादिसंस्कृतं कर्म ते स्वर्गापवर्गलक्षणफलनिरपेक्षतया दृष्टमात्रप्रयोजनं कर्मारभन्ते इत्यर्थः । अत एव प्रवृत्तिनिवृत्तिसाधनानि तेषां न संभवन्तीत्याह—न शौचमिति । शौचं[6] शास्त्रनियमितेतिकर्तव्यता[7]संपाद्यं शुचित्वं कायचित्तयोः शुद्धत्वं तेषां नास्ति । नापि चाचारः, शास्त्रनियमितं[8] वाङ्मनःकर्मभिर्विशिष्टमाचरणम्[9] । न च सत्यमुक्तलक्षणं यथादृष्टानुभूतार्थकथनम्, सर्वत्र यथेष्टचेष्टा[10] एवेत्यर्थः । कुत एवम्? यतः

---

१. IO and BN[1] तत्र परस्य
२. IO and BN[1] च
३. IO अहिताः. This is an alternative reading in BN[1].
४. IO adds शास्त्र...ज्ञाना
५. IO omits निवृत्तिं
६. IO omits शौचं
७. IO कारणता
८. IO शास्त्रादिवाङ्-
९. IO कर्मादिभिः
१०. IO यथेष्टं चेष्टन्त एव

ते इदं जगज्जीवलोकं शास्त्रीयमर्यादया वर्तमानमसत्यमवस्तुभूतमाहुः, अतश्च तत्सिद्ध्यर्थं शास्त्रेण शौचादिमर्यादा या स्थापिता मुग्धप्रतारणेति ते कथयन्तीत्यर्थः ; अत एवाप्रतिष्ठं त एतदाहुः। नाप्यस्य निसर्गासत्यरूपस्य शौचादिः प्रतिष्ठा स्थितिः कर्तुं शक्येत्यर्थः। अनीश्वरं चैतदाहुः। नास्य कश्चिदीश्वरो नियन्ता संभवति, यत्प्रणीतशास्त्रचोदिताः सोमादयोऽनुष्ठेया भवेयुः। अपरस्परसंभूतं भावनामन्योन्यकार्यकारणभावो यः प्रत्यक्षदृष्टः शास्त्रेण वा व्यवस्थापितः तं ते नास्तिकाः स्वभावमात्रवादिनो नेच्छन्ति। सर्वः कश्चिद्भावः स्वयमुत्पद्यते, स्वयं च विनश्यति, न कारणान्तरमपेक्षत इत्यपरस्परसंभूतमिदं सर्वमाहुः। तथा अकिंचित्कमविद्यमानं किंचित्सत्यरूपमंशमात्रमपि यस्य तत्तादृशमाहुः। अत एवाहेतुकं स्वकर्मादिकारणरहितं तेषामेवंविधानां लोकायतिकादीनां तामसानां व्यापारमीह। ते हि एतामेवंविधामीश्वरकर्मपरलोकाद्यभाववादमयीं दृष्टिं नास्तिकदर्शनमवष्टभ्य गाढमवलम्ब्य नष्टात्मानो नष्ट आत्मा सन्नेवादर्शनं प्राप्तः परमार्थसत्यश्चिद्रूपः पदार्थो येषां ते तथा ; त एवाल्पबुद्धयोऽल्पमात्रविषयदर्शित्वात् परिमिता

---

१. IO यः
BN[1] omits this word.
२. BN[1] वर्तनं
३. BN[1] and IO तत्स्थित्यर्थं
४. IO omits या
५. BN[1] adds सा
६. BN[1] प्रतारणां
७. BN[1] and BS[2] इत्याहुः
८. IO and BS[1] एवातिष्ठन्त
९. BN[1] नास्य
IO नापि निस
१०. IO and BN[1] शौचादयः
११. BN[1] करणभावः
१२. IO सत्यरूपं चिदंशरूपमात्रमपि
१३. IO omits नां लोक...मेवंविधा
१४. BN[1] आहुः
१५. IO omits गाढमवलम्ब्य
१६. IO and BS[2] आत्मैवमेवादर्शनं

बुद्धिर्धीः येषां ते तथाविधाः सन्त उग्रैककर्माणो दारुणव्यापारा[1] जगतो जीवलोकस्य क्षयाय विनाशाय प्रवर्तन्ते, तदर्थमेव कर्माणि कुरुते। किमुक्तं भवति? त एवं विधा नास्तिका यानि[2] कर्माणि कुर्वते[3], तेषां नरकतिर्यक्स्थावरादिभावपरिणामः फलम्; न[4] ते पुनः कर्मभूमौ पुरुषयोनिमासादयन्तीत्यर्थः। अत एवाशुभाः पापात्मकाः॥

एवमुद्रिक्ततमस्कस्यापरस्या[5]सुरसर्गस्य स्वरूपं प्रतिपाद्य इदानीमुद्रिक्तरजस्कस्यापरस्य तत् प्रतिपादयितुमाह—

**काममाश्रित्य दुष्पूरं दम्भलोभमदान्विताः[6]।**
**असद्ग्रहाश्रिताः[7] क्रूराः प्रचरन्त्य[8]शुचिव्रताः॥ १०॥**

अन्ये आसुरा जना एवंविधाः प्रचरन्ति व्यवहरन्ति। किं कृत्वा? दुष्पूरं दुःखेन पूरयितुं[9] कर्तुं न शक्यम्। कामं[10] विषयतृष्णात्मकं संकल्पमाश्रित्यावलम्ब्य। अत एव दम्भेनोक्तलक्षणेन लोभेन गर्वेण[11] मदेन चित्तोद्रेकेनान्विता अनुगता[12] व्याप्ताः। तथा असद्ग्रहाश्रिताः तथाविधदुष्टाभिनिवेशावलम्बिनः[13]। ततश्च क्रूरा[14] हिंसादिषु निरपेक्षाः। तथा अशुचिव्रताः अशुचीनि शास्त्रपरिदृष्टनियमापवर्तने-

---

१. IO व्यापारात्मनः
२. IO omits यानि
३. IO कुर्वन्ति
४. IO एते पुनः
५. IO अपरस्य तत्त्वमुत्थानं प्रतिपद्य
६. IO दम्भमानमदान्विताः
   BN[1] दम्भलोभसमन्विताः
७. BS[1] असद्ग्रहा
८. BS[1] प्रसरन्ति
९. BS[1] and BS[2] प्रेरयितुं
१०. IO कामविषय
११. IO गर्धेन
१२. IO अनुगन्तव्याः
१३. IO लम्बनाः
१४. BS[1] and BS[2] क्रूरहिंसादिषु

नाशुद्धानि तानि तानि काम्यानि व्रतानि नियमविशेषा येषां ते तथोक्ताः। किमुक्तं भवति? रजःप्रधानत्वाद् व्रतादिरूपं कामनानिमित्तकं कर्मारभन्ते; तमोऽनुगतत्वात्[1] तत्तेषामशुचि भवति[2], दम्भादिदोषान्विताश्च ते भवन्ति॥

किंच—

चिन्तामपरिमेयां च[3] प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः॥ ११॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थ[4]मन्यायेनार्थसञ्चयान्॥ १२॥

ते एवंविधा अर्थसञ्चयान् धनसमृद्धीः[5] ईहन्ते चेष्टन्ते। कीदृशान्? कामभोगार्थान् विषयास्वादप्रयोजनान्[6]। कथमीहन्ते? अन्यायेन—न्यायः[7] शास्त्रीयाधिकारदेशकालावस्थाद्यपेक्षमुख्यकल्पानुकल्पविहितस्ववृत्तनियमः[8], तं विना। कीदृशाः सन्त एवं कुर्वन्ति? चिन्तामर्थार्जनविषयं[9] ध्यानमपरिमेयां तैस्तृष्णाया[10] आनन्त्याद्बहुविधाम्[11] किंतु प्रलयान्ताम्। प्रलयो विनाशः शरीराभावोऽन्तः

१. IO त्वात्तु तेषां
२. IO and BN[1] अशुचिर्भवेत्
३. IO संप्रलया
४. IO लोभार्थं
५. IO समृद्धाः
६. IO प्रयोजकान्
७. BN[1] अन्यायः
८. IO मुख्ये कालानुकम्पविहित
९. IO अर्जने विषयां
१०. IO असंयततृष्णायाः
११. BN[1] विधात्

अवसानं यस्यास्तां तादृशीमुपाश्रिता: आलम्बितवन्त:। तथा कामोपभोगपरमा: काम्यन्ते इति कामा विषयसुखानि, तेषामुपभोग: सततमनुभवनं परमफलत्वेन प्रकृष्टो[4] येषाम्। अत एव एतावत्कामोपभोगमात्रमिह सार इति निश्चिता नि:संशयबुद्धय:। अत एव तद्विषयाभिराशाभिर्मनोरथैरेवं पाशशतै: बन्धन-रज्जुसमूहैर्बद्धा: संयता विघ्नितविषयान्तरस्वातन्त्र्या:। ततश्च कामक्रोधौ रागद्वेषौ इष्टानिष्टविषयौ परायणमाश्रयो येषां ते तथाविधा:॥

किंच—

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥ १३ ॥

असौ मया हत: शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिता:॥ १५ ॥

अनेकचित्ता विभ्रान्ता मोहस्यैव वशंगता:।
प्रसक्ता: कामभोगेषु पतन्ति निरयेऽशुचौ॥ १६ ॥

---

१. BS[1] and BN[1] कीदृशीं
२. IO and BN[1] यथा
३. BN[1] कामानि
४. IO adds यो
५. IO एव च तावत्
BN[1] एव तावत्
६. IO मनोरमै:
७. IO omits बद्धा:
८. IO संयतविघ्नित
९. BN[1] तच्च

इत्येवंविधेना[1]प्यज्ञानेन तत्त्वार्थप्रबोधाभावेन विमोहिता वैचित्र्य[2]मापादिताः सन्तः अशुचावत्यन्तामेध्ये निरये गर्भवासादौ निपतन्ति निमज्जन्ति, पुनःपुनर्जायन्त इत्यर्थः। कीदृशेन ज्ञा[3]नेन? अद्यास्मिन् दिने तावदिदं ध[4]नादि वस्तु मया लब्धं स्वीकृतम्, इदं च मे चेतसि स्थितं मनोरथमभिलषितं वस्तु प्राप्स्ये इदानीमधिगमिष्यामि; इदं तावद्धनं सुवर्णाद्यस्ति विद्यते, इत्थं चान्यद्रत्नादि भविष्यति स्वत्वमापत्स्यते; तथासौ कश्चिद्रिपुर्व्यापादितः, अ[5]तः परानपि तैस्तैरुपायैर्व्यापादयिष्यामि; तथाहमीश्वरो द्रव्यपुरुषादीनां स्वामी; तथाहं भोगी विषयसुखानुभविता; त[6]था सिद्धो लब्धप्रतिष्ठोऽहम्; तथा बलवान् दा[7]र्ढ्ययुक्तोऽहम्; तथा सुखी स्वीकृताभिलषितविषयैः[8]; तथा आढ्यो धनवान् अभिजनवान् कुलीनोऽहम्; किं बहुना! कः परो मया तुल्यो विद्यते! तथा यक्ष्ये, यज्ञाना[9]चरिष्यामि; तथा मोदिष्ये हर्षमनुभविष्यामि— इत्येवंविधैर्भूतवर्तमानभविष्यत्कालभाविषु शरीरविषयादिषु नित्येषु भावेषु विकल्पैरनेकैः[10] प्रतिक्षणं विद्यमानत्वाद्बहुरूपं चित्तं येषां ते तथा; त एव विभ्रान्तास्तत्त्वावगमाभावाद्विशेषेण भ्रान्ता अनवस्थिताः; यतो मोहस्यैव तमोरूपस्याज्ञानस्य वशंगताः

---

१. BN[1] विधेनाज्ञानेन तत्त्वार्थावबोधा

२. IO वैचित्त्यं This is noted as an alternative reading in BS[2].

३. BN[1] अज्ञानेन

४. IO धरादि

५. IO अतोऽपरानपि
BN[1] अपरानपि

६. IO alone adds तथा

७. BS[1] and BN[1] सामर्थ्य

८. BS[1] omits विषयः

९. IO नाचरामि

१०. IO अनेक

तत्पारतन्त्र्यं प्राप्ताः ; ततश्च कामानां शब्दादिसुखानां भोगेऽनुभवे प्रसक्ता अत्यन्तपरत्वरूपेण प्रकर्षेण सक्ता निमग्नचित्ताः ॥

किंच[1][2]—

आत्मसंभाविता[3]स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मा[4]मात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

ते पूर्वोक्तविशेषणा रजस्तमःप्रधानासुरसर्गभाजो जना यजन्ते नाम ; नामशब्दोऽलीकपर्यायः ; तेनालीकमेव निष्फलमेव यजन्ते, यागक्रियामनुतिष्ठन्तीत्यर्थः । कुतो निष्फलमेव ? यत एवंविधाः सन्तो दम्भेनोक्तलक्षणेन व्याजेन शास्त्रोक्तं विधिं परित्यज्य यजन्ते । किंविधाः सन्तः ? आत्मसंभाविताः । आत्मनैव स्वयमेव संभाविता वयमेवंविधगुणविशिष्टा इति गृहीताभिमानाः, न तु गुणदोषविचारनिपुणेन परेण केनचित्संभाविताः ; तथा स्तब्धाः प्रणतिविषये प्रह्वत्वरहिताः ; यतो ध[5]नात्समुद्गताभ्यां[6] मानमदाभ्यामहङ्कारात्मकाभ्यां युक्ताः । तथाहङ्कारादीन्[7] संश्रिता इति गतार्थम् । तथाविधाः सन्तो मां परमात्मानं

१. BN[1] तथा च
२. BN[1] omits किंच
३. BN[1] भाविनः
४. BS[2] ममात्म is noted as an alternative reading.
५. IO and BN[1] धनसमुत्थाभ्यां
६. IO adds अहङ्कारात्मकाभ्यां
७. IO दीनं श्रिताः
BN[1] दीनाश्रिताः

सर्वगतमज्ञानमोहितत्वाद[1]प्रत्यवमर्षेणे[2] प्रद्विषन्तोऽप्रीतिहेतुं[3]नाध्यवस्यन्तः ; यतोऽभ्य-सूयकाः नास्तिकत्वान्निन्दापराः ॥

एवंविधान्—

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुं[4]भान्वासुरीष्वेव योनिषु ॥ १९ ॥**

तान् पुं[5]रुषापशदान् क्रूरान् दारुणाचारान्, नास्त्यात्मा नास्तीश्वर इत्यादिना मां द्विषतो[6] मां प्रति अ[7]प्रतीतिं चित्तवाक्चेष्टाभिः प्रथयतः सतोऽजस्रं नित्यमेव संसारेषु कर्मभूमिषु ता[8]सु तासु दृष्टकर्माधिकारहेतुत्वात् अशु[9]भासु पापात्मिकासु योनिषु गर्भवासेषु क्षिपामि त्यं[10]जामि । ते नास्तिकत्वदुष्टसंकल्पाः सन्त एवंविधाः पुनः[11]पुनर्जायन्ते इत्यर्थः ॥

ते च—

**आसुरीं योनिमापन्ना नरा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

---

१. IO मोहित्वात्
२. IO र्षणेन
३. BN[1] हेतुत्वेनाध्यवस्यन्तः
IO हेतुनाध्यवसन्तः
४. BN[1] अशुभां
५. IO पुरुषाधमान्. This is an alternative reading in BS[2].
६. IO द्विषन्तः
७. IO अप्रतीतिचित्ताः वाक्
BN[1] अप्रतीतिं दत्तवान् चेष्टाभिः
८. BN[1] omits तासु
९. IO omits अशुभासु
१०. BN[1] न्यस्यामि
११. BN[1] पुनःपुनर्नयत इत्यर्थः

एवंविधा एते[1] जना आसुरीं यथोक्तां योनिं जन्मभूमिं भूयोभूयः प्राप्ताः प्रतिजन्म पूर्वसंस्कारदार्ढ्यान्मूढाः ज्ञानरहिताः सन्तो मां परमात्मानमनधिगम्यैव ततो योनेरन्या[2]मधमां निकृष्टां गतिं यान्ति प्राप्नुवन्ति ॥

कस्मा[3]त्ते एवंविधास्त्वां[4] न प्राप्नुवन्तीत्याह[5]—

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यज ॥ २१ ॥**

आत्मनः परस्य तत्त्वस्य नाशनमदर्शनकारणं येन हेतुभूतेनात्मा नश्यति न दृश्यते, तत् त्रिप्रकारम्; नरकस्य कर्मभूमिफलभेदेन[6] द्विप्रकारस्य निरयस्येदं द्वारं प्रवेशकर्म[7]कृत् । कामः सुखानुशायी रागलक्षणः क्लेशः । तथा क्रोधो द्वेषलक्षणः । तथा लोभ उत्तरोत्तरं[8] विषयेषु गर्धः । यत एते सर्वे आसुरा जना एतैः कामादिभिर्युक्ताः सन्तो मामपश्यन्त[9] एव दुर्गतिं गच्छन्ति, तस्माद्धेतोः त्वमे[10]तत्त्रयं परिहर, दैवसर्ग[11]सम्भवादेतद्युक्तमात्मानं मा मंस्था[12] इत्यर्थः ॥

---

१. BS[1] omits एते
२. IO omits अन्य.
३. BN[1] तस्मात्
४. IO विधास्ते
५. BN[1] त्वर्थ इत्याह
६. BN[1] फलभोगेनोभयप्रकारस्य
७. BN[1] omits कर्म
८. BN[1] उत्तरोत्तरेषु विषयेषु रागो यतः
९. BN[1] मामप्रपश्यन्तः
१०. BN[1] त्वयैतत्त्रयं
IO त्वयैतत्त्रयपरिहारादेवसमसंभावितादेवोद्यु
११. IO and BS[1] omit सर्ग
१२. IO मावमंस्थाः

यस्मात्—

एतैर्विमुक्तः[1] कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैः कामादिभिर्गुणात्मकैः दोषैर्निर्गुणस्वभावेन निसर्गशुद्धेनात्मनात्यन्तासम्बद्धैरज्ञानोपलक्षणतिमिराविर्भावमार्गै[2]स्त्रिभिर्वियुक्तो हेयतया प्रतिपन्नैः सद्भिः पृथग्भूतो[3] नरो मुमुक्षुर्दैवसर्गभाक् । पुरुषो हि [4]तं यथोक्तं ज्ञानकर्मानुष्ठानरूपमाचरति । ततः परां प्रकृष्टां परमात्मसमापत्तिज्ञानकर्मानुष्ठारूपां गतिं सिद्धिमाप्नोति ; एवंविधस्य च श्रेयसश्चरणं[5] शास्त्रोक्तविधानरूपम् ॥

अतस्तत्परेण भवितव्यमित्याह—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः[6] ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

यः पुरुषः [7]तत्तत्फलनिष्पत्तिहेतुं[8] तत्तत्क्रियादिविषयं शास्त्रेण चोदितं विधिं तत्तदितिकर्तव्यतारूपं वि[9]धानमुत्सृज्य तदस्य कामकारतः [10]स्वाच्छन्द्याद्वर्तते व्यवहरते,[11] स [12]ना[13]रब्धक्रियानिष्पत्तिरूपां सिद्धिं[14] लभते । ततश्च तत्फलभूतं[15] सुखं स्वर्गादिभोग्यां निवृत्तिमपि न लभते । [16]न च परां गतिमपवर्गलक्षणां लभते ॥

---

१. BN[1] वियुक्तः
२. IO मयैस्त्रिभिर्विमुक्तः
३. IO and BN[1] पृथग्भूतैः
४. IO omits तं
५. BN[1] श्रेयश्चरणं
६. BN[1] चारतः
७. IO omits तत्
८. BN[1] हेतु
९. IO विधामुत्सृज्य
१०. IO adds न स सिद्धिमवाप्नोति
११. IO and BN[1] व्यवहरति
१२. IO omits न
१३. BN[1] adds फल
१४. IO adds न
१५. BN[1] omits भूतं
१६. IO omits न च...लभते

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**कृत्वा[1] शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

तस्मादुक्तात्कारणादिदं कार्यम्, इदं न कार्यमिति व्यवस्थायां शास्त्रमेवैकं ते प्रमाणम् । शास्त्रं[2] हि नाम सदा साक्षात्[3]कृतयथास्थितार्थतत्त्वस्य परमगुरोः परमात्मनः प[4]रस्मात्परस्य वचनम् । अतस्तदेवाविसंवाद[5]त्वात्प्रमाणं कृत्वा शास्त्रोक्तेन विधानेन चोदितं कर्म त्वमिह कर्मभूमौ कर्तुं स्वजातिविहितं[6] कर्मानुष्ठातुमर्हसि ॥

स्फी[7]तालोकां दिनरुचिमिव द्योतयत्याशु दैवीं
घोरां रात्रीमिव मुकुलयत्यासुरीं यश्च दृष्टिम् ।
आत्मादित्यं समुदितमितः षोडशाध्यायशैलात्
दृष्ट्वैव द्राग्भवत भविनो मित्रवन्मोहनिद्राः ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
षोडशोऽध्यायः ॥



---

१. IO ज्ञात्वा
२. BN[1] शस्त्रे
३. IO साक्षादुत्कृष्टेभसथास्थिता
४. IO परस्य तस्य
५. BN[1] and BS[2] सवादकत्वात्
६. BN[1] विहित
७. BN[1] and BS[2] omit from here to the end.

## ॥ अथ सप्तदशोऽध्यायः ॥

---

तदनेनेदमुक्तमपर्यालोचितसकलशास्त्रपौर्वापर्येण शास्त्रैकदेशमात्रमाश्रित्य युद्धलक्षणस्वकर्मपरित्यागाय द्वितीये यदुपन्यस्तं त्वया तच्छास्त्राभासत्वादशास्त्रमेव । अतो यथाप्रतिपादितशास्त्रनिश्चयावहितेन[1] त्वया भवितव्यमिति सिद्धान्ते उक्ते संशयानः अर्जुन उवाच[2]—

ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

ये केचित्कर्माणि[3] शास्त्रोक्तं विधिं परित्यज्य श्रद्धया निर्विकल्पफल[4]-संभावनया व्याख्यातलक्षणयान्विताः सन्तो वर्तन्ते क्रियासु व्यवहरन्ति, तेषां का निष्ठा, का सिद्धिः, किं सत्त्वम्, किं सात्त्विकी सिद्धिः[5] तेषामित्यर्थः, आहोस्विद्रजः राजसी, अथ किं तमस्तामसी ?

अत्रोत्तरं भगवानुवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति ताः शृणु ॥ २ ॥

---

१. All except BN[1] अवहितत्वेन

२. BN[1]. The colophon that should be read at the last adhyāya is read here.

३. BS[2] कर्मणि

४. IO omits फल

५. BN[1] शुद्धिः

यया[1] श्रद्धयैव केवलयान्वितानां सिद्धौ त्वं संशयमितः[2] सा[3] त्रिविधा भवति ; तद्यथा—सात्त्विकी राजसी तामसी चेति ; यतो[4] देहिनां मायोद्भावितनानादेहाहंप्रत्ययनिबन्धनभेदानां जीवानां स्वभावजासौ ; ते हि दैवासुरसर्गभेदेन प्रतिपादितस्वरूपाः ; तत्र दैवसर्गभाजां सात्त्विकैः[5] सत्त्वादागतः सत्त्वगुणहेतुकः स्वभावः स्वरूपं येषां[6] तेषां श्रद्धा तादृश्यैव[7]। तथा[8]सुरसर्गभाजां रजस्तमोगुणप्राधान्यात् तद्धेतुको द्विप्रकारः स्वभावो राजसस्तामसश्च। श्रद्धापि तेषां तादृश्यैव। तेनेदमुक्तं भवति—सात्त्विकस्वभावानां सात्त्विकी श्रद्धा सा शास्त्रविध्युपपन्नैव भवति ; या तु राजसस्वभावानां सा राजसी, शास्त्रविध्याभास[9]युक्ता भवति, न सम्यग्विधानोपपन्ना ; तामसी तु शास्त्रविधिहीनैवेति विभागस्य वक्ष्यमाणत्वात्। अतो या शास्त्रविधिहीना सा सात्त्विक्येव न भवति ; या तु शास्त्रविधियुक्ता सा न राजसी, नापि तामसी—इत्येवंविभक्तस्वरूपाः ॥

ताः श्रद्धाः मया विभज्योच्यमानास्त्वमवधारयेत्युपक्रम्य स्वभावश्रद्धयोरन्योन्यकारणत्वं तावदाह—

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः[10] स एव सः ॥ ३ ॥**

---

१. IO यथा
२. IO त्वं शंससि तस्मात् त्रिविधा
३. BS[1] and BS[2] सः
४. IO ततो
५. IO and BN[1] सात्त्विकाः
६. BN[1] omits येषां
७. BN[1] तादृश्येव
८. IO कथा
९. IO शस्त्रविद्याभ्यास
१०. BN[1] श्रद्धा

इह सर्वस्य देहिनः समस्तस्य जीववर्गस्य[1] सत्त्वानुरूपा स्वभावानुसारिणी श्रद्धा भवति; तेन[2] यस्य सत्त्वं स्वभावः चित्तं सत्त्वगुणप्रधानं भवति, तस्य सात्त्विकी श्रद्धा भवति; एवं रजोगुणप्रधानचित्तस्य राजसी, तमोगुणप्रधानचित्तस्य तामसी—इत्यानन्त्येऽपि जीवानामपि त्रैविध्येन[3] संक्षिप्योक्त्वा[4] वस्तुतः सत्त्वादीनां गुणानामंशांशकतया[5] तारतम्याद्यथा जीवचित्तानामानन्त्यं तथा श्रद्धाया[6] अप्यानन्त्यम्; तत्पूर्वकत्वेन चानुष्ठितानां कर्मणां फलस्याप्यानन्त्यम्[7]। इत्थं श्रद्धायाः सत्त्वादिरूपत्वं व्याख्यातम्। इदानीं सत्त्वस्य स्वभावस्य श्रद्धानुरूपत्वं व्याचष्टे—अयं पुरुषो नानाकार्यकारणसङ्घात[8]मात्रनिबद्धात्मस्वभावः[9] श्रद्धामयः श्रद्धाप्रकृतिकः। ततश्च यः पुरुषो यच्छ्रद्धः, या सात्त्विकयादिका श्रद्धा यस्य स तादृशः स एव भवति। यस्य सात्त्विकी श्रद्धा स सात्त्विकः; यस्य राजसी श्रद्धा स राजसः; यस्य तामसी श्रद्धा स तामस इति। किमनेनोक्तं भवति? पूर्वं सत्त्वानुरूपा श्रद्धां[10] सर्वस्य भवतीत्युक्तम्; इदानीं तु श्रद्धानुरूपं सर्वस्य सत्त्वं भवतीति प्रतिपादितम्[11]। अतः श्रद्धासत्त्वयोः पुरुषगतयोः सात्त्विकादौ अन्योन्यकारणत्वमनादिप्रबन्धप्रवृत्तमवस्थितमित्यत्र तात्पर्यम्॥

---

१. IO सर्गस्य

२. IO omits तेन...भवति. In BS[2] this passage is found in the margin.

३. IO omits त्रैविध्येन

४. BN[1] संक्षिप्योत्थाप्य

५. BS[1] अंशांशिकया

६. BN[1] श्रद्धया

७. IO फलमप्यानन्त्यं

८. IO संख्यात-

९. IO and BS[1] omit स्व

१०. IO and BN[1] श्रद्धादि

११. IO प्रतिपादयितुमुचितम्। परः श्रद्धापुरुष उभयोः

तदेवं त्रिप्रकारायाः श्रद्धाया अभिव्यञ्जकं क्रियाविशेषमाह—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
भूतप्रेतपिशाचांश्च यजन्ते तामसा जनाः ॥ ४ ॥

सात्त्विकाः सत्त्वगुणमयचित्ताः सत्त्वगुणमयीन्[1] देवांश्चेन्द्राग्निप्रजापतिप्रभृतीन् यजन्ते, शास्त्रोक्तविधिपूर्वकं पूजयन्ति[2]। एवं राजसा[3] यज्ञादीन् शास्त्राभासविधिपूर्वकं यजन्ते। तामसाश्च[4] प्रेतादीनशास्त्रविहितेनैव[5] विधानेन यजन्ते। एते च राजसास्तामसाश्चासुरा इति ॥

तेषां चेष्टितमाह—

अशास्त्रविहितं घोरं तपस्तप्यन्ति[6] ये जनाः।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

कर्षयन्तः शरीरस्थं भूतग्राममचेतनम्[7]।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

तानेवंविधान् कर्मभूमिजन्मनः पुरुषानासुरनिश्चयान् विद्धि। आसुरो[8] रजस्तमःप्रधानत्वादसुरसम्बन्धी; तत्सदृशो निश्चयो निष्ठा येषां तान् तथाविधान्

१. BN[1] मयांश्च देवानिन्द्रा-
२. All except BN[1] प्रजायन्ते
३. IO राजसाश्च यक्षरक्षांसि शास्त्रो- विकं (?) यजते
४. BN[1] तामसांश्च
५. All except IO प्रीतादीन्
६. IO तप्यन्ते ये तपोधनाः
७. BS[1] अचेतसः
BN[1] अचेतसम्
८. BS[1] and BN[1] असुरः

जानीहि। कांस्तान्? ये जना घोरं दुःसहं[1] चित्तशरीरक्लेशकारणत्वात् दारुणं तपस्तप्यन्ते, विशिष्टफलाभिसन्धानेन नियम[2]विशेषमाचरन्ति। कुतो दारुण[3]मिति हेतुगर्भं विशेषणमाह—अशास्त्रविहितमिति। शास्त्रेण सर्वदा सर्वविशिष्टजन-[4] विगीतानुष्ठानेन वेदादिना विहितमनुष्ठितं शास्त्रविहितम्। एवं हि शास्त्रीयो विधिः

"यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं[5] यथा।
तथा[6] तपसि वर्तेत न मूढव्रतमाचरेत्॥"

इत्येवंविधहेतुनियमनैरपेक्ष्येण फलप्राप्तितृष्णात्वरितचेतसो राजसास्तामसाश्च स्वमनीषिकयैव दारुणं तपश्चरन्ति। यतो दम्भाहङ्कारसंयुक्ताः दम्भेनोक्त-लक्षणेन दृष्टमात्रफलेन कर्मणा तथाहङ्कारेण अहं शास्त्रोक्तं सम्यग्बुद्ध्वा[7] इयर्द्धा[8] अनु-तिष्ठामि शास्त्रार्थम्—इत्यात्मसंभावनात्मकेनाभिमानेन संयुक्ताः समन्विताः। तथा कामरागबलान्विताः; कामेषु विषयभोगेषु रागोऽभिलाषः तस्य बलमशास्त्रविहित-क्रिया[9]प्रवर्तने सामर्थ्यं तेनान्विता युक्ताः, तेन[10] घोरेण तपसा। किं कुर्वाणाः? अचेतनं प्राकृतं[11] जडं भूतग्रामं पृथिव्यादिसङ्घातं शरीरे देहे स्थितं तदधिष्ठातृभावेन

---

१. BS[1] and BS[2] दुःखहचित्तक्लेश
२. IO विनयविशेषं
३. IO घोरमिति
४. IO जनगीतानुष्ठानेन विदाविदा विहित
   BS[2] जनगीतानु-
५. IO मृत्युत्वं
   BN[1] मृत्युर्वशं
६. IO adds तथा
७. IO बुद्ध्ये यथानुति
८. BS[2] omits इयद्धा
९. BS[1] क्रियानुष्ठाने
१०. IO and BS[2] ते घोरेण
११. BN[1] जडं प्राकृतं

वर्तमानं मामात्मानं[1] कर्षयन्तः तात्त्विकस्वरूपानवबोधने[2] क्षपयन्त इव[3]। तेषां तथाविधानां दारुणस्य तपसो [4]देहचित्तव्यवधानमात्रमेव फलमित्यर्थः ॥

न केवलमेवंविधेन चेष्टितेनासुराणामेव स्वभावोऽनुमीयते, यावद्[5]दैवस्यासुरस्य च सर्वस्य कस्यचिज्जन्तोराहारादिभिरपि क्रियाविशेषैर्दृष्टादृष्टफलविशेषैः स्वभावोऽनुमीयते इत्याह—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आहारादीनां त्रिविधत्वं[6] सात्त्विकत्वादित्रिविधपुरुषप्रियत्वात्[7]। शिष्टं व्याख्यातप्रायम्[8] ॥

अथैषां भेदकथनार्थमाह—

आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥

सात्त्विकानां[9] सत्त्वगुणोद्रिक्तश्रद्धानां प्रिया अभिमता एवंविधा आहाराः । कीदृशाः ? आयुषो जीवितस्य, सत्त्वस्य बुद्धेः, बलस्य सामर्थ्यस्य[10], आरोग्यस्य व्याधि-

---

१. IO omits मामात्मानं
२. IO and BN[2] बोधेन
३. IO omits इव
४. IO and BN[1] देहे
५. IO and BN[1] यथावत्
६. IO त्रिविधं सत्त्वं सात्त्विक
७. BS[1] प्रयत्नत्वात्
८. IO व्याख्यातमेव
९. BN[1] कादीनां
१०. All except IO सामर्थ्यारोग्यस्य

रहितत्वस्य, सुखस्य निर्वृतेः,[1] प्रीतेः तृप्तेः, तत्कारणभूताया विवर्धनाः परिपोषकाः, रस्या आस्वादनीयाः, स्निग्धा बृंहणाः, स्थिराः साराः, हृद्या हृदयानुकूलाः ॥

अथ राजसप्रियानाह—

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोका[2]मयप्रदाः ॥ ९ ॥**

राजसस्य रजःप्रधानश्रद्धस्येष्टा अभिमता एवंविधा आहाराः । कीदृशाः ? कटवः[3] तिक्तरसातिनिम्बादयः । तिक्ते हि कटुशब्दव्यवहारो दृष्टो मुनिना—

"यश्च[4] निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं[5] गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥"

इति ; अम्लाः चुक्राः, लवणाः क्षाराः, अत्युष्णा उत्कटोष्णाः, तीक्ष्णा रूषणाः, मरीचादयो रूक्षाः, स्नेहशून्या विदाहिनः उष्णवीर्याः । अत[6] एव मनःशरीरक्लेशहेतुत्वात् दुःखशोकयोर्व्यथानुशोचनयोरामयानां व्याधीनां दातारः ॥

अथ तामसप्रियमाहारमाह—

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

---

१. BN[1] निवृत्तेः
२. All except IO शोकाभय
३. BN[1] कट्वम्लाः
४. IO यच्च
५. IO यच्चैनं
६. IO अर्थावसानाः शरीर

तामसस्य तमःप्रधानस्व[1]भावश्रद्धस्यैवमशनमभिमतम्? यातयामं अतिक्रान्तबहुका[2]लं सद् गतरसं विनष्टास्वादम्; तथा पूति दुर्गन्धि; तथा पर्युषितमतिक्रान्तरात्रिकम्; यदभक्ष्यत्वेनोक्तं उच्छिष्टं दम्पतिभुक्तशिष्टमन्येन वा जुष्टम्; अमेध्यं स्वभावा[3]देवाशुद्धमशुद्धसंपर्काद्वा। सात्त्विकस्याप्यवस्थावशात्कट्वादिराजसाहारप्रियता संभवतीति व्यवहारदर्शनात् स्वभावमात्रविषय एव विभागनियमो वेदितव्यः ॥

इदानीं यज्ञादीनां त्रैविध्यमाह। त[4]त्र यज्ञस्य तावत्—

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य [5]इज्यते।**
**यष्टव्यमित्ये[6]व मनः समाधाय स सात्त्विकः ॥ ११ ॥**

स सात्त्विकः सात्त्विकपुरुषानुष्ठेयत्वात्सत्त्वहेतुको य[7]ज्ञो यागविधिरुच्यते? कोऽसौ? फलं दृ[8]ष्टादृष्टं सौभाग्यं काङ्क्षति प्रार्थयते यः स फलाकाङ्क्षी, त[9]द्विपरीतस्त्वफलाकाङ्क्षी; तेन तथाविधेन निरभिसन्धिना ज्ञानवता मुमुक्षुणा य इज्यतेऽनुष्ठीयते। कीदृशः? विधिदृष्टः; [10]विधीयतेऽनेन कार्यमिति विधिः शास्त्रम्; तस्मिन्विधौ शास्त्रदृष्टो विभावित इतिकर्तव्यतास्वरूपोऽफ[11]लाकाङ्क्षिणा

---

१. IO omits स्वभाव
२. BN[1] कालमुद्गतरसं
३. BN[1] स्वभावः एकशुद्धं
४. IO अत्र
५. All except IO उच्यते
६. BN[1] omits एव
७. IO omits this word.
८. BN[1] दृष्ट्वादृष्टं
९. BN[1] omits तद्वि...ङ्क्षी
१०. IO omits विधीय...दृष्टो
BS[2] reads this passage in the margin.
११. IO फलका-

चेत्यते[1] चेति विप्रतिषेधं निराकर्तुमाह । कथमिज्यते यष्टव्यं वर्णाश्रमविभागेन[2] शास्त्रचोदितं सह[3]जं यागाख्यं कर्मावश्यकर्तव्यमेवेति चित्तं समाहितं कृत्वानन्तफललिप्[4]सायां यद्यप्युच्यते, न निष्कामस्य क्रिया संभवति, तत्र ब्रूमः—नेहेच्[5]छामात्रस्य प्रतिषेधो निष्का[6]मता ; किंतु दृष्टानुश्रविकभोगविषयसंकल्पा[7]भावो निष्कामतेह विवक्षिता ॥

अथ राजसं यज्ञमाह—

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यः ।**
**इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥**

तमेवंविधं यज्ञं राजसं [8]रजःप्रधानबुद्धिना रजःप्रधानश्रद्धेन च कर्त्रा कृतत्वात् रजोगुणात्मकफलम् ; अत एव चलं निश्चयाभावादव्यवस्थितं फलव्यभिचारा[9]च्चाध्रुवमनावश्यकम् । कं तं फलम् ? स्वर्गादिभोग्यमे[10]भिसन्धाय संकल्प्य तथा दम्भार्थं दम्भोऽदृष्टं सुखे कृत्वा अदृष्टफलविषया क्रिया अर्थः प्रयोजनम् यत्र तथा इज्यते अनुष्ठीयते ॥

---

१. All except BN[1] चोच्यते
२. BN[1] वर्णाश्रमभावः
३. IO सहज-
४. BS[1] लिप्सया
५. BN[1] न हीच्छा
६. BN[1] adds मता
७. IO विषयासंकल्पान् निष्का BN[1] संकल्पविनिष्काम
८. BS[2] omits रजःप्रधानबुद्धिना
९. BN[1] चारादध्रुव
१०. IO बोध्यममि-

अथ तामसमाह—

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

विधिहीनं शास्त्रोक्तेतिकर्तव्यतारहितम्, तथा मृष्टान्नममृष्टं पाकादिसंस्कारविरहाद्विरसमन्नादि यत्र; तथा मन्त्रहीनं तत्तत्क्रियाविहितेन रहितम्; तथा अदक्षिणं यज्ञं दक्षिणालक्षणेन प्रधानेनाङ्गेन शून्यम्; तथा श्रद्धयोक्तलक्षणया विना कृतम्[1] एवंविधं तामसपुरुषकर्तृकर्माहुः[2] ॥

कथम्? सात्त्विकत्वादिभेदेन तपस्त्रैविध्यं प्रतिपाद्य[3] इदानीं शारीरादिभेदेन तावत्तस्य त्रैविध्यमाह । तत्र शारीरं तावत्—

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं[4] तप उच्यते ॥ १४ ॥**

एतच्छारीरं[5] शरीरसम्बन्धि तप[6] उच्यते । किं तत्? तद्देवादीनां पूजनम्; शौचं मृज्जलादिना[7] शरीरशुद्धिः; आर्जवं कायव्यापारविषयमकौटिल्यम्; ब्रह्मचर्यं[8] प्रसिद्धम्; अहिंसा हननक्रियाभावः; पूजादीनां कायव्यापारनिर्वर्त्यत्वात्[9] शारीरमेतत्तपः[10] ॥

---

१. IO भूतं
२. IO कत्वमाहुः
३. BS¹ प्रतिपाद्यते
४. BS¹ and BS² शरीरं
५. All except BN¹ शरीरं
६. BN¹ तपः कथ्यते किन्तु देवादीनां
७. IO मज्जनादिना
८. IO omits this word. BS² reads it in the margin.
९. BN¹ कालनिर्वर्त्यत्वात्
१०. BS¹ शरीरं

अथ वाचिकम्—

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

वा[1]ङ्निर्वर्त्यत्वात् वाक्प्रकृतिकम् एतत्तप उच्यते । किं तत् ? स्वभावत एव माधुर्यादनुद्वेगकरं परस्याखेदावहम् ; तथा सत्यमवितथं सत्प्रियं मनोज्ञं हितं च कल्याणपर्यवसायि व[2]चनम् ; तथा स्वाध्यायस्य स्वशास्त्रपाठस्याभीक्ष्णम[3]आवर्तनम्[4] ॥

अथ मानसम्—

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो [5]मानसमुच्यते ॥ १६ ॥

एतत् तपो मनोनिर्वर्त्यत्वात्त् मानसमुच्यते । किं[6] तत् ? स्वमनसः प्रसादः स्वभावत एव रागद्वेषादिदोषरहितत्वादकलुषचित्तत्वम् ; सौम्यत्वं प्रशान्तता ; मौनं यद्यपि मुनिभावो मुख्यया वृत्त्या, तथापि[7] वाङ्नियमे रूढम् ; तच्च संकल्पशुद्धिहेतुत्वान्मानसं तपः । तथा आत्मविनिग्रहः आत्मनोऽन्तःकरणस्य निषि-

---

१. IO omits वाङ्...उच्यते. BS[2] reads it in the margin.
२. IO omits वच
३. IO स्वभ्यसनमभीक्ष्णं
४. BN[1] आवर्तमानं
५. BS[1] and BN[1] मानस उच्यते
६. IO and BN[1] किंतु स्वभावत एव This is an alternative reading in BS[2].
७. IO omits this word. BS[2] reads it in the margin.

द्धेभ्यो विषयेभ्यो विनिग्रहो नियमनम् । तथा भावस्याशयस्य संशुद्धिरार्जवादिः[1] कलङ्काभावान्नैर्मल्यम्[2] ॥

अथ त्रिविधमप्येतत्सात्त्विकादिभेदात्पुनस्त्रिविधमाह । तत्र सात्त्विकं तावत्—

**श्रद्धया परया तप्तं[योपेतं] तपस्तत् त्रिविधं नरैः ।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥**

शारीरादिभेदेन[3] त्रिविधमप्येतत्तप एवंविधं सत् सात्त्विकं भवति । कीदृशम् ? श्रद्धयोक्तलक्षणया फलसंभावनया[4] सात्त्विकयोपेतं युक्तम् । अत एव फलाकाङ्क्षारहितैः[5] युक्तैः समाहितैराचरितम्[6] ॥

अथ राजसम्—

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥**

तदिह तपो राजसं प्रोक्तम् । किं तत् ? यत्सत्काराद्यर्थं क्रियते, तत्सत्कारादीनां त्रयाणां मनोवाक्कायभेदात् यथाक्रमं त्रित्वमवसेयम् । तेन परतः प्रसन्न-

---

१. IO अनार्जवादि

२. BN[1] omits कलङ्काभावान्नैर्मल्यं and has instead:—
तथा देशे पुण्यसरित्तीर्थायतनादौ तथा काले विषुवद्ग्रहोपरागादौ यद्दीयते तत्सात्त्विको[कं] दानं नित्यनैमित्तिकक्रियासङ्गत्वेन व्यवस्थितविशिष्टविधिपूर्वकस्य दानस्य यज्ञेऽन्तर्भावात् पृथग्दाननिर्देशः पूर्तादिदानपरिग्रहार्थो वेदितव्यः । अथ नैर्मल्यं त्रिविध-
See the end of the commentary on verse 20 on page 459.

३. BS[1] and BS[2] भावेन

४. IO adds परया
BS[2] reads this word in margin.

५. BN[1] रहितः

६. BN[1] and IO तपसाचरितं

चित्तात्सत्कारो बहुमानो मेऽस्तु; तथा स्तुत्या[1]दिना वाग्व्यापारेण मानम्; तथा कायव्यापारेण पूजनं ममास्तु इत्येवमर्थं दम्भेनोक्तलक्षणेन यत् क्रियते तदेवमुक्तं चलमध्रुवमिति व्याख्यातम् ॥

अथ तामसमाह—

**मूढग्रहेणात्मनो यत् पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

तत्तामसं तप उक्तम् । किं तत्? यन्मूढग्रहेण मूढस्य का[2]र्याकार्यविचार-हीनज्ञा[3]नस्य सतो यो ग्रहोऽभिनिवेशः, तेन कृतम्; तथा स्वचित्तस्य शरीरस्य च[4] पीडया क[5]दर्थनेन यत्कृतं यन्निवर्तितम्; तथा परस्य द्वेषस्योत्सादनार्थं स्थान-च्यव[6]नादिसंपत्तये यत्कृतमिति ॥

शा[7]रीरादिभेदेन त्रिविधस्य तपसः प्रत्येकं सात्त्विकादिभेदान्नवविधत्वं प्रति-पाद्य, इदानीं दा[8]नस्य त्रिविधत्वमाह । तत्र ताव[9]त्सात्त्विकम्—

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

---

१. IO omits स्तुत्यादिना...ममा BS[2] reads this passage in the margin.
२. IO and BS[2] omits कार्या
३. IO and BS[2] हीनस्याज्ञस्य
४. BS[2] omits च
५. IO and BS[2] कदर्थनेन कर्कशं यन्नि-
६. BN[1] च्यावनादि
७. BN[1] शरीरादि
८. All except IO दानं त्रिविधमाह
९. IO and BS[2] सात्त्विकं तावत्

तत्सात्त्विकं दानं सात्त्विकचित्तेन सात्त्विकश्रद्धावता च पुरुषेण निवर्ति-तत्वात्[1] सात्त्विकशब्देनोक्तम्। किं तत्? यदेवंविधेषु क्रियाविशेषेष्वधिकृतेन[2] मया तत्तदितिकर्तव्यतोपसंस्कृतं देयमेवेत्येतावदभिसन्धाय दीयते; अत एव कस्मै दीयते? अनुपकारिणे। यस्मात् दृष्टविषयोऽदृष्टविषयो वा कश्चिदुपकारो नापेक्ष्यते[3], न केवलं विध्यर्थानुष्ठानाङ्गतया यः स्थितः तस्मै यद्दीयते; अत एव तस्य दानस्य विषयमाह—पात्र इति। जातिकुलविद्याकर्मपङ्क्तिपावनत्वादि-शरीरगुणसंपन्नैः[4] पात्रमुच्यते, तद्विषयत्वेन यद्दीयते; तथा देशे पुण्यसरित्तीर्था-यतनादौ, तथा काले विषुवद्ग्रहोपरागादौ, यद्दीयते तत्सात्त्विकं दानम्; नित्य-नैमित्तिकक्रियाङ्गत्वेन व्यवस्थितविशिष्टविधिपूर्वकस्य दानस्य यज्ञेऽन्तर्भावात् पृथ-ग्दाननिर्देशः पूर्तादिदानपरिग्रहार्थो वेदितव्यः॥

अथ राजसम्—

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।**
**दीयते च परिक्लिष्टं तद्राजसमिति स्मृतम्॥ २१॥**

तद्राजसं दानं स्मृतम्। किं तत्? यत्प्रत्युपकारार्थं[5] दीयते; प्रतीप उपकारः प्रत्युपकारः; तदर्थं तत्प्रयोजनतया[6] एतस्मादिहैव मे[7] कश्चित्प्रत्युपकारः संपत्स्यते[8]

---

१. IO and BN[1] निवर्तितत्वेन
२. IO and BN[1] अधिकृत्य तेन
३. IO नेक्षते केवलं विद्यास्थानाङ्गतया
　BS[2] नापेक्ष्यते केवलं
　BN[1] वापेक्ष्यते न केवलं
४. IO and BS[2] संपन्नं
५. IO omits कारार्थं...प्रत्युप-
　BS[2] reads this passage in the margin.
　BN[1] कारः तदर्थं यत्प्रयोजनं दीयते
६. BN[1] omits तत्
　IO यत्प्रयोजनं तथा
७. IO स:
८. All except BN[1] संपद्यते

इत्यभिसन्धाय यद्दीयते; तथा फलं वा पारलौकिकमुद्दिश्य सङ्कल्प्य दीयते; कीदृशम्? परिक्लिष्टं स्वल्पं कृच्छ्रप्राप्यं वा ॥

अथ तामसमाह—

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥**

तत्तामसं दानम् । किं तत्? देशकालपात्रहीनतया सत्कारेणावज्ञया यद्दीयते, सात्त्विकविपरीतमित्यर्थः । तदेवं सात्त्विकानि यज्ञतपोदानानि दैवसर्गव्यञ्जकानीत्यत्र तात्पर्यम् ॥

ततश्च य एते ब्रह्मप्राप्तिप्रसवमनसो दैवसर्गभाजः, ये चैते संसारबन्धाभिमुखचेतसस्तद्विपरीतवृत्तयः, तथोभयेषां यज्ञादिविषयां ज्ञानाज्ञाननिबन्धत्वात द्विप्रकारां स्थितिं क्रमेण प्रतिपादयितुमाह—

**ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्रह्मणा तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

इह ब्रह्मणः परमार्थलक्षणस्य परस्य तत्त्वस्य त्रिविधः त्रिप्रकारो निर्देशः स्वरूपाभिधानं परमार्थविद्भिः स्मर्यते स्म । के ते त्रयः प्रकाराः? ओं तत्सदिति।

---

१. IO इत्यनुसंधाय
२. BS[1] and BS[2] व्यापार-
३. BS[2] सर्गाभिव्यञ्जनानि
४. BN[1] ये ते संसार
५. IO बन्धादिसुख
६. IO विषयज्ञान
   BN[1] विषयाज्ञान
७. BN[1] परमात्मलक्षणस्य
८. BN[1] परमात्मविद्भिः

तत्र ओमिति चित्प्रकाशमात्रस्य ब्रह्मस्वरूपस्य वाचकं पदम्। अनेन च पदेन तेनैव परमगुरुणा व्यस्तसमस्तरूपवाचकतया नियमितेन यथा तादृक्स्वरूपमभिधीयते, तथा[1] मात्रात्रयार्धमात्राव्याप्तिप्रदर्शनक्रमेण तत्र तत्र रहस्यशास्त्रे[2] व्याख्यातमेतत्। तदनेन[3] तस्य ब्रह्मणस्तादृक्स्वरूपप्रत्यवमर्शकैः[4] सततव्यभिचारिस्वधर्मोऽभिधीयते। न हि तस्य[5] स्वसंवेदनमात्रसंवेद्यस्य तदिति सर्वनामव्यतिरेकेण शब्दान्तरप्रतिपाद्यं[6] रूपं भवितुमर्हति। सदित्यनेन पदेनानन्यसाधारणता विद्यमानता शोभनतालक्षणं[7] ब्रह्मणः स्वरूपमभिधीयते। तदेवं[8] पदत्रयप्रतिपाद्यसकलस्वरूपेण तेन ब्रह्मणा परमेश्वरेण वेदाः समस्तक्रियाविषयविशिष्टेतिकर्तव्यताकलापवाचकाः[9] समस्तदेशकालपुरुषाव्यभिचारिस्वरूपाः शब्दराशयः, तथा यज्ञवतामुपक्रमविभक्ता[10] नित्यादयो यागक्रियाविशेषाः, पुरा[11] नित्यत्वात्सर्वदैव पूर्वकालं विहिता निर्मिताः; ततः सदा निर्मीयमाणत्वात्तेषां नित्यत्वम्॥

यतश्चैवंविधस्य ब्रह्मण ओमित्येवमादयः शब्दा वाचकाः—

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।**
**प्रवर्तन्ते[12] विधानोक्ताः सततं ब्रह्मवादिनाम्॥ २४॥**

---

१. BN[1] तथा मात्रतयार्ध-
IO तया मात्रया व्याप्ति
२. IO शास्त्रं
३. BS[1] and BS[2] तदित्यनेन
४. BN[1] मर्शात्मकः
५. IO तस्याभासमात्र
६. IO शब्दाक्षरप्रतिपाद्यं
७. BN[1] लक्षणब्रह्मणः
८. IO omits तदेवं...श्वरेण. BS[2] reads this passage in the margin.
९. IO कालवाचकाः
१०. IO विभक्त्या
११. All except IO परा
१२. BN[1] प्रवर्तते

तस्माद्धेतोर्ब्रह्मवादिनाम्[1] "तत्त्वमसि" इत्येवंवदनशीलानां ज्ञानिनाम् ओमित्येतन्मन्त्रपदं[2] यथोक्तब्रह्मस्वरूपवाचकमुदाहृत्य विशिष्टेन समाधिनोच्चार्य यज्ञादि-क्रियाः[3] सततं प्रवर्तन्ते, प्रसरन्ति। उदाहरणक्रियायाश्च[4] यज्ञदानादिक्रियापेक्षं पौर्वकाल्यमिति न भिन्नकर्तृत्वमत्रावसेयम्। कीदृश्यः[5] क्रियाः? विधानोक्ताः। विधीयन्ते अस्मिन्विविधा यज्ञादयो भावा इति विधानम्, वेदादिशास्त्रम्; तेनोक्ताः प्रति-पादितस्वरूपाः। किमनेनोक्तं भवति? मुख्यदैवसर्गभाजां मुमुक्षूणां ब्रह्मा-द्वैतभावनया सर्वाः क्रियाः प्रवर्तन्त इति॥

किंच—

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः॥ २५॥**

तदित्येतन्मन्त्रपदमविनश्वररूपप्रत्यवमर्शार्थमुदाहृत्य पूर्ववदुच्चार्यापवर्गा-र्थिभिः सात्त्विकैर्दैवसर्गभाग्भिर्यज्ञादयः क्रियाः क्रियन्ते अनुष्ठीयन्ते। कथम्? फलं स्वर्गादिविनश्वरभोगलक्षणां सिद्धिमनभिसन्धाय[6] असङ्कल्प्य; ते[7] हि नित्यनिरुप-मानन्दमयब्रह्मस्वरूपप्रत्यवमर्शात्मकैकफलमभिकाङ्क्षिणः[8]॥

---

१. All except BS² ब्रह्मादीनां
२. IO omits ओं
३. All except IO यज्ञाक्रियाः
४. IO क्रियाया यजनादि
BN¹ क्रिया यागयजनादि
BS² क्रियाया यज्ञ-
५. BS² कीदृशः
६. IO सिद्धिमनुसन्धाय
७. BN¹ ये
८. IO काङ्क्षेयः

अपि च—

सद्भावे साधुभावे[1] च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्द:[2] पार्थ गीयते ॥ २६ ॥

सतो विद्यमानस्य नित्यस्य भावः सत्त्वम्, तस्मिंस्तथा। साधुभावे साधोः शोभनस्य भावः सत्त्वं तस्मिन्निति। एतयोरर्थयोः सदित्येतन्मात्रपदं वाचकत्वेन प्रयुज्यते। तथा प्रशस्ते[3] ज्यायसि कर्मणि व्यापारविशेषे सच्छब्दो वाचकत्वेन गीयते शब्द्यते ॥

यत एवमतः—

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

यज्ञादिषु यथोक्तब्रह्मभावनामयी स्थितिः प्रतिष्ठा इह परमार्थसती परमशोभना सदित्यनेन शब्देनोच्यते प्रतिपाद्यते। तदर्थीयं यज्ञादिप्रयोजनं कर्म प्रशस्तो व्यापारविशेषः सदित्यतेनैव पदेन कथ्यते ॥

एवं मोक्षकाङ्क्षिणां सात्त्विकानां यज्ञादिविषयां ब्रह्मसमापत्तिहेतुं स्थितिं प्रतिपाद्य इदानीमासुराणां संसारबन्धहेतुं चैतद्विपरीतां[4] स्थितिं प्रतिपादयितुमाह—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

---

१. All except BS[2] सुखभावे
२. BN[1] and BS[1] सशब्दः
३. BN[1] प्रशस्ते न्यायकर्मणि
४. BN[1] च तद्विप-

ज्ञानशून्यजनाव्यभिचारिण्या अश्रद्धया परमार्थसद्ब्रह्मासंभावनया हुतं यत्, यज्ञविधिः यो विहितः, तया दत्तम्, तपश्च[1] तप्तम्, दानतपसी अनुष्ठिते, अन्यद्वा सुकृतं किंचन कृतं तत्सर्वमसदित्युच्यते। न[2] तन्नित्यम्, नापि[3] शोभनम्। कुतः? यतः तदश्रद्धयानुष्ठितं वस्तु न प्रेत्य न परलोके सद्वा साधु वा; न चेह, यतः तत्फलस्य पारलौकिकस्यैहिकस्य वा विनश्वरत्त्वादसत्त्वम्[4], असद्व्याधिदोषयोगाच्चासाधुत्वम्; अतस्तथाविधैः कर्मभिः[5] कृतानां यज्ञादीनां संसारबन्धलक्षणमसदेव फलं बोद्धव्यमिति दैवासुरसर्गाभिव्यञ्जकं[6] यज्ञादिक्रियाभेदप्रतिपादनस्य प्रयोजनं यथोक्तात्मज्ञानलक्षणपरमरहस्योपदेशविषयाविषयविभागविस्तारं वेदितव्यमित्योम्[7] ॥

[8]अध्यायश्च नगेन्दुकः कविवरस्यास्मिन्[9] प्रयोगे नवे
निर्व्यूढः फलितं बिभर्ति सुजनो यस्मिन्वराभ्युद्गमम्।
श्रद्धाभक्तिसखीसमर्पितनवाकल्पक्रियोद्भासिनीं
सर्वैश्वर्यसमागमाभ्युदयदामासाद्य संविद्वधूम् ॥

इति श्रीमद्राजानक[10]रामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
सप्तदशोऽध्यायः ॥



१. BN[1] omits च
२. IO तन्न नित्यं
३. BN[1] नातिशोभनं
४. BN[1] असत्त्वमस्तु तद्व्याधि
५. BN[1] कर्तृभिः
६ BN[1] व्यञ्जकं
७. BN[1] adds here the verse found at the end of the previous adhyāya.
८. This verse is read in all the manuscripts at the end of the next adhyāya; but its proper place is here and not at the end of the 18th adhyāya. IO अध्यायाश्च नगेन्दवः BN[1] अध्यायश्च
९. All except IO स्मायं
१०. BN[1] रामकवि

## ॥ अथ अष्टादशोऽध्यायः ॥

"मा शुचः संपदं दैवीमभिजातेऽसि पाण्डव" इति भगवतस्तदनुग्रहक्षणसाक्षात्कृतपरस्वरूपस्य परमगुरोः परमप्रमाणभूताद्वचनादात्मनो यथोक्तदैवसर्गगुणसामग्रीसंपन्नत्वसंभावनया यथोपदिष्टार्थानुष्ठानपात्रतां प्रतिपाद्यावश्यकरणीयानां स्वकर्मणामनुष्ठाने समुपजातोत्साहः तेषामपवर्गफलत्वेन कारणभूतयोः संन्यासत्यागयोः "ज्ञेयः स नित्यसंन्यासी", तथा—"यस्य सर्वे समारम्भाः" इत्यादिना च संक्षेपतः पूर्वमवगतार्थयोरधुना विस्तरतः परमार्थं जिज्ञासमानः

अर्जुन उवाच—

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ १ ॥

संन्यासस्तावत् सम्यङ्न्यसनं तस्य सुष्ठु परिहार एवार्थः; त्यागस्य च हानमेवार्थः—इत्यनयोरेकार्थत्वात् किं परस्परपर्यायत्वमुत भिन्नार्थता, तत्कीदृशोऽर्थभेदोऽनयोः—इति प्रश्नबीजं हृदि कृत्वा संन्यासस्य त्यागस्य च तत्त्वं परमार्थं पृथग्विवेकेन वेदितुं ज्ञातुमिच्छामीत्यर्जुनप्रश्नादनन्तरमनयोरेकार्थतां गर्भीकृत्योत्तरं

१. IO, BS[1] and BS[2] add ओमथ BN[1] adds ओं alone.

भगवानुवाच—

काम्यानां कर्मणां त्यागं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

कवयः परावरद्रष्टारः संन्यासं काम्यानां त्यागं विदुः; काम्यन्त इति कामाः विषयभोगाः; तेभ्यो हितानि तत्साधनभूतत्वात् तदनुकूलानि यज्ञादीनि कर्माणि काम्यान्युच्यन्ते; तेषां त्यागं परिहारं भोगरूपफलतृष्णाभिसन्धिनानुष्ठानस्य वर्जनं संन्यासं कथयन्ति; तेन नित्यादीनि सर्वाणि कर्माणि कामाभिसन्धिनानुष्ठीयमानानि काम्यानि संपद्यन्ते । तेषां तथानुष्ठानवर्जनं मुमुक्षोः संन्यासः । एवं च व्याख्याने पूर्वापरग्रन्थविरोधो[४] नापद्यते । यतः पञ्चमेऽर्जुनसंशयच्छेदाय संन्यासकर्मयोगयोः कैश्चित्प्रतिपन्नां भिन्नार्थता ।

“संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥”

इत्युपक्रम्य, कर्मयोगस्य नीरागद्वेषतया कर्मानुष्ठानलक्षणविशेषप्रतिपादनक्रमेण संन्यासस्य “ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति” इत्या-

---

१. IO and BS[2] न्यासं

२. IO omits काम्यानि....कर्माणि
This passage is read in the margin in BS[2].

३. IO संन्यासो मुमुक्षोः

४. All except IO विरोधे

५. All except IO पश्चिमे

६. All except IO प्रतिपन्नां भिन्नार्थतां

७. BS[1] संन्यासात्
IO omits संन्यासः...तयोस्तु.
This passage is read in the margin in BS[2].
The passage is very corrupt in BS[1].

८. All except IO पादनोपक्रमेण

दिना लक्षणमुक्तम्। तेन विशिष्टरूपतया यथाविहितानां सर्वकर्मणामनुष्ठानमेव संन्यास इति स्थितम्। अथ त्यागं व्याचष्टे—विचक्षणाः परमार्थविदः सर्वेषां नित्यादिविभागेन व्यवस्थितानां यज्ञादीनां वर्णाश्रमविहितानां कर्मणां फलस्य स्वर्गादिभोगलक्षणस्य त्यागं परिहारं [1]त्यागमाहुः ; [2]न तु यज्ञादिस्वरूपस्य कर्मण एव परिहारं त्यागमाहुः। [3]तथैव च पूर्वम्—

“यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान्॥”

इति [4]त्यागस्यापि लक्षणमुक्तम्। एवं च कर्मफलस्या[5]नभिसन्धानं त्यागः, न तु कर्मणः परिहार इत्युक्तं भवति। ततश्च संन्यासत्यागयोरेकार्थतैव सिद्धान्तः॥

[6]अतश्च तयोर्भिन्नार्थतावादिनां मतमुपन्यस्य तमेव संन्यासैकार्थं [7]त्यागं सम्यक् प्रतिपादयितुमाह—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३॥**

इहैके केचन मनीषिणो मतिमन्तः केवलज्ञानवादाभिनिविष्टाः सर्वं नाम कर्म त्याज्यं परिहार्यं [8]कथयन्ति। यतस्तत्सर्वं कर्माशुद्ध्यतिशयक्षयादिभिर्दोषै-

---

१. IO omits त्यागमाहुः BS[2] reads it in the margin.
२. BN[1] omits न तु...माहुः
३. BN[1] तथैव सर्वं
४. BN[1] आगमस्यापि
५. IO अभिसन्धानत्यागेन तु
६. BN[1] ततश्च
७. BN[1] omits this word.
८. IO and BS[2] add इति

र्युक्तम् । अन्ये पुनर्मनीषिणो यथोक्तकर्मयोगवादिनो यज्ञतपोरूपं शास्त्रविहितं कर्म न त्याज्यं न परिहार्यमित्याहुः । यथा च यज्ञादेर्नियतस्य कर्मणः परिहारानुपपत्तिः, तथा बहुशः प्रतिपादितमेव प्राक् ॥

इत्थं च संन्यासत्यागयोः परमार्थत एकार्थयोस्तत्स्वरूपावगमसन्देहनिवृत्तये त्यागविषयमेव वक्तव्यमाह—

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रदर्शितः ॥ ४ ॥

तत्र तथाविधे संन्यासादभिन्नार्थे त्यागे प्रोक्तलक्षणे विषये निश्चयं निर्णयं मन्मतमवधारय । व्याख्यातलक्षणस्य क इदानीं निश्चयोऽवशिष्यते, यदर्थमेवमुच्यत इत्यत्राह । हिशब्दो हेतौ ; यस्मात्सामान्येनोक्तलक्षणस्त्यागो विशेषतो वक्ष्यमाणहेयोपादेयरूपेण विभागेन त्रिप्रकारः पुरस्तात्सम्यक् प्रकटीकृतः ॥

इत्थं त्यागविषयेनिश्चये वक्तव्ये सति कर्मणां त्यागस्य पराभिमतापवर्गलक्षणफलहेतुत्वादत्यागत्वमेव प्रतिपादयितुं प्रदर्शितागमोपपत्तिगर्भाकारेण सर्व-

---

१. BN[1] omits योग
२. BS[1] and BS[2] तथा च
३. BS[1] बहुधा
४. IO and BN[1] उक्तं च. This is an alternative reading in BS[2].
५. IO संप्रकीर्तितः
६. BN[1] तथा यथाविधे
७. IO सादिविभिन्नार्थे
८. IO एवं मन्यत इत्याह
९. BS[1] and BS[2] परस्तात्
१०. IO भूतः
११. BN[1] विषये
१२. IO omits कर्मणां...सर्व BS[2] notes this passage in the margin.
१३. BN[1] and BS[2] फलहेतु

कर्मणामत्याज्[1]यत्वमेव तावदाह—

यज्ञ[2]दानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

यज्ञादिरूपं कर्म सर्वैः शास्त्राधिकृतैः सर्वदा न त्याज्यं न तस्य त्याग उपपद्यते; तस्मादवश्यं क[3]र्तव्यमेव तत् । कुतः यज्ञादीनि कर्माणि मनीषिणां पावनानि? मनीषिणः पुरुषाः प्रज्ञायुक्ता दैवसर्गभाजः शास्त्रार्थानुष्ठानाधिकृता उच्[4]यन्ते; ते च द्वये संभवन्ति—प्रवृत्तिधर्मात्मकशास्त्रार्थानुष्ठानाधिकृता रजोलेशानुगतसत्त्वप्रधानबुद्धयः; तथाविधश्रद्धाश्चैके, यान् प्रति तृतीयेऽध्याये—“सह यज्ञाः प्रजाः सृष्ट्वा” इत्यादिना “अघायुरिन्द्रियारामो मोघं पार्थ स जीवति” इत्यनेन ग्रन्थेन आगमोपपत्तिप्रतिपादकेन सर्वकर्मणामत्याज्यत्वं पावनत्वं चोक्तम्; अपरे तु मनीषिणो निवृत्तिध[5]र्मात्मकशास्त्रार्थानुष्ठानाधिकृता गुणीभूतरजस्तमस्कत्वादुद्रिक्तसत्त्वात्मकबुद्धयः तथाभूतश्रद्धाश्च, यान् प्रति तत्रैवैतच्छास्त्रप्रतिपादितज्ञाननिष्ठतया ज्ञानादिकर्म[6]णां यथास्वं यथाशास्त्रमवस्थासु “यस्त्वात्मरतिरेव स्यात्” इत्यादिना—

---

१. IO अत्यागत्वमेव
　BN[1] अत्यागत्वं तावत्
२. IO omits this ardha.
३. BN[1] कर्तव्यमेतत्
४. IO omits उच्यन्ते...कृता
　BS[2] notes this passage in the margin.
५. BN[1] निर्वृत्तधर्मा
६. IO कर्मणो

"तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥"

इत्यन्तेन ग्रन्थेनात्याज्यत्वमुक्तम्—इत्युभयेषां मनीषिणां यज्ञादिकर्माणि पावनान्युक्तानि ॥

तानि—

**एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

एतान्यत्याज्यत्वेनेह प्रतिपादितानि ; परैः संदोषत्वात् त्याज्यत्वेन प्रतिपन्नान्यपि सर्वाणि कर्तव्यानि अवश्यानुष्ठेयानीत्युत्तमं प्रकृष्टं मदीयं चैतन्मतं निश्चितं प्रदर्शितप्रकारेण पूर्वमेव निर्णीतम् । कथं कर्तव्यानीति तु विशेषमाह—"सङ्गं त्यक्त्वा फलानि च" इति । "सङ्गात्संजायते कामः" इत्यत्र व्याख्यातस्वरूपः सङ्ग एकः कर्मसु दोषः; तथा तन्मूलरागद्वेषयोगादिष्टानिष्टविषयप्राप्तिपरिहाररूपाणि फलानि द्वितीयो दोषः, न त्वनुष्ठानम् । अतः सङ्गं फलानि च त्यक्त्वा कर्माणि कर्तव्यान्येव । तेन कर्मसु सङ्गफलाभिसन्धित्यागः त्याग उच्यते, न त्वननुष्ठानमेव त्यागः ॥

---

१. IO पूरुषम्
२. IO त्यक्त्वा सङ्गं
३. IO संदोष
४. BN[1] मदीयमेतन्निश्चितं
   IO मदीयं चैतन्निश्चितं
५. IO तन्मल
६. IO omits फलानि....सङ्गं
   BS[2] reads this passage in the margin.
७. IO सर्वफला.

त[1]स्मादुक्तयोपपत्त्या—

**नियतस्य च संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

चशब्दो हेतौ । यस्मान्नियतस्य वर्णाश्रमविभागेन नित्याव्यभिचारिणः कर्मणो यज्ञादेः संन्यासस्त्यागोऽ[2]ननुष्ठानं नोपपद्यते । [3]यथा च नोपपद्यते तथा—

"न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्"

इत्यादि[4]ना

"न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः"

इत्यादिना च बहुशः प्रतिपादितमेव । तस्यैवंविधस्य सर्वथैवात्याज्यस्य कर्मणो मोहाद्विपर्ययलक्षणाद्वैचित्र्यात् त्यागः परिहारस्तामसः तमोगुणसंभव उच्यते । तमसो हि कार्यं मोहः[5] । यदुक्तम्—"प्रमादमोहौ जायेते तमसोऽज्ञानमेव च" इति । एवमयं तामसस्त्यागो विपरीतफलपर्यवसायी यतोऽपवर्गबुद्ध्या प्रतिपन्नः [6]संसारमेव फलति, अतो हेय एवासौ ॥

---

१. IO तस्माद्युक्त्योप
२. BN[1] अनुष्ठानं
३. IO omits यथा...द्यते
४. BN[1] adds तथा
IO adds तथा in the place of न हि
५. IO omits मोहः...एवमयं. This passage is found in the margin in BS[2].
६. IO समानमेव फलमृतो हेय
BN[1] समानेन फलति

अथ राजसं त्यागमाह—

दुःखमित्येव यः[1] कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

यः पुरुषः शास्त्रचोदितं कर्म स्नानाग्निहोत्रादिदुःखं सुखप्रतिकूलमिदमित्येतावन्मात्राद्धेतोः शरीरकदर्थनात्त्रासात् त्यजति नानुतिष्ठति, राजसं रजोगुणनिमित्तकं त्यागं नियतकर्मपरिहारं कृत्वा तस्य त्यागस्य[2]पवर्गभोगसुखलक्षणमभिहितं फलं नैव[3] प्राप्नुयात् । रजोगुणयुक्तत्वात् तत्फलं दुःखमेवासौ लभते ; ततो राजसोऽपि[4] त्यागो हेय एव ॥

अथोपादेयं सात्त्विकं त्यागमाह—

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

स सात्त्विको ज्ञानफलसत्त्वगुणहेतुकस्त्यागोऽभिमतः । कोऽसौ ? यन्नियतं शास्त्रचोदितं कर्म क्रियते अनुष्ठीयते ; कर्मणः करणमेव त्यागो न परिहार इत्यर्थः । कथं[5] क्रियते ? येन क्रियैव त्यागः संपद्यते इत्याह—कार्यं परमगुरोः परमेश्वरस्य निरुपप्लवप्रमाणभूतशास्त्ररूपवचनचोदितत्वादवश्यकरणीयमित्येतेन हेतुना क्रियते[6] ।

---

१. IO and BN[1] यत्
२. BN[1] omits त्यागस्य
३. IO omits एव
४. BN[1] omits अपि
५. IO omits कथं
६. IO omits क्रियते...त्यक्त्वा
BS[2] notes this passage in the margin.

अत एव पूर्वं व्याख्यातम्—सङ्गं फलं च त्यक्त्वा। किमनेनोक्तं भवति? अनु[1]प-पन्नत्यागस्यापि कर्मणो रजस्तमोऽभिभूतत्वाद[2]त्यागेऽपि त्यागप्रतिपत्तिः सङ्गफलाभि-सन्ध्य[3]नुच्छेदात् कर्मैव संसारकारणं संपद्यते। विशुद्धसत्त्वगुणोद्रेकात्तु यथोक्त-ज्ञाननैर्मल्ये सति सङ्गफलाभिसं[4]न्धिशून्यत्वेन नियतस्य कर्मणोऽनुष्ठानमेव संसारो-च्छेदकारणं त्यागः संपद्यते—इति सात्त्विक एव त्याग उपादेयः॥

तस्यैवंविधस्य सात्त्विकस्य त्यागिनः स्वरूपं प्रतिपादयितुमाह—

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥ १०॥**

योऽ[5]त्यन्तगुणीभूतरजस्तमस्कत्वेन विशुद्धेन सत्त्वमात्रेण समाविष्टो व्या[6]प्तान्तःकरणः स[7] त्यागी; यथोक्तेन सङ्गफ[8]लाभिसन्धिरहितनियतकर्मानुष्ठान-रूपेणैव त्यागेन त्यागफ[9]लहेतुत्वात् त्यागत्वमापन्नेन युक्तः। अत एव मेधावी प्रशस्यप्रज्ञः। ततश्च छिन्नसंशयो यथोक्तस्य परब्रह्मस्वरूपस्यैकस्य तत्त्वस्यास्तित्वे त्रुटितसन्देहः। [10]स सर्ववस्तुषु प्रथमानपरमात्मैकस्वरूपत्वादकुशलं संसार्यभिमतस्य सुखस्य साधनभूतं[11] कर्माग्निहोत्रादिशरीरक्लेशा[12]वहं न द्वेष्टि, ज्ञानवैशद्ये[13] सति

---

१. IO अनुपमन्त्रयाग
२. IO त्वादभ्यासेऽपि
३. IO संबन्ध्यनु
४. BN[1] संबन्धि
५. IO योऽपि गुणी
६. IO व्याप्यान्तः
७. IO सन् त्यागेन
८. BN[1] फलाभिसंबन्ध-
९. IO omits फल
१०. IO omits स
११. IO and BN[1] भूत
१२. IO शवहं
१३. IO शद्येन द्वेष

द्वेषलक्षणदोषाभावात् नाप्रीत्या भावयति ; नापि कुशले कर्मत्यागादौ सुखसाधनभूतेऽनुषज्जति, सङ्गं बध्नाति । तस्यैवंविधस्य त्यागिनो नित्योदितानन्तनिजानन्दनिर्भरस्यात्मभूतसर्वभावस्य न क्वचिद्द्वेषेनापि रागः शास्त्रचोदितत्वादवश्यकरणीयमित्येव सर्वं नियतं कर्मानुतिष्ठन्नेवासौ सर्वत्यागीत्यर्थः ॥

एतदेवं पूर्वोक्तमपि स्मारयन् द्रढयितुमाह—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

पूर्वमेव बहुशो व्याख्यातत्वात् गतार्थमेवैतत् ॥

यथोक्तत्यागिविपरीतवृत्तीनामनुष्ठातॄणां फलमाह—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

ये यथाप्रतिपादितपारमार्थिकत्यागरहिताः तेषामत्यागिनां प्रेत्य परलोके त्रिविधं फलमनिष्टमित्यादि । तत्रानिष्टमभिप्रेतं दुःखात्मकं यत्तामसचित्तैस्तामसश्रद्धैः

---

१. BN[1] न प्रीत्या
२. BN[1] द्वेषः
३. BN[1] त्वादनन्यकरणीयं
४. IO सर्वभागीत्यर्थः
५. BN[1] एवं

कर्तृभिरनुष्ठितात्[1]तामसात्कर्मण उपजातं [2]सन्नरकतिर्यग्योन्यादौ लब्धोपपत्तिभिस्तै-र्भुज्यते । इष्टमभिप्रेतं सुखात्मकं [3]यत्साच्त्विकान्तःकरणैस्तथाविधश्रद्धैश्च कर्तृभि-र्निर्वाहितात्कर्मण उद्भूतं सन्निरतिशयसुखाधिकरणे स्वर्गादावधिगतदिव्यशरीरैस्तै-र्भुज्यते । तथा मिश्रं सुखदुःखात्मकं यद्रजःप्रधानचित्तैः[4] तादृक्[5]श्रद्धैश्च कर्तृभि-[6]र्नुष्ठितात्कर्मण उपजातं यत्कर्मभूमौ मनुष्ययोनिगतैस्तै[7]रुपभुज्यत इत्येवं [8]त्रिविधं कर्मणः फलं ज्ञानशून्य[9]संसारिपुरुषविषयं संन्यासिनां यथोक्तताच्त्विकत्यागवतां ज्ञान[10]निष्णातमतीनां कर्मयोगिनां न भवति नोपपद्यते । ततस्ते त्यागिनः कुशला-कुशलं कर्म नीरागद्वेषतयानुतिष्ठन्तीति पूर्वेण सम्बन्धः ॥

अथ अत्यागिनस्त्रिविधेन कर्म[11]फलेन युज्यन्ते, न तु त्यागिनः—इत्यत्र हेतुं क्रमेण प्रतिपादयितुमाह—

**पञ्चेमानि महाबाहो कारणानि निबोध मे ।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

---

१. BN[1] तामसः
२. IO omits सन्नरक...उपजातं BS[2] reads this passage in the margin.
३. BN[1] omits यत्...दुःखात्मकं BS[2]. Instead of यत्...भुज्यते the following is found :—यद्रजोलेशानुगतसत्त्व-प्रधानचित्तैः स्वर्गादिफलद्वेषिषु तादृक्श्रद्धैः यथाविधि विहि-तात् कर्मण उद्भूतं पुरुषैरुप-भुज्यते
४. BN[1] adds स्वर्गादिफलाः
५. All except BN[1] शुद्धैश्च
६. BN[1] adds यथाविधिविहितात् कर्मण उद्भूतं पुरुषैरुपभुज्यते तथा मिश्रं सुखदुःखात्मकं यद्रजःप्रधानचित्तैः तादृक्श्रद्धैश्च कर्तृभिः
७. BN[1] omits तैस्तैः
८. BN[1] omits त्रि
९. BN[1] शून्यं
१०. IO and BN[1] add विज्ञान
११. IO कर्मभूतफलेन

इह इमानि वक्ष्यमाणानि कारणानि निमित्तानि सर्वकर्मणां सकलशरीर-सम्बन्धिनां मनोवाक्कायनिर्वर्त्यानामशेषक्रियाविशेषाणां कृतान्ते कृतनिष्ठे साङ्ख्ये निश्चयशास्त्रे प्रोक्तानि प्रतिपादितानि निबोध निबुद्ध्यस्व ॥

कानि तानीत्याह—

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवमेवात्र पञ्चमम् ॥ १४ ॥**

अधिष्ठानं तत्तत्क्रियानुगुणमधिकरणं शरीरादि, यदधिष्ठाय कर्तुस्तत्तत्कर्म कर्तुं शक्यम् । तथा कर्ता तत्तद्देहादिनिबद्धाहंप्रत्ययः पुरुषः । करणं तत्तत्क्रियानुगुणशरीरेन्द्रियव्याप्तिभिः । अत्र चतुष्टये अनुकूलाननुकूलाभ्यां सिद्ध्यसिद्धिकारणं दैवं पञ्चमं दैवापरपर्यायं प्राक्तनं कर्मेत्यर्थः । अत्र ह्यनुकूलेऽधिष्ठानादीनां साधनानां साफल्यम्; अननुकूले तु सन्निहितानामपि वैकल्यम्; अतश्च तत्प्राधान्यात पृथक् पश्चादुक्तम् ॥

एषां पञ्चानां सर्वकर्मसिद्धिहेतुत्वं निगमयति—

**शरीरवाङ्मनोभिर्हि यत्कर्मारभतेऽर्जुन ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

---

१. IO omits तत्तत्...करणं. This is read in the margin in BS².
२. BN¹ अशक्यं
३. BN¹ अननुकूलानुकूला
४. BN¹ and BS² साधनादीनां
५. BS² कूल्ये
६. IO हेतुं

यः कश्चित्कर्ता कायेन[1] वचसा चेतसा वा यत्कर्म कर्तुं प्रक्रमते[2] तत्रैते पूर्वोक्ताः पञ्च हेतवः कारणानि। एतेषामन्यतमाभावेऽपि चिकीर्षितकर्मासिद्धेः[3] कीदृशं कर्मारभते न्याय्यं शास्त्रप्रोक्तान्नियतरूपादनपेतं[4] वा विपरीतं वा यथाशास्त्रत्वादन्याय्यम्[5] ॥

किंच—

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः।**
**पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः ॥ १६ ॥**

तत्र पञ्चके एवमुक्तेन प्रकारेण[6] समशीर्षिकया कारणभूते सति विद्यमाने यः कर्ता क्षेत्रज्ञविशेषः केवलमेकमेवात्मानं मोहवशादनात्मभूत[7]देहादिनिविष्टाहंप्रत्ययं[8] कर्तारं कर्मसंपादकं[9] पश्यति बुद्ध्यते, स न पश्यति विपरीतं तस्य ज्ञानमित्यर्थः। कुतो न पश्यति ? अकृतबुद्धित्वात्। निष्पन्ना बुद्धिः प्रज्ञा यस्य स तथोक्तः[10]; न कृतबुद्धिरकृतबुद्धिः, सम्यग्ज्ञानशून्यमतिः[11]; अत एव भ्रष्टधीः[12]। किमुक्तं भवति? एकः परमेश्वरः स्वशक्तिप्रसरभूतस्य सकलजगद्भावक्रीडनकचक्रस्यार्क

---

१. IO क्रार्येण
२. BN¹ मते ते पूर्वोक्ताः
३. IO कर्मसिद्धेः
४. BN¹ प्रोक्तनियमरूपान्न्यायापनपेतं विपरीतं
५. All except IO अन्यायं
६. BN² क्रमेण
७. IO अनादिभूत
८. BN¹ प्रत्यय
९. IO संपादयिष्यति बुध्यते
१०. All except BS² क्ताः
११. IO ज्ञानेतरमतिः
१२. IO नष्ट

इव स्वप्रभापुञ्जस्यावभासयिता पारमार्थिकः कर्तेति सम्यग्ज्ञानाभावादकृतबुद्धिः जात्याद्यभिमानावच्छिन्नं क्षेत्रज्ञरूपमात्मानं कर्तारं मन्यमानो यत्करोति तस्यैत-दधिष्ठानादिविभागेन त्रिविधं कर्म फलम्, न तु यथोक्तस्य त्यागिनः परमात्ममयं सर्वं ज्ञानचक्षुषा पश्यतः ॥

अत एव तस्य तादृशीं वृत्तिं प्रतिपादयितुमाह—

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमान् लोकान् न हन्ति न निबद्ध्यते ॥ १७ ॥**

यस्यात्ममयसमस्तवस्तुनो भावः चित्तवृत्तिर्नाहंकृतः, देहादावनित्येऽहंप्रत्यय-ग्रहणेन संपादितः, अत एव यस्य बुद्धिः संविन्न लिप्यते रागद्वेषादिभिर्मलैर्मायोप-हतसमस्तजीवनिबद्धैर्न कलुषीक्रियते, स परमेश्वरभावसमाविष्टः कर्ता इमान् योद्धुमवस्थितान् लोकान् व्यापाद्यापि न निबद्ध्यते, न तद्वधसाधनेन क्रिया-फलेन युज्यते । पारमार्थिकस्य नित्यस्य ब्रह्मस्वरूपस्यात्मनो नानाभावाच्छरीरा-देश्च नित्यविनश्वरस्वभावत्वादत्र "नायं हन्ति न हन्यते" इत्यादिना प्रतिपादित एव हेतुः प्राक् । अतस्त्वं यथोक्तत्यागवान् कार्यं कर्मेदमाचरेत्यर्थः ॥

---

१. BN[1] स्वप्रभावकस्याव-
२. BN[1] रूपमात्रमात्मानं
३. IO कलुषीकरोति क्रियते
४. IO omits स पर...साधनेन
५. BN[1] कर्ता इह योद्धु
६. BN[1] adds हत्वा
७. IO adds न च
८. IO and BN[1] omit च

अथ[1] त्याग्यत्यागिशब्द[2]प्रतिपादितयोगिसंसारिपुरुषविषयतया ज्ञानकर्मकर्तॄणां गुणनिमित्तकं भेदं प्रतिपिपादयिषुः[3] सर्वदेहसाधारणयोः ज्ञानकर्मणोः फलसंपत्तिहेतुं तावत् प्रतिपादयितुमाह—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं[4] कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ १८ ॥

अत्र प्रथमेन कर्मशब्देन[5] ज्ञानात्मिकायाः क्रियाया ज्ञप्तिलक्षणं फलमुच्यते, कारणेन कार्योपचारात्; तेन तादृशे क्रियाफले विषये[6] अधीनत्वात् त्रिप्रकारा चोदना प्रवर्तना ; त्रीण्येतानि ज्ञप्तिलक्षणे[7] ज्ञानात्मक[8]क्रियाफले चोदयन्ति प्रवर्तयन्तीत्यर्थः । कानि तानि?[9] ज्ञानं येन ज्ञायते तदिन्द्रियादि ; ज्ञेयं च यज्ज्ञायते[10] सुखदुःखनीलपीतादि ; परिज्ञाता[11] यः सर्वमिदं सुखदुःखादि जानामीति अध्यवस्यति । त्रयाणामेषां सामग्रीज्ञप्तिलक्षणे फले चोदयतीत्यर्थः । एवमेव[12] कर्मणि कर्मफले तत्तत्कार्यनिवृत्तिलक्षणे संग्रहो येन संगृह्यते स्वीक्रियते सोऽपि त्रिविधः ।

१. IO omits अथ
२. IO त्यागशक्तिप्रति
३. BS² प्रतिपाद-
IO omits प्रति...तावत्.
This passage is found in the margin in BS².
४. IO कारणं
५. IO शब्दज्ञात्मिकायाः
६. IO विषयेत्यधीन
BS² विषयेत्वधीन
७. IO and BN¹ लक्षणेन
८. BN¹ त्मकक्रियाफलेन
IO त्मकक्रियाफलेन
९. All except IO त्रीणि
१०. IO च ज्ञायतेयत्
११. BS¹ ज्ञाता फलमिदं योऽहमिदं
BN¹ and BS² ज्ञाता योऽहमिदं सुखादि
१२. IO and BS² omit एव

त्रीण्येतानि[1] संग्राहयति। कानि तानि? करणं[2] हस्तादि; कर्म घटादिकार्यविषया चेष्टा; कर्ता घटादिव्यापृतकुम्भकारादि ॥

एतत्त्रितयसामग्रीवशात् घटादेः कार्यस्य स्वरूपनिर्वृत्ति[3]लक्षणं फलं भवतीति स्थिते कीदृश्येतानि ज्ञानादीनि योगविषयाणीति प्रक्रान्तं प्रतिपादयितुमाह—

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**

**प्रोच्यते गुणसंख्येने[4] यथावच्छृणु तान्यपि ॥ १९ ॥**

प्[5]रतिपादितस्वरूपं[6] ज्ञानादित्रितयं च[7] तद्गुणसङ्ख्येने[8] गुणानां स्वरूपभेदकथने[9] प्रत्येकं त्रिधा त्रिभिः प्रकारैः सत्त्वादिगुणविभागात्प्रोच्यते कथ्यते तद्विद्भिः। तानि ज्ञानादीनि मत्तो[10] यथावत्सम्यगुच्यमानानि सात्त्विकराजसतामस[11]भेदेन प्रत्येकं त्रिप्रकाराण्यवधारय, येन तानि प्रवृत्तानि प्रत्यभिज्ञास्यसि ॥

तत्र ज्ञानं[12] त्रिविधमाह। तत्र सात्त्विकं तावत्—

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते[13] ।**

**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

---

१. All except IO omits तानि
२. BN[1] करण
३. BN[1] निवृत्ति
४. BN[1] संख्याने
५. BN[1] adds प्राक्
६. IO omits स्वरूप...गुणानां
७. BN[1] omits च
८. BN[1] संख्याने
९. IO कथनं
१०. IO सद्भिरपि
BS[1] and BS[2] सन्तोऽपि
११. IO omits तामस
१२. IO and BS[2] त्रिविधं ज्ञानं
१३. BS[1] and BN[1] ईक्ष्यते
IO अव्ययमश्नुते

तत्सात्त्विकं[1] न्यग्भूतरजस्तमस्कं विशुद्धसत्त्वमात्रहेतुकं ज्ञानं संवेदनं विद्धि जानीहि । किं[2] तत् ? येन साधनभूतेन देशकालाकारादिभेदेन विभक्तेषु परस्परपृथग्भावेन व्यवस्थितेष्वपि सर्वेष्वशेषेषु भूतेषु चेतनाचेतनेषु सत्त्वेष्वविभक्तमभिन्नरूपं चिदात्मकं भावं सत्तामीक्षते[3] पश्यति, बुद्ध्यते इत्यर्थः । इह विशुद्धचिन्मात्रस्वभाव आत्मैवैकं तत्त्वं परमार्थसत्, न तद्व्यतिरिक्तं किंचन पदार्थान्तरं तत्त्वतः संभवति ; केवलं तदीयनिरतिशयैश्वर्योद्भावितमायामलमुषितस्वप्रकाशे ज्ञानमये चक्षुषि तदेकमेव तत्त्वं नानात्वेन प्रतिपद्यन्ते क्षेत्रज्ञाः[4] ; तदेव यदा ज्ञानमयं चक्षुः परमेश्वरानुग्रहशक्तिशलाकापरिमृष्टमलत्वात्[5] निर्मलीभवति, तदा सर्वमेवेदमेकत्वेन योगिनः पश्यन्तीत्यर्थः ॥

अथ राजसमाह[6]—

पृथक्त्वेन तु[7] यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥ २१ ॥

तद्धत्सर्वेषु भूतेषु समस्तेषु मायीयेषु प्राणिषु वर्तमानं ज्ञानं राजसं रजोगुणहेतुकं स्मृतं तत्त्वविद्भिः । किं तत् ? यत्पृथक्त्वेनात्मनो व्यतिरेकेण व्यवस्थितं नानाभावानपि वेद्यान् नानारूपान् विचित्रान् पृथग्विधान् परस्परतो व्यतिरिक्त-

१. BN[1] omits तत्सात्त्विकं
२. IO and BN[1] किन्तु येन
३. BN[1] ईक्ष्यते
४. IO पद्यते क्षेत्रज्ञः
५. IO परिस्पष्टं निर्मलत्वात्
६. IO and BN[1] omit अथ राजसमाह
७. IO च

स्वरूपान् जानाति। ज्ञानस्य वेद्यप्रथाहेतुत्वादुपचारेण वेदनक्रियाकर्तृत्वं वेदितव्यम्। एतच्च विषयसुखगर्वलक्षणलोभकारणभूताद्रजसः समुद्भूतं[1] सम्यग्दर्शनहेतुत्वात् संसारिपुरुषनियमितं हेयमेव ॥

अथ तामसमाह—

यत्त्वकृत्स्नविदेकस्मिन् कार्ये सक्तमहैतुकम्।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

तत्[2]तामसं तमोगुणहेतुकं ज्ञानमुदाहृतं शास्त्रेषूदीरितम्। किं तत्? तुशब्दः पूर्वस्माद्व्यतिरेके[3] एव। यदकृत्स्नविद्विषयीभूतं ज्ञेयमर्थम्, कृत्स्नं सकलं सर्वविशेषसंयुक्तं वेत्तीति कृत्स्नवित् सा[4]त्त्विकादि, तद्विपरीतमकृत्स्नवित्तामसम्। तथैकस्मिन् विषयसुखसाधनभूते कस्मिंश्चिदेव कार्ये साध्ये वस्तुनि संकुलीनम्; यदेव किंचित् दृष्टसुखसाधनं[5]तामासादयति तत्रैव मज्जतीत्यर्थः। त[6]था अहैतुकं विषयेन्द्रियसंयोगादि यज्ज्ञानकारणभूतं तदभावेऽप्येकस्मादुद्भूतं ज्ञानं तामसं भूतग्रहाद्याविष्टानां प्रमत्तोन्मत्तादीनां ज्ञानमिव; तथा तत्त्वार्थवत् तत्त्वमात्मादि परमार्थः स एवार्थो वस्तुतत्त्वार्थो, स विद्यते यस्य तत्तत्त्वार्थवत् सात्त्विकादि; तद्विपरीतं त्विदं[7]मतत्त्वार्थवत

---

१. BS[1] and BS[2] समुद्भूत
२. BN[1] यत्
३. IO adds वाची
४. IO omits सात्त्वि...वित्
५. IO and BN[1] साधनं
६. All except BS[1] omit तथा... ज्ञानमिव
७. BN[1] omits तु
IO omits त्विदं...ज्ञाना. This passage is found in the margin in BS[2].

शरीराद्यवस्तुनिष्ठमित्यर्थः । अल्पम्[1]अव्यापकं तदेतदज्ञानादिकारणभूततमोगुणसमुद्भूतत्वात् सदसद्विपरीतप्रत्ययहेतुत्वे निकृष्टसंसारिविषयत्वात् सुतरां हेयम् ॥

अथ कर्म त्रिविधमाह—

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

तत्कर्म सात्त्विकं पूर्ववद्विशुद्धसत्त्वगुणहेतुकमभिधीयते । किं तत्? अफलप्रेप्सुना दृष्टादृष्टविषयसुखदुःखलिप्सारहितेन कर्त्रा निर्वर्त्यते । कीदृशम्? नियतं वर्णाश्रमविभागेनावश्यकरणीयम्; तथा सङ्गेनोक्तलक्षणेन शून्यम् । अत एव सङ्गाभावात् तन्मूलरागद्वेषाभावेन कृतं संपादितम् । त[2]देतत् ज्ञानकारणभूतसत्त्वगुणोद्भूतत्वादपवर्गलक्षणोत्तमपुरुषार्थसाधनं[3] योगिविषयमुपादेयम् ॥

अथ राजसं कर्माह—

**यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।**
**क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम् ॥ २४ ॥**

तद्राजसं रजोगुणहेतुकम् । किं तत्? यदैहिकामुष्मिकभोगलिप्सुना, तथा साहङ्कारेण अनात्मनि शरीरादावहंप्रत्ययवता कर्त्रा क्लेशबहुलं चि[4]त्तशरीराद्यायासभूयिष्ठं क्रियते । तदेतत्प्रवृत्तिहेतोः दुःखबहुलाद्र[5]जसः संभूतं[6] तत्संसारिविषयत्वाद्धेयम्[7] ॥

---

१. BN[1] adds अव्ययं
२. IO तद् ज्ञान-
३. IO साधने
४. BN[1] omits चित्त
५. BN[1] राजसः
६. IO and BN[1] समुद्भूतं
७. IO त्वाद्गूढम्

अथ तामसम्—

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

तत्तामसं[1] तमोगुणहेतुकं कर्म । किं तत्? यन्मोहादज्ञानादारभ्यते कर्तुं प्रक्रम्यते[2] । कथमिदं क्रियमाणं किमर्थं[3]मनुबध्नाति पुष्णाति, किं वा क्षपयत्यस्मिन् क्रियमाणे, कस्य हिंसोपघातः संपद्यते[4]—इत्यनुबन्धक्षयहिंसा अनवेक्ष्य अविचार्यैव[5] । एतदपि मोहाज्ञानप्रमादकारणभूततमःसमुद्भूतत्वा[6]न्निकृष्टतम[7]संसारिविषयं सुतरां हेयमेव ॥

अथ त्रिविधः कर्तोच्यते । तत्र[8] सात्त्विकस्तावत्—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः[9] कर्ता सात्त्विक उच्यते ॥ २६ ॥

ईदृशः कर्ता कर्मणामनुष्ठाता सात्त्विक उच्यते । सात्त्विकादि[10]चित्तत्वात्कर्ता सात्त्विक इति व्यपदिष्टः[11] । स कीदृशः? मुक्तसङ्गः; मुक्तः परिहृतः सङ्गः संसारतरुबीजभूतो व्याख्यातरूपो दोषो येन । यतोऽनहंवादी क्षेत्ररूपमनित्यमर्थमात्मत्वेन

---

१. IO omits तत्...प्रक्रम्यते
२. BN[1] प्रक्रमते
३. BN[1] कमर्थं
४. IO समुत्पद्यते
५. BN[1] चार्येत्येतदपि
६. IO समुद्भवत्वात्
७. BN[1] तर
८. BN[1] अत्र
९. BN[1] निर्विकल्पः
१०. IO omits आदि
११. IO उपदिष्टः

प्रतिपद्य अहं [1]यजामीत्यादि यो वदति सोऽहंवादी [2]सर्वः संसारी जनः ; तद्विपरीतोऽनहंवादी शरीरादिष्वनात्मभूतेष्वर्थेषु निरहङ्कारः । तथा धृत्या वक्ष्यमाण[3]यानुष्ठेयवस्तुदृढावष्टम्भशक्त्या, तथोत्[4]साहोद्योगेन समन्वितः, अत एव सिद्धौ फलनिष्पत्तौ, असिद्धौ [5]तदनिष्पत्तौ [6]च हर्षशोकलक्षणविकाररहितः । ईदृशं कर्तृत्वं ज्ञानहेतोः पूर्ववद्विशुद्धात् सत्त्वगुणादुत्पन्नं ब्रह्मप्राप्तिहेतुत्वादुपादेयम् ॥

अथ राजसः—

रागी कर्मफलप्रेप्सुः लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते[7] ॥ २७ ॥

ईदृशः कर्ता रजसः पूर्ववद्रजोगुणात्मकः कथ्यते । कीदृशः ? रागी विषयसुखेष्वभिलाषवान् । तथा कर्मफलप्रेप्सुः क्रियमाणस्य कर्मणो यज्ञादेः [8]फलमनित्यं स्वर्गभोगादिरूपं [9]लिप्सुः । तथा लुब्धो [10]गर्धवान् । तथा हिंसात्मकः प्राणिद्रोहपरायणः । तथा अशुचिर्बाह्याभ्यन्तरशौचरहितः । तथा फलैकालम्बनचित्तत्वान् तत्तत्सिद्ध्यसिद्धिसंभवाभ्यां परितोषाभ्यां युक्तः । एतादृशं कर्तृत्वं लोभादिदोषकारण[11]भूतं रजोगुणसमुद्भूतत्वात्संसारिविषयं हेयम् ॥

---

१. IO and BS[2] omit यजामि... सोऽहं
२. IO omits सर्व...वादी BN[1] सर्वसंसारी
३. IO माणलक्षणयानु-
४. BN[1] and IO उत्साहेनोद्योगेन
५. IO omits तद्
६. IO omits च
७. IO and BS[1] कीर्तितः
८. IO omits फलं
९. IO लिप्सोः
१०. IO गर्ववान्
११. IO भूतं

अथ तामसः—

अयुक्तः प्राकृतस्स्तब्धः शठो नैष्क[नैकृ]तिकोऽलसः ।
विषादी दीर्घसूत्रश्च[1] कर्ता तामस उच्यते ॥ २८ ॥

एवंविधः कर्ता पूर्ववत्तामसः[2] । किंविधः ? अयुक्तः समाधिरहितः । यतः प्राकृतः प्रकृतिमेवात्मत्वेन प्रतिपन्नः । स्तब्धो मिथ्याभिमानाभिनिवेशान्न[3] किंचित्प्रणमति । शठो मायावी[4] । तथा नैष्क[नैकृ]तिकः निकृतिः परोपतापनं प्रयोजनं यस्य । अलसो दार्क्ष्यरहितः[5] ; अत[6] एव विषादी अवसादवान्[7] । दीर्घसूत्रः आशुकार्येऽपि वस्तुनि चिरकारी । एवंविधं कर्तृत्वं प्रमादमोहादिदोषकारणभूततमोगुणसमुद्भूतत्वादत्यन्तहेयमेवेति । कर्तृकर्मणोः पृथक्[8] त्रैविध्यप्रतिपादनं विस्पष्टार्थम् । यतः प्राय एकतरत्रैव त्रैविध्यं भवतीत्युक्तम्[9] ॥

अथ बुद्धिधृत्योरेवमेव त्रैविध्यं वक्तुमुपक्रमते—

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥

---

१. IO सूत्री
२. BS[1] adds उच्यते
३. IO मत्वविवेशवान्न
४. IO मायात्वधिया नैकृतिकः
५. BN[2] दाक्षिण्यरहितः
६. IO omits अतः
७. BN[1] विषादवान्
८. BN[1] पृथग्वैविध्य
९. IO भवद्युक्तम्
BS[1] भवत्युक्तं

बुद्धिर्बोद्धव्यवस्तुसाधनं करणम्[1]। धृतिरवष्टम्भः। कार्ये ज्ञेये वार्थे सिद्धिपर्यन्तं स्थैर्यम्। तयोर्बुद्धिधृत्योः सत्त्वादिगुणापेक्षया त्रिविधं भेदं साकल्येन विविक्ततया चाभिधीयमानं[2] शृणु ॥

तत्रोद्देशक्रमेण बुद्धेस्त्रैविध्ये प्रतिपाद्ये सात्त्विकं भेदं तावदाह—

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च यां[3] बुद्धिर्वेद सा सात्त्विकी मता ॥ ३० ॥**

सा[4] सात्त्विकी सत्त्वगुणसमुद्भूता बुद्धिः[5] मतिः। कासौ[6]? यां[7] प्रवृत्तिं च निवृत्तिं च वेद जानाति[8]; स्वर्गापवर्गफले शास्त्रचोदिते कर्मणी प्रवृत्तिनिवृत्तिशब्देनोच्येते। यदुक्तम्—

"प्रवृत्तिलक्षणो धर्मो गृहस्थेष्वभिधीयते ।
निवृत्तिलक्षणस्त्वन्यो धर्मो मार्गैकदेशिकः[9] ॥"

अन्यत्रापि[10]

"प्रवृत्तिं च निवृत्तिं च द्विविधं कर्म दैशिकम् ।
इह चामुत्र च[11] काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं च निवृत्तमुपन्यस्यते[12] ॥" इति ।

---

१. BN[1] कारणं
२. All except BN[1] add च
३. IO या वेत्ति बुद्धिः सा
४. BN[1] omits सा
५. BS[1] omits बुद्धिः मतिः
६. BS[1] मा
७. IO यथा
८. BN[1] जानासि
९. BS[2] दैशिकः
१०. BN[1] adds च
११. IO वै काम्यं
BN[1] चाकाम्यं
१२. BN[1] उपक्रम्यते

तथा कर्याकार्ये शास्त्रीयविधिनिषेधवशादनुष्ठेयपरिहार्ये वस्तुनी या जानाति; तथा भयाभये ; भयं संसारदुःखजं साध्वसम्, अभयम् अपवर्गसमुद्भवं सर्वतस्त्रासविरहम्; तथा बन्धं संसारम्, मोक्षमपवर्गम्; हेयतयोपादेयतया च स्वरूपतो जानाति सा सात्त्विकी बुद्धिरिति ॥

ननु ज्ञानं बुद्धिरित्यनर्थान्तरम्। "सर्वभूतेषु येनैकम्" इत्यादिना सात्त्विकज्ञानलक्षणेनैव सात्त्विकबुद्धिलक्षणमुक्तम्। तदधुना किमिति पुनरुच्यते इत्यत्रोच्यते—सत्यं ज्ञानबुद्ध्योर्नास्ति कश्चिद्विशेषः; किंतु पूर्वं ज्ञानज्ञेयज्ञातृलक्षणस्य त्रितयस्यैकप्रयोजनविषयत्वेन प्रतिपादनप्रसङ्गात् सङ्क्षेपेण सात्त्विकज्ञानलक्षणमुक्तम्। अधुना तु धृतिसाहित्येन तस्यैव बुद्धिशब्दप्रतिपादितस्य विस्तरतो लक्षणमुक्तम्। न हि पूर्वं धृत्यादिवेदनं ज्ञानसम्बन्धित्वेन प्रतिपादितम्; अधुना तु प्रतिपादितम्—इति न पौनरुक्त्यदोषश्चोदनीयः। यदि वा पूर्वमारूढयोगिसम्बद्धस्य ज्ञानस्य लक्षणमुक्तम्; अधुना त्वारुरुक्षुसम्बद्धस्य। एवमपि न पौनरुक्त्यम् ॥

अथ राजसी—

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

---

१. BN[1] शास्त्रीय प्रति-
२. BN[1] सात्त्विकगुणलज्ञणैव
   IO सात्त्विकज्ञानलक्षणैव
३. BN[1] omits कश्चित्
४. IO omits प्रतिपाद...शब्द
   This passage is found in the margin in BS[2].
५. BN[1] बुद्धिः
६. IO omits न हि...पादितम्
७. BS[2] The verse is written in the margin.
८. BN[1] सा राजसी मता

राजसी रजोगुण[1]समुद्भवा बुद्धिः, यया हेतुभूतया ज्ञाता क्षेत्रज्ञः पुरुषो धर्माधर्मादीनुपादेयान् हेयांश्च पदार्थानयथावन्निश्चयाभावादसम्यग्वेत्ति। धर्माधर्मावदृष्टविषयौ सदाचारदुराचारौ; [2]कार्याकार्ये तु दृष्टविषये इति न पौनरुक्त्यम्। अथवा धर्माधर्मशब्दौ लक्षणया फलविषयौ[3]उक्तौ; कार्याकार्यशब्दौ तु तन्निमित्तकर्मविवक्षया उक्तौ। एवमपि न पौनरुक्त्यम्। [4]एषापि संशयात्मकरजोगुण[5]प्रभवत्वात् संसारिविषया ॥

अथ तामसी—

**अधर्मं धर्ममिति या बु[6]द्ध्यते तमसान्विता।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा तामसी मता ॥ ३२ ॥**

तामसी तमोगुणहेतुका बुद्धिर्या [7]धर्माधर्मादीनदृष्टविषयान् सर्वार्थांश्च [8]दृष्टिविषयान् तमसा हेतुना वृता सती विपर्ययेण जानाति, सैषा मिथ्याज्ञानहेतु[9]तमोगुणत्वान्निकृष्टा संसारिविषयेति हेया ॥

अथ धृतिस्त्रिविधा। तत्र सात्त्विकी तावत्—

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।**
**योगेनाव्यभिचारिण्या धृतिः स[10] सात्त्विकी मता ॥ ३३ ॥**

---

१. BN[1] गुणप्रभवा
२. IO omits कार्या
३. IO विषयानुरक्तौ
४. IO एषा हेया संशया
　BN[1] एषा या संशया
५. IO गुणभावत्वात्
६. IO मन्यते
७. IO धर्माधर्मान्
८. IO and BN[1] दृष्ट
९. BN[1] हेतुपरमतमो
१०. IO सा पार्थ सात्त्विकी

सा सात्त्विकी पूर्ववद्विशुद्धसत्त्वगुणात्मिका धृतिः। कासौ? यया योगी मनः-प्रभृतीन् धारयति। कीदृश्या? परमात्मविषयेन योगेन समाधिना सह अव्यभि-चारिण्या नित्यमव्यतिरिक्तया; योगी हि[2] मनोऽन्तःकरणं[3] प्राणमाभ्यन्तरं मारुतं तत्तत्क्रियाभेदात् नानासंज्ञम्; इन्द्रियाणि चक्षुर्वागादीनि योगार्थमेवं[4] धारयति। तत्रात्मसमाधिविषयोऽवष्टम्भः[5] स्थैर्यमेव कारणमित्यर्थः। एषा तत्त्वज्ञानहेतु[6]विशुद्ध-सत्त्वगुणसमुद्भूतत्वात् अपवर्गफलत्वे सत्युपादेया॥

अथ राजसी—

**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी॥ ३४॥**

रजोगुणजा धृतिः[7], यया साधनभूतया संसारी पुरुषः प्रसङ्गेनोक्तलक्षणेन फलाकाङ्क्षी स्वर्गादिसुखात्मककर्मफललिप्सुः धर्मादीन् धारयते[8] उद्वहति। न त्वपवर्गं धर्मः[9] शास्त्रचोदितसमाचारः, तत्फलं सुखं कामोऽर्थो[10] धनम्। त्रिवर्गमात्र-निबद्धधृतयो हि संसारिणः पुरुषाः[11]; तदेषा धृतिर्हेयैव॥

---

१. BN[1] मह्य
२. IO omits हि
३. IO करणे
४. IO एवं
५. IO and BS[2]. विषये स्थैर्यमेव
६. IO and BN[1] omits हेतु
७. IO वृत्तिः
८. IO and BS[2] धारयति
९. BN[1] अपवर्गधर्मः
१०. IO कामुक्तौ त्रिवर्ग
११. IO संसारिपुरुषाः

अथ तामसी—

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा तामसी स्मृता ॥ ३५ ॥

सा तामसी तमोगुणजा धृतिः, यया हेतुभूतया दुर्मेधा विपर्ययप्रत्ययरूपत्वात् दुष्टा मेधा प्रज्ञा यस्य[1] स तादृशः सन् पुरुषः स्वप्नादीन् दोषान् न विमुञ्चति तन्मय एव नित्यमास्त इत्यर्थः । स्वप्नः[2] निद्रा तमःकार्यम् । भयम् इष्टविषयविनाशशङ्कया त्रासः[3] । शोको नष्टानुशोचनम् । विषादम् अनुत्साहम् । मदं चित्तोद्रेकम् । मूढः किल तानेव नित्यमुद्वहन्नास्ते, तत एषा निकृष्टा[4] धृतिस्त्याज्यैव ॥

अथ कर्मफलभूतस्य सुखस्य त्रैविध्यं प्रतिपादयितुमुपक्रमते—

सुखं त्विदानीं त्रिविधं[5] शृणु मे भरतर्षभ ।

गतार्थमेतत् ॥

अथ त्रैविध्ये प्रतिपाद्ये सात्त्विकत्वं तावत्सुखस्य प्रतिपादयितुमाह—

अभ्यासाद्रमते यत्र दुःखान्तं च नियच्छति[6] ॥ ३६ ॥
यत्तदात्वे[7] विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं विद्यादात्मबुद्धिप्रसादजम् ॥ ३७ ॥

---

१. IO omits यस्य
२. All except IO स्वप्ने
३. BN[1] त्रासशोकौ
४. All except IO add एषा
५. IO and BN[1] शृणु मे त्रिविधं
६. BS[1] निगच्छति
७. BN[1] यत्तदाद्ये

तत्सात्त्विकं विशुद्धसत्त्वहेतुकं सुखमानन्दं[1] विद्धि जानीहि। कीदृशम्? आत्मबुद्धिप्रसादजम्। आत्मा ब्रह्मस्वरूपं परं तत्त्वम्; तदालम्बना बुद्धिः परा प्रज्ञा; तस्याः प्रसादो[2] नैर्मल्यम्, यदपेक्षया विशुद्धमपि सत्त्वं मलिनत्वात्परिहार्यमेव; ततस्तथाविधा[3]द्बुद्धिप्रसादा[4]ज्जातमुद्भूतम्। किं तत्[5]? यत्र यस्मिन् सुखे अभ्यासान्नित्यानुशीलनाद्योगी[6] रमते रतिं भावयति, न तूद्विजते। विषयभोगात्मकस्य हि सुखस्याभासो[7] विशेषाकाङ्क्षया तत्रोद्वेगं जनयति। समाधिजं तु सुखं रतिमेवावहति। यत्र च सुखेऽनुभूयमाने सर्वदुःखानामन्तं समाप्तिमभावं नियच्छति, नितरां प्राप्नोति; अन्यस्मिन् हि सुखेऽनुभूयमाने क्षणान्तरे[8] तदेव दुःखं संपद्यते[9]। कुतः सर्वदुःखानामन्तः? यच्च सुखं तदात्वे साध्यमानावस्थायां चिन्तासमाधान[10]लक्षणक्रोधरूपत्वाद्विषतुल्यम्, परिणामे तु सिद्ध्यवस्थायाममृतोपमं निरुपमास्वादमित्यर्थः; बाह्यसुखस्यैतदेव विपरीतं वक्ष्यति[11]। तदेतद्विशुद्धनिरतिशयनिरुत्तरास्वादरूपं समाधिप्रज्ञाप्रभवं योगिविषयं सुखमुपादेयम्॥

अथ राजसम्—

**विषयेन्द्रियसंयोगाद्यत्तदग्रे[12]ऽमृतोपमम्।**
**परिणामे विषमिव तद्राजसमिति स्मृतम्॥ ३८॥**

---

१. IO शुभं
२. IO प्रसादं
३. IO विधबुद्धि
४. BN[1] दनाज्जात
५. IO omits किं तत्
६. IO योगं
७. IO अभ्यासो
८. BS[1] and BN[1] add तदेव
९. IO समापद्यते
१०. IO चित्तसमाधानविशेषाधानलक्षण
११. BN[1] वक्ष्यामि
१२. BN[1] आद्ये

तद्राजसं रजोगुणसंभवं[1] सुखम्। किं तत्? यदिष्टेन विषयेणानित्येन शब्दादिनेन्द्रियस्य श्रोत्रादेः संयोगात्सम्बन्धात्तदात्वे[2] साध्यमानावस्थायाम[3]मृतोपमं क्षणमात्रमास्वादविशेषहेतुत्वात् सुधारसतुल्यम्, परिणामे[4] सिद्ध्यवस्थायां विषोपमं तत्कालमेव[5] द्वेष्यत्वात्। यदि वानुभूयमानावस्था तदात्वम्; तदा विषयेन्द्रियसंयोगजं सुखं सर्वं मधुरमेव; परिणामस्तु तद्विपाकावस्था; तस्मिन् सर्वमेव विषयसुखपरिणामं किंचिद्भवितुमर्हति; एतद्दुःखकारणं रजोगुणत्वाद् दुःखैकफलं[6] हेयमेव ॥

अथ[7] तामसम्—

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

तत्तामसं तमोगुणनिमित्तकं सुखम्। किं तत्? यदग्रेऽनुभूयमानावस्थायां चानुबन्धे परिणाम[8]वेलायां सुखबुद्ध्या गृहीतं मोहनं वैचित्र्यकारि,[9] यतो निद्राप्रभवम्। तमसो हि[10] निद्राप्रमादालस्यादि कार्यम्। तत्र निद्रा सर्वेन्द्रियव्यापारोपरमः। मोहावस्था आलस्यम्[11] अदाक्ष्यम्। प्रमादः कार्येष्वनवहितत्वम्। एतानि ह्यनुभूयमानान्यपि मोहात्मकानि परिणामदशाप्राप्तान्यपि मोहकान्येव; न ह्येषां ज्ञानादिफलं भवति। अज्ञानहेतुकतमोगुणजत्वादेतदज्ञानफलं सुखमत्यन्तहेयमेव ॥

---

१. BN[1] समुद्भवं
२. BN[1] आद्ये
३. IO omits अमृतो...सिद्ध्यवस्थायां This passage is found in the margin in BS[2].
४. BN[1] adds तु
५. IO omits तत्काल....मर्हति
६. IO adds सुखं
७. IO तथा
८. IO णामावस्थायां
९. IO वैचित्र्यं कारयतः निद्रा-
१०. IO omits हि
११. IO आलस्यं मन्दाक्षं प्रमा- BN[1] and BS[1] आलस्यमदाक्ष्यं

एवं ज्ञानादीनां सुखान्तानां[1] केषांचिदेव भावानां प्राधान्यविवक्षया[2] त्रैविध्यमुक्त्वा, सर्वत्र सर्वप्रमातृविषयाणां सर्वभावानां सात्त्विकादिभेदेन त्रैविध्यं व्यवस्थितमिति संग्रहेण प्रतिपादयितुमाह—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥

व्यक्तार्थः श्लोकः । किंतु दिवीति[3] फलभूम्युपलक्षणार्थम् । पृथिव्यामिति[4] कर्मभूम्युपलक्षणार्थं वेदितव्यम् ॥

•

इदानीं षोडशभिरध्यायैर्यथोक्तज्ञाननिष्ठतया कर्मस्ववश्यानुष्ठेयत्वेनावगतेषु[5] तेषामपवर्गफलत्वकारणभूतयोस्त्यागसंन्यासयोः प्रागुक्तयोः[6] सम्यक्स्वरूपज्ञाने जातसन्देहमर्जुनं प्रति तयोस्तत्त्वप्रतिपादनप्रसङ्गेन[7] त्यागिनामत्यागिनां[8] च विविक्तस्वरूपाभिव्यञ्जकं[9] ज्ञानादीनां गुणभेदेनोक्तं[10] त्रैविध्यमभिधाय अध्यायप्रक्रान्तं प्रकृतमर्थमनुबध्नाति । एवं[11] कर्मणां फलत्यागपूर्वकत्वेनानुष्ठितानामपवर्गफलत्वमुक्तम्[12][13] ॥

---

१. IO सुखादीनां
२. IO omits प्राधान्य....भावानां This passage is found in the margin in BS².
३. All except IO दिवीत्यादि
४. IO and BN¹ omit पृथिव्यां....णार्थं
५. IO अवगतेन
६. IO omits प्रागुक्तयोः BS² notes the word in the margin.
७. IO तत्त्वं प्रतिसाधन-
८. IO omits अत्यागिनां
९. IO विधिस्वरूप
१०. IO omits भेद
११. IO and BS² एषां
१२. BS¹ and BS² फलं त्याग
१३. IO फलमुक्त

तानि कर्मशब्द[1]मात्रेण सामान्यतः प्रोक्तानि । विशेषतः पुनः कानीत्या-काङ्क्षानिरासार्थं तत्स्वरूपप्रतिपादनं प्रस्तौति—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

इदं[2] चतुर्णां वर्णानामुक्तवक्ष्यमाणार्थस[3]मन्वयान्वितप्रकारस्वभावसमुत्थैर्गुणैर्धर्मैः क[4]र्माणि शास्त्रचोदिताः क्रियाविशेषाः समनन्तरवक्ष्यमाणभेदेन प्रविभक्तानि प्रतिवर्णं साधारणा[5]साधारणविभागेन पृथक्कृतानि परमेश्वरेणैवैकेन क[6]र्त्रा, येन स्वेच्छामात्रोपकरणेन परमार्थतो विशुद्धस्वभावमात्राव्यतिरिक्तस्वरूपमपि नाना-भावभेदाभा[7]साय चित्तं जगत्क्रीड[8]नकनिर्माणमिदमारचयता वर्णविभागः परिकल्पितः । तथा च भवतैव प्राक्[9] प्रदर्शितम्—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य[10] कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥"

तथा—

"महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोके[11] इमाः प्रजाः ॥"

---

१. IO शास्त्र
२. IO इह
३. BN[1] समयतया द्वि प्र-
४. IO omits this word.
५. IO omits असाधारण
६. IO omits कर्ता येन
७. BN[1] भासखचितं
८. IO क्रीडनकमिदं
९. IO प्रागदर्शितम्
१०. IO इत्यकर्तारमपि मां विद्धि कर्तार-मव्ययम्
११. IO and BN[1] लोकाः

इति। अत्र पूर्वश्लोके परमेश्वरेच्छामात्रहेतुकत्वं वर्णविभागे[१] प्रतिपादितम्। अपरश्लोके चत्वारो मनवश्चातुर्वर्ण्यप्रवर्तकाः प्रजापतयो ये उक्ताः, तेषामीश्वरसर्गविवक्षया महाकल्पप्रारम्भे परमेश्वरेच्छामात्रेण तद्भावाभिन्नस्वरूपाणामेव चतुर्धा सर्गोऽवभासितः, यतश्चतुर्वर्णरूपा प्रजेयमुदपादीति[३] दशमे व्याख्यातप्रायम्। इह तु वर्णविभागोपपत्तिप्रदर्शनप्रस्तावेनोदितम्; तदयमत्रापरविभागो[४] विवक्षितः—यदीश्वरेण स्वसर्गारम्भे चत्वारः पुरुषाः सपत्नीकाः प्रविभक्तकर्माणो ब्राह्मणादिव्यपदेशभाजः सृष्टाः[५], तेषामेकेन युग्मेन ब्राह्मणः[६] सर्ग उत्पादितः;[७] अन्यैः क्षत्रियादिसर्गाः; एवं क्रमेण ब्राह्मणादिवर्णविभागे स्थिते[८] योऽविच्छिन्नसन्तानतया ब्राह्मणेन ब्राह्मण्यां जातः स ब्राह्मणः, एवं क्षत्रियादयः। तदित्थमेभिः प्रजापतिभिर्या सृष्टिः कृता सानुलोम्येन प्रातिलोम्येन[९] च संकीर्यमाणा आनन्त्यं भजते। तत्र ब्राह्मणेन क्षत्रियायां वैश्यायां[१०] शूद्रायां वा जाता अनुलोमजा उच्यन्ते। एवं क्षत्रियेण वैश्यायां शूद्रायां चोत्पन्नाः, वैश्येन शूद्रायामुत्पन्नः सर्व एवानुलोमजा धर्म्याः। ये तु विपर्ययेण क्षत्रियेण ब्राह्मण्याम्, वैश्येन क्षत्रियाब्राह्मण्योः, शूद्रेण वैश्यक्षत्रियाब्राह्मणीषु उत्पादिताः ते प्रतिलोमजा[११] अधर्म्याः। एवमनुलोमप्रतिलोमजानामपि साङ्कर्ये सत्यानन्त्यं प्रजायाः। ये त्वविच्छिन्नसन्तानतया ब्राह्मणेन ब्राह्मण्यां

---

१. IO भागप्रति
BS[1] and BS[2] भागेऽस्य प्रति

२. IO. Space for four letters is seen here.
BS[2]. Space for nine letters is seen here.

३. IO उपपादितेति

४. IO अत्र वर्णविभागो
BN[1] अत्रावगतो विवक्षितः

५. BN[1] स्पष्टाः

६. BN[1] ब्रह्मणः

७. IO and BN[1] omit क्षत्रिया... एवं

८. IO स्थितो

९. BS[2] प्रति

१०. IO omits वैश्यायां

११. IO and BS[2] प्राति

क्षत्रियेण क्षत्रियायां वैश्येन वैश्यायां शूद्रेण शूद्रायामसङ्कीर्णतया जातास्ते विशुद्धाश्चत्वारो वर्णा इति ॥

वर्णविभागे व्यवस्थिते वर्णानां स्वविभागजं[1] कर्मप्रविभागं प्रदर्शयितुमाह—

**शमो दमस्तपः[2] शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२ ॥**

शमादयो[3] व्याख्यातस्वरूपाः । ब्रह्मणो ब्राह्मणवर्णस्य सम्बन्धि स्वभावजं प्रकृतिसमुत्थं कर्म शास्त्रचोदिता क्रियेति[4] प्रायेण स्पष्टार्थः श्लोकः । किन्त्विदमत्र विचार्यम्—इह चेतनाचेतनविभागेन द्विप्रकारे[5] भूतसर्गे[6] सुरनरतिर्यग्भेदेन त्रिप्रकारश्चेतनसर्गो व्यवस्थितः । तत्र नराख्यसर्गमध्ये शास्त्रीयक्रियाधिकृताः[7] कर्मभूमिजन्मानो[8] ये पुरुषाः, तेषां कर्मविभागेन गुणविभागेन च परमेश्वरेच्छावशादेव ब्राह्मणादिभेदेन चतुर्विधत्वं यन्निर्मितं[9] तत्र कर्मविभाग एव प्रथमं वक्तव्यः । वर्णानां हि कर्माणि साधारणासाधारणरूपाणि नियमितानि च । तथा ब्राह्मणस्य षट्कर्माणि अध्ययनादीनि साधारणानि, वर्णत्रयस्यापि तेषां विहितत्वात् । क्षत्रियवैश्ययोस्तावत्तानि प्रसिद्धान्येव । शूद्रस्यापि शास्त्रचोदितशौचस्नानवैश्वदेव-

---

१. IO and BN¹ भागजकर्म
२. IO तथा
३. IO शमादि व्याख्यातस्वरूपब्राह्मणवर्णस्वसंबन्धिभावजप्रकृति BN¹ शमादयो व्याख्यातस्वरूपो ब्राह्मणो
४. IO क्रियते
५. IO कारः
६. IO सर्गः BN¹ सर्ग
७. IO क्रियादिकृतः BN¹ क्रियाधिकृतः
८. BN¹ जन्मनः
९. IO निर्निमित्तं BN¹ यन्निमित्तं

श्राद्धादिक्रियाणामनुष्ठाने[1] विहिताधिकारस्य तदनुष्ठानोपयोगिनीतिकर्तव्यताविज्ञान-हेतु[3]शास्त्रैकदेशाध्ययने दत्त एवावकाशः, तद्विना विहितकर्मानुष्ठानानुपपत्तेः। दानं च तद्वत्सर्वसाधारणमेव। एवं च साधारणकर्मानुष्ठाने शूद्रस्य[4] भगवता परमर्षिणा परमप्रमाणभूतेन स्ववचसैव कृतोऽवकाशः, यश्चतुर्वर्गोपदेशमयं[5] स्वेतिहासं महा-भारताख्यमुद्दिश्योक्तवान्—

"श्रावयेच्चतुरो[6] वर्णान् कृत्वा ब्राह्मणमग्रतः" इति।

एवमेतानि साधारणान्यध्ययनादीनि त्रीणि कर्माणि। ब्राह्मणस्याध्यापनया-जनप्रतिग्रहाख्यानि[7] त्रीण्यसाधारणानि[8]। तान्येव कर्माणि[9] वर्णात्मकस्वभाव-जानि पूर्वमेव दैवसर्गसम्बन्धित्वेन[10] निर्दिष्टानि शमादीनि। एवं[11] साधारणान्यपि ब्रह्म[12]सम्बन्धित्वे[13]नैव किमित्यनेनोक्तानि? दैवासुरसर्गभेदो हि चतुर्वर्णसाधारणः; तत्स्वभावजाश्च गुणाः तथैव साधारणाः; एष एव च गुणविभागो विवक्षित इत्यत्रोच्यते। सर्वमेतद्यथोक्तमुपपन्नम्। किंतु प्रसिद्धत्वात् वर्णा[14]त्मकस्वभावजानि सात्त्विकानि शमादीनि[15] प्राधान्यादुक्तानि प्रकरणेऽस्मिन्। वर्णकर्मणामपवर्ग-

---

१. BN[1] क्रियमाणमनु
२. IO omits इति
३. BN[1] हेतुं
४. IO adds अपि
५. IO मयमितिहासं
६. IO श्रावयत्
७. All except IO add तु
८. IO adds तु
९. All except IO add तु
१०. BN[1] संबन्धत्वेन
११. IO and BS[2] एव
१२. BN[1] ब्राह्मण
१३. IO न्धित्वेन
१४. IO ब्राह्मणवर्णस्वभाव
१५. IO adds उक्तानि

साधनत्वेन[1] विवक्षितत्वादुत्तरेषां क्षत्रियादीनां वर्णात्मकस्वभावजान्येव प्रायेण कर्माणि निर्देक्ष्यति[2] । दैवसर्गात्मकस्वभावजानां साधारणानां शमादीनां ब्राह्मणसम्बन्धित्वेन[3] प्रदर्शितप्रयोजनानां[4]मुपलक्षणमात्रत्वेनेह कतिपयानामेव निर्देशः कृतः ; साकल्येन[5] तु "अमानित्वमदम्भित्वम्" इत्यादिना[6] । तथा—"अभयं सत्त्वसंशुद्धिः" इत्यत्र पूर्वमेव प्रतिपादितानि ॥

अथात्र क्षत्रियाणां वर्णात्मकस्वभावजानि कर्माण्याह—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

क्षात्रं क्षत्रियवर्णस्येदं स्वभावजं परमेश्वरनियमिततादृक्प्रकृतिसमुत्थं कर्म व्यापारः ; किं तत् ? शौर्यं शूरभावः पराक्रमः । तेजः स्वभावत एव पराभिभवनसमर्थमोजः । धृतिः[7] स्वभावकर्मणि दृढोऽवष्टम्भः । दाक्ष्यं दक्षता चातुर्यम् ; तथा सङ्ग्रामे पराङ्मुखत्वाभावो निर्भयत्वमित्यर्थः । दानमर्थिनां त्यागः । अप्रत्याख्यानहेतुरीश्वरभावः प्रभुत्वं पराधीनत्वासहिष्णुतेति[8] ॥

अथैवंविधं वैश्यशूद्रयोः कर्माण्याह[9]—

कृषिगोरक्ष्यवाणिज्यं वैश्यं[10] कर्म स्वभावजम् ।

---

१. IO साधारणत्वेन
२. IO निर्मोक्षति
३. IO न्धित्वेन
४. IO नानामपवर्गमात्र
५. IO साकल्येन शमादिसत्त्वगुणे तथा
६. BN[1] इत्यादि । तत्र गुणे
७. IO and BS[1] धृति
८. IO पराधीनासहि
९. All except BN[1] कर्माह
१०. BS[1] and BS[3] वैश्यं

कृषिः[1] व्रीह्यादिवापनहेतुः[2] फलादिविलेपनम्; गोरक्ष्यं[3] गा रक्षतीति गोरक्षः, तस्य भावो गोरक्ष्यम्, पाशुपाल्यम्[4], गोशब्देन पश्वन्तराणामपि परिग्रहात्। द्रव्येण द्रव्यान्तरं क्रीणाति, क्रीणंश्च यो जीवति स वणिक्; तस्य भावो वाणिज्यम्; एतद्धर्मात्मकस्वभावजं वैश्यकर्म ॥

**पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

पर्युत्थानं वर्णत्रयस्य[5] पूर्वस्य शुश्रूषा; तद्रूपं कर्म पूर्ववच्छूद्रस्य स्वभावसमुत्थं कर्मेति ॥

चातुर्वर्ण्यस्य कर्मप्रविभागं[6] प्रतिपाद्य स्वकर्मानुष्ठानस्य प्रकरणविवक्षितफलप्रतिपादनार्थमाह—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

यथाप्रतिपादितविभागेन स्वे स्वे[7] निजे निजे शास्त्रचोदिते कर्मण्यभिरतः आभिमुख्येन सक्तो नरः पुरुषः चातुर्वर्णिकः परमात्मसमापत्तिरूपामपवर्गलक्षणां सिद्धिं सम्यक् फलनिष्पत्तिं लभते अधिगच्छति, न[8] स्वभावकर्मानुष्ठानमात्रेणैव

---

१. BS[1] and BS[2] कृषीन्
२. IO वापभूहलादिविलेखनं
BN[1] वापनहेतोः भूहलादि
३. BS[1] and BS[2] गोरक्षं
४. IO पशु
५. IO adds पूर्वस्य
६. IO कर्मविभागं
७. IO omits स्वे स्वे
८. IO omits न स्वभाव...गच्छति. The passage is found in the margin in BS[2].

संसिद्धिमधिगच्छति; किंतु यथा येन प्रकारेण विशिष्टेन स्वकर्मनिरतः संसिद्धिमेतां लभते, तदभिधीयमानं[1] वस्त्ववधारय ॥

**यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।**
**स्वकर्मणा तमेवार्च्य[2] सिद्धिं विन्दति मानवः ॥ ४६ ॥**

यतो यस्मात्[3]प्रतिपादितात्[4] भूतस्वभावादेकस्मात्परमकारणात् भूतानां चराचराणां प्रवृत्तिर्यथास्वं प्रविभक्तो[5] व्यापारः, येन च तथाप्रविभक्तव्यापारं विश्वं समस्तं जगदिदं ततं विस्तारितम्, इच्छामात्रेणेत्थमवभासितम्, तमेव परमेश्वरं परमात्मानं तदिच्छानियमितेनैव स्वेन प्रतिवर्णं निजेन कर्मणार्च्य[6] आ समन्तादर्चयित्वा परितोष्य, मानवः कर्मभूमिजन्मा क्रियास्वधिकृतः चातुर्वर्णिको मनुष्यः[7] सिद्धिं साध्यलक्षणां फलनिष्पत्तिं लभते। किमुक्तं भवति? यथोक्तपरमात्मस्वरूपानुस्मरणनित्य[8]निर्विप्लवावहितबुद्धितया चतुर्णामपि वर्णानाममानित्वाभयत्वादिगुणाभिव्यञ्जितदैवसर्गजन्मनामसङ्करेण स्वं स्वं कर्मानुतिष्ठतां[9] परसिद्धिप्राप्तिरिति ॥

अत्रोपपत्तिं पूर्वोक्तां स्मारयितुमाह—

**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ४७ ॥**

---

१. IO तदभिधेयमानं
२. All except IO तमभ्यर्च्य
३. IO अस्मात्
४. BN[1] पादिताद्भुत
५. IO प्रतिभोक्तव्या [?]पदेशः येन
६. BS[1] and BS[2] कर्मणाभ्यर्च्य
७. BN[1] स नष्टः insted of मनुष्यः
८. IO नित्यविप्लवा
९. IO अनुष्ठितवतां
BN[1] अनुतिष्ठतो

यो यस्य वर्णस्य[1] शास्त्रचोदितः स्वः[2] आत्मीयो धर्मः स्वाध्यायाद्याचारः स विगुणोऽपि, मुख्यकर्मा[3]नुष्ठानसामर्थ्यादिनानुकल्पादिनानुष्ठितः सन् विगतस्वगुणः असंपूर्णस्वाङ्गोऽपि श्रेयान् प्रशस्यतरः। कस्य सकाशात्? परधर्मात्, वर्णान्तराचारात्। कीदृशात्? स्वनुष्ठितात्; सुष्ठु[4] सर्वाङ्गसंपूर्णतयानुष्ठितादाचरितात्। कुत एवम्? यतः स्वधर्मे आत्मीयाचारे बुद्धादावनुष्ठीयमाने[5] अवश्यं निधनं विनाशोऽपि प्रशस्यम्; कस्य सकाशात्? परधर्मोदयात्। क्षत्रियादेरध्ययनाध्यापनात्मकब्राह्मणादिवर्णान्तराचारानुष्ठानात्[6] य उदयः सुखादिलक्षणप्राप्तिः, तस्मात्तादृशात्। किमनेनोक्तं भवति? इह द्वये शास्त्रकर्मानुष्ठाने अधिकृताः[7]—एके रजःसंकीर्णसत्त्वप्रधानचित्ताः स्वर्गादिफलप्रवृत्तिविषयधर्मानुष्ठायिनः; अपरे तु विशुद्धसत्त्वप्रधाना यथोक्तापवर्गफलनिवृत्तिविषयधर्मानुष्ठायिनः। तेषामुभयेषामपि दैवसर्गभाजां स्वधर्मानुष्ठानादेव उभयरूपतया[8] सिद्धिरुपपन्ना, न तु परधर्मानुष्ठानात्; यतः परेषां स्वधर्मस्थानां स्वर्गादिफलप्राप्तिलक्षणा[9][10] सिद्धिः श्रूयते, परधर्मस्थानां तु प्रत्यवायः श्रूयते, उत्तरेषां स्वधर्मनिष्ठत्वे[11] सम्यग् ज्ञाननैर्मल्यसम्पत्तिः, परधर्मनिष्ठत्वे तु[12] ज्ञानकालुष्यमेव संपद्यते। यतः शास्त्रचोदितस्य[13] प्रबन्धप्रवृत्तस्य स्वस्य कर्मण-

---

१. IO वर्णशास्त्र

२. BS[1] and BS[2] स

३. BS[1] and BS[2] कल्पानु-

४. IO omits सुष्ठु...ष्ठितात्

५. BS[2] युद्धादौ

६. IO अध्ययनाद्यात्मक

७. IO कृतः एको

८. IO and BN[1] read अपरे...नुष्ठायिनः after ष्ठानादेव

९. IO उभयथा सिद्धिः

१०. BN[2] प्राप्तिः

११. IO स्वधर्मानि

१२. BN[1] omits तु

१३. IO चोदितप्रबन्ध

स्त्यागः परकर्मणश्चोपादानं द्वेषं रागं च विना न संभवति[1]। तत्सन्निधौ च कीदृशम्? सम्यग् ज्ञाननैर्मल्यम्। इत्थं दैवसर्ग[2]योगित्वादपवर्गार्थिभिरपि सर्ववर्णैर्यथास्वमसङ्करेणानुष्ठातव्यं स्वकर्म; कथंचन न त्याज्यम्; न हि कर्मत्यागमात्रसाध्या अपवर्गप्राप्तिः; सा हि ज्ञानादेव सिद्ध्यति; ज्ञानं[3] च दैवसर्गाद्यव्यभिचारितयोक्तम्। तच्च—"अमानित्वमदम्भित्वम्[4]" इत्यादिना त्रयोदशे[5] साकल्येन प्रतिपाद्य, षोडशारम्भे "अभयं सत्त्वसंशुद्धि[6]र्ज्ञानयोगव्यवस्थितिः" इत्यादौ दैवगुणसामग्रीकथने प्रथममेवानूदितम्; तच्च सर्ववर्णसाधारणम्, दैवसर्गादिभेदस्य तथारूपत्वात्; वर्णानां कर्मविभागस्य सर्गयोश्च गुणविभागस्य प्रबन्धेन पृथङ् निर्देशात्; यदि हि द्विजातय एव वर्णा दैवसर्गः[7] शूद्रवर्णश्चासुर इति स्यात्, तद्वर्णमुखेन सर्गभेदमुखेन वा कर्मविभागाद्य[8]भिधीयते; न चैतदुपपद्यते; सर्गभेदस्य सर्ववर्ण[9]साधारण्ये सति गुणानां व्यभिचारदर्शनात्; तथा च ब्राह्मणादयोऽपि दम्भदर्पाद्यासुरसर्गगुण[10]योगिनो दृश्यन्ते; शूद्रा अप्यदम्भित्वादिदैवसर्ग[11]योगिनो दृश्यन्ते; तस्माद्दैवसर्गभाजां सर्ववर्णानां यथोक्तोप[12]वर्गफलसाधनभूतं ज्ञानं साधारणमेव; कर्म तु प्रविभक्तम्॥

---

१. IO संभवतः
२. IO स्वर्ग
३. IO ज्ञानदैवसर्गादिव्यभि
४. IO अदाम्भित्व
५. BN[1] त्रयोदशेन
६. IO शुद्धिज्ञान
७. BN[1] सर्गाः
८. IO कर्मप्रविभागाद्यथाभि-
९. IO omits सर्ववर्ण
१०. IO omits गुण
११. IO and BN[1] दैवसर्गगुणयोगिनो
१२. IO यथारूपवर्ग

यच्च ज्ञाननिष्ठतयानुष्ठीयमानमपवर्गहेतुः संपद्यत इति, न तस्य कस्यांचिदवस्थायां त्याग उपपद्यत इति प्रतिपादयितुमाह—

स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥ ४८ ॥

वर्णात्मकस्वभावप्रतिबद्धं स्वाध्याययजनादिकर्म कुर्वाणो ज्ञाननिष्ठतयानुतिष्ठन् किल्बिषं संसारबन्धनलक्षणं पापं न लभते; त्यजंस्तु सर्वकर्मदुर्वाररागद्वेषात्तत्किल्बिषं प्राप्नोत्येवेत्यसकृत्प्रतिपादितम् । अतः पूर्वोक्तोपपत्त्या परमेश्वरेच्छावशात्सहैव जातं वर्णात्मकस्वभावजातं विगुणमपि नकर्म त्याज्यमेव ॥

अत्र हेतुमाह—

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः[3] ॥ ४८½ ॥

यस्मात्सर्वारम्भाः समस्तकर्माणि धूमेनाग्निरिवाव्यभिचारिणा दोषेण मलेनावृताः, ततश्च प्रबन्धप्रवृत्तशास्त्रचोदितकर्मत्यागलक्षणः प्रारम्भो दोषेणाज्ञानरूपेणावृत एव। अज्ञानविविक्तं तु तद्यथोक्तफलसाधनं स्यात्, यावता तस्य एवाज्ञानम् ॥

यथा त्वत्यजन्नेव कर्म ज्ञानफलभाग्भवति, तथा प्रतिपादयितुमाह—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९½ ॥

---

१. IO omits सर्व
२. All except IO कर्म न
३. IO वृतः
४. IO and BN[1] लक्षणोऽप्यारम्भः

सर्वत्र सर्वस्मिन् विहिते वर्णस्वभावजे कर्मण्यनुष्ठीयमाने एवासक्तबुद्धिः पूर्वव्याख्यातसङ्गदोषरहितमतिः ; तथा निषिद्धात्कर्मणो जितात्मा[1], निगृहीतान्तःकरणः ; तथा विगतस्पृहः, सर्वत्र सततसुखसम्पूर्णस्वात्ममयत्वदर्शित्वादनित्यात्[2] स्वर्गसुखादेर्विगता[3] व्यावृत्ता स्पृहा अभिलाषो यस्य स तादृशः। परमां प्रकृष्टां दोषरहितां नैष्कर्म्यसिद्धिं समधिगच्छति सम्यग्लभते, सर्वकर्मत्यागित्वफलं परमात्मसमापत्तिलक्षणं प्राप्नोति। केन? संन्यासेन, व्याख्यातस्वरूपेण फलाभिसन्धित्यागात्मना, न तु कर्मत्यागात्मना ॥

इत्थं येन ज्ञानेन संस्कृतं क्रियमाणमेव व्यक्तं[4] भवति, तस्य क्रमेण परं प्रकर्षं प्रतिपादयितुमुपक्रमते—

सिद्धिं प्राप्तो यथा ब्रह्म तदाप्नोति निबोध मे ।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०१/२ ॥

उपायभूतस्य ज्ञानस्य परा निरुत्तरा निष्ठा प्रान्तभूमिः, यतः परं ज्ञेयं न संभवतीत्यर्थः, तदुभयमपि कथ्यमानमवधारय। एवंविधो[5] ब्रह्म प्राप्नोतीति[6] ॥

पूर्वं तत्प्रकारमाह[7]—

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५७१/२ ॥

१. BS[1] omits जितात्मा
२. IO अनित्यस्वर्ग
३. IO omits विगता
४. BS[1] and BS[2] व्यर्थं
५. IO adds यः
६. IO omits इति
७. All except BN[1] तावत्प्रकारं

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२½ ॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३½ ॥

एवंविधो [1]योगी ब्रह्मभूयाय ब्रह्मभावाय परमात्मसमापत्तये कल्पते, समर्थो भवति[2] । कीदृशः? प्रथमं तावद्दैवसर्गयोगित्वात् सहजया विशुद्धया प्रलीनरजस्तमस्कत्वाद्विशुद्धसत्त्वैकमय्या निर्मलया[3] बुद्ध्या प्रज्ञया युक्तः; स हि परमसिद्धिसाधनभूतधर्मग्रामाग्रणीः सहजो गुणो योगिनः । अत[4] एव तस्मिन् सति धृत्या पूर्वोक्तलक्षणया सात्त्विक्या दृढावष्टम्भ[5]लक्षणया उत्साहशक्त्यात्मानमन्तःकरणं नियम्य वशे व्यवस्थाप्य तद्वशाच्छब्दादीनिष्टान्विषयान् शास्त्र[6]निषिद्धान् त्यक्त्वा सर्वात्मना परिहृत्य; शास्त्रविहितेषु च विषयेषु त्याज्येषु[7] सङ्गमूलौ रागद्वेषौ तदुपादानाज्ञानहेतू मलक्लेशौ व्युदस्य फलाभिसन्धानाभावात् विक्षिप्य तिरस्कृत्य । एवं[8] पूर्वं मुख्यं परिकरबन्धं कृत्वा विविक्तसेवी समाधिव्युत्थानहेतुचेतनाचेतनभावरहितो देशो[9] विविक्तः, तं सेवितुं शीलं यस्य स तथाविधः । तथा[10] लघ्वाशी लघुप्रमाणं[11]मन्नं वृत्तिसमवस्थाकारणभूतं[12]मात्रं कालावहितत्वादिगुण-

---

१. BS¹ and BS² भवेद्योगी
 IO भावाद्योगी
२. All except IO add इति
३. BS¹ and BS² निर्मलतया
४. IO and BN¹ omits अतः
५. IO दृष्टावष्ट
 BN¹ दृष्टयावष्ट
६. BN¹ omits शास्त्रनिषिद्धात्
७. IO and BN¹ अत्याज्येषु
८. IO एव पूर्वं मुख्य
९. IO omits देशः
१०. IO omits तथा
११. IO प्रमाणं मनोवृत्ति
 BN¹ प्रमाणमनोवृत्ति
१२. IO भूतं मात्राकालरहित

परिशुद्धमल्पमशितुं शीलं यस्य स तथा[1]; यतानि गृहीतान्यन्यविषयेभ्यः[2] प्रत्याहृतानि वाक्कायमानसानि वचनशरीरान्तःकरणानि येन स तथाविधः। इत्थंभूतश्च सततं नित्यं ध्यानयोगपरः ध्यानेन परतत्त्वात्मकोपेयवस्तुचिन्तनेन यो योगः सम्बन्धः, तन्निष्ठः; एवंविधगुणसामग्र्या[3] वैराग्यं दृष्टानुश्रविकविषयवितृष्णत्वं[4] सत्त्वगुणविषयं वितृष्णत्वं च समुपाश्रितः[5] सम्यगास्थितः। तथा सति एतान् दोषान् विमुच्य। कान्[6]? अहंकारं तावत् अनात्मनि शरीरादावात्मप्रत्ययं सर्वदोषाधिराजम्; तथा बलं शक्याशक्यविवेकपरिहारेण कार्येषु हठम्[7]; तथा दर्पं स्वल्पस्यापि सिद्धिलेशस्योपलब्धेश्चित्तोद्रेकम्; तथा कामं रागनिमित्तकम् इष्टेषु विषयेषु सकल्पम्; तथा क्रोधं द्वेषनिमित्तकं चित्तेन्द्रियक्षोभम्; तथा परिग्रहं देहदारदारकद्रविणादिषु सर्वस्वबुद्ध्या स्वीकारम्; अत एव परिग्रहत्यागान्निर्ममः ममकारलक्षणाद्बन्धान्निष्क्रान्तः; ततश्च नित्यनिर्विकारपरमोपादेयस्वरूपमात्रपरायणत्वाच्छान्तो विगतसकलविकल्पक्षोभः[8]। इत्थंभूतो ब्रह्मभूयाय कल्पते, नानेवंविधः॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥ ५४२॥

एवमनेन क्रमेण ब्रह्मभूतो ब्रह्मैकपरायणत्वात्तद्भावमापन्नः निर्विशेषतयैव प्रसन्नात्मा विगतद्वैतप्रत्ययसंकल्पत्वात् प्रसन्नः स्वाभाविकशुद्धियुक्तः आत्मा स्वभावो

---

१. BN¹ तथा निग्रही
२. IO and BN¹ विषयात
३. IO विधया गुण
४. IO वितृष्णत्वे
५. BN¹ समुपासितः
६. All except IO कं
७. IO कार्येष्वक्कुशं
८. BN¹ प्रत्ययकलङ्क

यस्य स तथाविधः सन्न शोचति। नित्याविनश्वरस्वात्ममय[1]विश्रामत्वात् कस्यचिदपि भावस्य स्वत्वेनापरिग्रहात् तदभावेन परिदेव्यते[2]; नाप्यनेनैव न्यायेन [3]कस्मिंश्चित्प्राप्ते हृष्यति, हर्षमनुभवति। एते हि सर्वे भावा [4]मायोपहतदृशां भावाभावभ्रान्ति-मुद्भावयन्तो हर्षशोकात्मकविकारहेतुतामापद्यन्ते, न तु सर्वसाम्यदर्शिनो योगिन इत्यर्थः। तथा ज्ञानस्य[5] परां [6]काष्ठां निरतिशयां चतुर्थीं काष्ठां [7]ज्ञानलक्षणां मद्भक्तिं मत्स्वरूपोपासां लभते प्राप्नोति। किमुक्तं भवति? परमात्म[8]द्वैतप्रतिपत्ति-लक्षणा या ज्ञानस्य परा निष्ठा सैव परा मद्भक्तिरिति; तथा चैनां स्तुवन्ति भक्तिमन्तः—

"मुक्तौ बहुविधा वादा विदुषां स[9] तु तत्त्ववित्।
य[10]स्य भक्तेः परा काष्ठा मुक्तिरित्यनुनिश्चय[11]ः॥"

तथा च—

**भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः।**
**ततो मां[12] तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ ५५½॥**

---

१. BN[1] मयविश्वत्वात्
२. IO देवते
३. IO कस्मिंश्चिदपि प्राप्ते हृष्यति न हर्षे
४. BS[1] and BS[2] मायोपहत
५. BN[1] adds परां निष्ठां प्राप्ता इत्यर्थः।
६. IO निष्ठां
७. BN[1] प्राप्तज्ञान
८. IO त्मद्वैत
BN[1] त्मद्वैतप्रत्ययलक्षणयाज्ञान
९. All except BN[1] सन्तु
१०. All except IO यस्त्वद्भक्तेः
११. IO इत्यन्तनिश्चयः
BN[1] इत्यात्तनिश्चयः
१२. BS[1] and BS[2] ततोऽसौ

एवंविधया निरुत्तरया ज्ञान[१]रूपया भक्त्या मां परमात्मानमेकं तत्त्वमभिजानाति, आत्मत्वेनाभिमुख्येन वेत्ति। कस्माज्जानाति? तत्त्वतः परमार्थतोऽद्वयचित्प्रकाशात्मको योऽहं मत्स्वरूपः, यैश्चा[२]स्मि यो भवामि, तां परां सत्तां भजन् तादृक्स्व[३]भावप्रत्यवमर्शरूपया स्वशक्त्या नित्यमवियुक्तस्तिष्ठामि। अतत्त्वविदो हि नैवंविधमात्मत्वेन प्रत्यभिजानते; किंतु ते व्यतिरिक्तं परमं वेद्यं च मायावशविपर्यस्तज्ञानत्वात् जानन्ति, यथोक्तभक्तियुक्तस्त्वेवंविधं मां सत्येन रूपेण ज्ञानचक्षुषा प्रत्यभिज्ञाय ततः परं मय्येव विशति, अहमेव संपद्यते। एवंविधे हि मयि उपास्योपासकोपासाविकल्पहानात् ब्रह्मैव परं भूत्वा सिद्धार्थो भवतीत्यर्थः॥

एषा च परा सिद्धिकाष्ठा क्रमप्राप्या; ततश्चैवंविधज्ञाननिष्ठोऽपि यो नियतशरीरसम्बन्धं तावदनतिक्रान्तो योगी भवति, तस्य प्रवृत्तिं प्रतिपादयितुमाह—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥ ५६$^{१}_{३}$ ॥

सर्वाणि यज्ञदानादीनि[४] सदा नित्यं कुर्वन्ननुतिष्ठन्नपि मद्व्यपाश्रयः अहं सर्वकर्तृत्वेन प्रतिपन्नः आश्रयोऽवलम्बनं यस्य स तादृशः सन्, मत्प्रसादात् मम परमात्मनः स्वाभाविकात्प्रसादादानुकूल्यात् प्रत्यभिज्ञेयतामापन्नात् सतो हेतोः शाश्वतं नित्यम्, अत एवाव्ययमक्षयं पदं परब्रह्मस्वरूपं[५] स्थानं प्राप्नोति अधिगच्छति;

---

१. BN[1] ज्ञानस्वरूपया
२. BS[1] and BS[2] यथास्मि
३. BN[1] स्वरूप
४. BN[1] adds कर्माणि
५. BS[1] and BS[2] स्वरूप

यैत्प्राप्यैव वैश्वरूपेणात्मानमधिगच्छन्नियतदेहसम्बन्धलक्षणबन्धात्यन्तविनाशरूपां परां सिद्धिं प्राप्नोतीत्यर्थः ॥

एवं यथोक्तमुपदेशसर्वस्वं सम्यगवधार्य त्वमप्येवं समाचरेत्यर्जुनायोपदेष्टुमाह—

**चेतसा सर्वकर्माणि मयि संन्यस्य भारत ।**
**बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव ॥ ५७½ ॥**

सततं नित्यमेव सर्वास्ववस्थासु मच्चित्तो मय्येकस्मिंस्तत्त्वे परब्रह्मणि चित्तमन्तःकरणं यस्य स तथाविधो भव, परमार्थतो मद्व्यतिरिक्तं पदार्थान्तरं न संभवत्येव । ततो व्यवहारभूमौ यैदपीदन्तया प्रतिपद्यसे, तत्तत्पूर्वप्रतिपादितोपपत्त्या परप्रकाशचित्स्वरूपतया भावयेत्यर्थः । किं कृत्वा मच्चित्तो भव? सैर्वकर्माणि स्वकर्माणि क्रियमाणान्येव चेतसा मनसैव तैत्फलनिस्पृहेण मयि यथोक्तस्वरूपे परमात्मनि संन्यस्य तत्कृताभिमानत्यागेन निक्षिप्य । कथं चैतत्संपद्यत इत्याह— बुद्धियोगं समाश्रित्य । बुद्धिः यथाप्रतिपादितं ज्ञानम् ; तत्र योगः सततमव्युत्थानः समाधिः, तं समाश्रित्यालम्ब्य तन्निष्ठो भूत्वा, मच्चित्तो भवेति वाक्यार्थः ॥

ततश्च—

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहंकारं न मोक्ष्यसि विनङ्क्ष्यसि ॥ ५८½ ॥**

---

१. BN[1] यत्प्राप्यैव
२. IO यद्यपि
३. IO and BN[1] सर्वाणि स्वक-
४. IO तत्फलानि निस्पृ-
५. IO and BS[2] दुःखानि

मत्प्रसादान्मदनुग्रहान्मूलकारणभूतात् मच्चित्तो मदेकालम्बनमानसः सर्वदुर्गाणि सर्वकृच्छ्राणि हर्ष[1]शोकमोहमूलानि [2]बन्धकारणानि तरिष्यसि लङ्घयिष्यसि। अथैवमुपदिष्ट[3]स्त्वं यद्यहंकारं जात्याद्यभिमानावच्छिन्नशरीरा[4]द्यात्मप्रत्ययं न मोक्ष्यसि तद्विनङ्क्ष्यसि, पारमार्थिकस्व[5]रूपाप्रतिपत्तेर्विनाशमभावमेव प्राप्स्यसि ॥

न चैतत्[6]स्वाधीनं तवेत्याह—

**यदहंकारमाश्रित्य न योत्स्य इति मन्यसे।**
**मिथ्यैव व्यवसायस्ते प्रकृति[7]स्त्वां नियोक्ष्यते ॥ ५९$\frac{1}{2}$ ॥**

एवंविधमवस्तुविषयमहंकारं [8]कर्तृत्वाभिमानमाश्रित्य धर्म्यमवश्यकरणीयं [9]युद्धं न करिष्यामीति यन्मन्यसे बुद्ध्यसे, एष एवंविधस्ते व्यवसायो [10]बुद्धिनिश्चयो मिथ्या निष्फल एव; यतः प्रकृतिः स्वभावः परमेश्वरेच्छानियमितयुद्धादि[11]कर्तृकस्त्वां नियोक्ष्यते, वर्णस्वभावे कर्मणि प्रवर्तयिष्यते[12] ॥

एतदेव स्फुटयितुमाह—

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।**
**कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि सन्[13] ॥ ६०$\frac{1}{2}$ ॥**

व्याख्यातमेवैतत्[14] ॥

---

१. IO शोकभयमोहादीनि
२. BN[1] omits बन्ध
३. IO दिष्टत्वं
　BN[1] दिष्टत्वं च
४. IO राद्यात्म
५. IO रूपप्रति
६. BS[1] and BS[2] न चेत् स्वा-
७. IO and BN[1] त्वा
८. IO and BN[1] कर्तृता
९. IO omits युद्धं...सायो
१०. IO बुद्धिनिश्चयो
११. IO कर्मकस्त्वां
१२. IO यिष्यति　BN[1] यिष्ये
१३. BS[1] तत्
१४. IO एव तत्

किं बहुनोक्तेन? इममुपदेशसर्वस्वं सिद्धान्ततया प्रतिपद्यस्वेत्यर्थः[1]—

ईश्वरः सर्वभूतानां हृद्देशे[2] वसतेऽर्जुन।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ ६१½॥

तमेव शरणं गच्छ सर्वभावेन भारत।
मत्प्रसादात्परां सिद्धिं[3] स्थानं प्राप्स्यसि शाश्वतम्॥ ६२½॥

एष प्रबन्धतः पुनःपुनः[4] प्रतिपादित ईश्वरः परमात्मा सर्वभूतानां समस्त-प्राणिनां हृदि हृदये सर्वसंविदधिकरणभूते देशे वसति नित्यं तिष्ठति। किं कुर्वन्? यत्किंचिदेषां सर्वभूतानां ज्ञानात्मकं क्रियात्मकं वा परिस्पन्दितं तत्सर्वं स एवैकः परमार्थतः कुर्वन्नपि मायाशक्त्यावभासितपरस्परविभिन्ननानारूपाणि[5] तानि सर्वभूतानि प्रत्येकम् 'अहं करोमि' इति मिथ्याभिमाननिवेशनेन[6] भ्रामयन् व्यामोहयन्। कथं भ्रामयन्[7]? यन्त्रारूढानि; यन्त्रं सूत्रसञ्चारादियुक्तिसंपाद्याचेतनवस्तुचेतनक्रियाभिव्यञ्जकं काष्ठादिसन्निवेशविशेषमेवारूढानि। यथा केनापि युक्तिमता विशिष्टसन्निवेशविरचिते यन्त्रेऽधिरूढेष्वचेतनेष्वपि भावेषु चेतनक्रियावेशः क्रियते, तथा परमेश्वरेण शरीरयन्त्रमारोप्याकर्तृभूतान्यपि भूतानि कर्त्रभिमानावेशभाञ्जि[8] क्रियन्त इत्यर्थः। एतद्यन्त्रारूढेवेति छान्दसनपुंसकबहुवचन[9]-

१. BS[1] त्याह
२. All except IO हृद्देशे
३. IO शान्तिं
४. IO omits पुनः
५. All except BS[1] विभिन्नरूपनाना-रूपाणि
६. IO and BN[1] निवेशेन
७. BN[1] क्वथयन् यन्त्रावरूढानि
८. BN[1] omits आवेश
९. BN[1] and BS[1] छान्दसा नपुं.

विवक्षया पाठं पठन्ति ; ते च शरीरं[1] रूप्यत्वेन व्याचक्षते ; तत्र[2] वस्तुनि न कश्चिद्विशेषः । यत एवं तत्त्वत एव[3] सर्वकर्ता परमेश्वरस्तदा[4] सर्वथा निरस्तमिथ्याभिमानः तमेवैकं[5] शरणं गच्छेति[6] आत्मत्वेन प्रतिपद्य स्वमिथ्याभिमानजेभ्यो हर्षशोकादिबन्धनेभ्यो विमुक्तः ममैवैकस्येश्वरस्य प्रसादादनुग्रहादभिव्यक्ताद्वा[7] स्वाभाविकान्नैर्मल्यात्परां सिद्धिं निरुत्तरां ज्ञाननिष्ठां तत्फलं च परं स्थानं निरुत्तरं धाम ब्रह्मस्वरूपं[8] प्राप्स्यसि, अधिगमिष्यसीति ॥

निरवशेषमनुत्तरज्ञानसर्वस्वमुपसंहरन्नाह—

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यदिच्छसि तथा कुरु ॥ ६३½ ॥

स्पष्टार्थः श्लोकः ॥

केवलं नार्जुनं प्रति भगवत एवं संभावना ; नातःपरं रहस्यं वक्तव्यमस्तीत्येतावत्तात्पर्यमेतत् । अर्जुनः साक्षात् परस्वरूपदर्शित्वेनानुगृहीतः कथमेवंविधोक्तिविषयः स्यात् ? तथा सर्वोपदिष्टानामुपदिष्टपरमरहस्यज्ञानविषये श्रद्धाशेषोपोद्बलनार्थं[9] भगवतैतदादिष्टम् । तथा चानुगृहीतान् प्रति प्रसादेष्वतृप्यन्

---

१. BN[1] शरीर
२. BN[1] तदवस्तु
३. BN[1] एवं
४. BS[1] ततः
५. IO omits स्तमेवै...मान. BS[2] reads this passage in the margin.
६. BN[1] गत्वात्मत्वेन
७. IO अभियुक्ताद्वा
८. IO ब्रह्मरूपं
९. IO श्रद्धाविशेषोद्बल
BN[1] श्रद्धाशेषोद्बल
BS[2] श्रद्धाशेषोपोद्बल-

परमेश्वरः पुनःपुनः[1] प्रतिपादितमर्थमुपसंहारसमये सिद्धान्ततया हृदि निवेशयन् सविशेषं प्रशंसापूर्वं पुनरप्याह—

सर्वगुह्यतमं[2] भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमतिः ततो वक्ष्यामि ते हितम् ॥ ६४½ ॥

इदं मे परं[3] निरुत्तरोपादेयार्थप्रतिपादकत्वात् प्रकृष्टं वचो वचनम्; अत एव सर्वगुह्यतमं सर्वेषां गुह्यानां रहस्यभूतानामर्थानामुत्तरोत्तरातिशयसंभवादिदं निरतिशयार्थप्रतिपादकं गुह्यतमं सर्वगुह्यानां निष्ठारूपं श्रुत्वावधारय । यत इष्टस्त्वं मे प्रियो दृढमतिश्च स्थिरबुद्धिः, अतो हेतोस्ते हितम्[4]नुकूलं वस्तु वक्ष्यामि कथयिष्यामि । प्रियायार्थिने स्थिरचित्ताय च शिष्याय रहस्यं[5] परमपि वक्तव्यमित्यनेनोपदिष्टम् ॥

[6]तं वक्तुं प्रतिज्ञातमर्थमाह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५½ ॥

मामेवैष्यसीत्येतदन्तं नवमे वितत्य व्याख्यातम् । किन्त्वेतावन्मात्रं ज्ञानसर्वस्वमिति प्रतिपादयितुं भगवान् प्रतिज्ञां बध्नाति । यतः स्वभावत एव

---

१. IO omits पुनःपुनः
BS² notes this in the margin.
२. IO तरं
३. IO परमं निरुत्तरोपदेशार्थं
४. IO हितमनुत्तरमनुकूलं
५. IO परमपि रहस्यं
६. IO तस्य वक्तुं
BS² ते वक्तुं

प्रियोऽसि मे, ततः सत्यममृषा तव प्रतिजाने प्रतिज्ञां करोमि। यथानेन भक्तिलक्षणेन परेण समाधिना मां यथोक्तस्वरूपमेष्यसि प्राप्स्यसि, मदेकभावमाप्स्यसीति ॥

किंच—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६½ ॥

इति प्रतिपादितज्ञानसहभावोपदिष्टस्वकर्मानुष्ठानरूपान् वा सर्वानशेषान् धर्मानाचारान् परित्यज्य परिहृत्य मामेवासकृत्प्रतिपादितस्वरूपमेकमद्वितीयं परमात्मलक्षणं परं तत्त्वं शरणमाश्रयं परां गतिं व्रज गच्छ, मत्समापन्नो भवेत्यर्थः। यदि वानुष्ठेयत्वेनोपदिष्टानां सर्वधर्माणां सङ्गादिदोषरहितत्वे सति फलानभिसन्धानमेव परित्यागः, तच्च यथोक्तस्वभावपरमात्मसमापत्तिमात्रैकफलालम्बनमनस्तया भवतीति सर्वधर्मान् कुर्वन्नपि मदेकशरणमानसो भवेत्युक्तम्। यथाचानन्यशरणतयाहमाश्रितः सन् त्वां[1] सर्वपापेभ्यः संप्रति पापबुद्ध्या गृहीतेभ्यो ज्ञातिगुरुवधादिभ्यो निःशेषेभ्यः पापेभ्यो मोक्षयिष्यामि, व्यतिरेचयिष्यामि, अतो यथोक्तज्ञानशिथिलमतित्वान्मा शोकं कार्षीः ॥

इदमत्र तात्पर्यम्—एकस्मिन् परमार्थे सति मत्स्वरूपे[2] परस्मिंस्तत्त्वे यदा "पश्यन् शृण्वन् स्पृशन् जिघ्रन्" इत्यादिना प्रतिपादितक्रमेण निबिडावधान-

---

१. BS² त्वा    २. IO रूपं

लीनचित्तत्वान्मदेकभावमापन्नो भविष्यसि, तदा सर्वासु क्रियासु ज्ञानेषु वचनेषु च पुण्यपापविकल्पोपप्लवः स्वयं विगलिष्यतीति निःशेषं परं रहस्यमुपदिश्यात्रानुपदेश्यपुरुषपरिहारद्वारेण संग्रहत उपदेश्यलक्षणं प्रतिपादयितुमाह—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

यदि चैतद्यथोपदिष्टं सर्वमवधारितं भवता सुगृहीतं च कृतम्, यदि नित्यानुशीलनात्परं प्रत्यवमृश्य प्रवचनयोग्यतां प्रतिपत्स्यसे, तदिदं वस्तु तवातपस्काय त्रिप्रकारतया व्याख्यातेन तपसा रहिताय न वक्तव्यम्; तपस्विनेऽप्यभक्ताय प्रतिपादित[1]चतुरवस्तुभक्तिलक्षणयोगशून्याय; तथा अशुश्रूषवे श्रवणेच्छारहिताय न वक्तव्यम्; शुश्रूषवेऽपि[2] मदभ्यसूयापराय न वक्तव्यम् । सन्ति हि तेन तेन[3] तुच्छेन हेतुना शुश्रूषवो यथोक्तस्वरूपाय मह्यं पुनःपुनः परमेश्वराय मदनुग्रहाभावात् श्रद्धालक्षणप्रकृष्टगुणविनाकृताः सन्तोऽभ्यसूयन्ति—नास्त्येवैवंलक्षणः कश्चिदेकः परमेश्वर इति [4]तत्सद्भाववादिभिः सह विवदमाना गर्हामेवारभन्ते । तदिदमत्र संक्षेपत उपदेशलक्षणमुक्तम् । यो यथाप्रतिपादितस्वरूपाभ्यां परमेश्वरानुग्रहैकनिमित्ताभ्यां दैवसर्गाव्यभिचारिणीभ्यां भक्तिश्रद्धाभ्यां युक्तः स एव चतुर्ष्वपि वर्णेष्वेतज्ज्ञानविषयः, यतो भगवता वर्णानां कर्माण्येव प्रविभक्तत्वेन प्रतिपादितानि, ज्ञानं तु साधारण्येन; यतस्तेषां स्वकर्मविभागं प्रतिपाद्याह—

---

१. IO दितपरमवस्तु
२. BN[1] and BS[2] omit अपि
३. IO omits तेन
४. IO तद्भावं

" यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।
स्वकर्मणा तमेवार्च्य सिद्धिं विन्दति मानवः ॥ " इति ।

अनेन स्वकर्मानुष्ठाननिरतानां[1] सर्ववर्णानां परसिद्धिप्राप्तिः साधारणत्वेन निर्दिष्टा; न च स्वकर्मणा यथोक्तज्ञानशून्यानां परसिद्धिप्राप्तिहेतुत्वमस्तीति ज्ञानस्य सर्ववर्णसाधारण्यं स्फुटमेव भगवतादिष्टम् ॥

एवंविधश्चोपदेश्यः पुरुषो यावद[2]धीतावगता[3]नुष्ठितार्थं[4] गीताशास्त्ररूपम्—

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा स मामेष्यत्यसंशयम्[5] ॥ ६८½ ॥**

यः कश्चिदिदं यथोक्तं परमं गुह्यं सर्वज्ञानोपनिषद्भूतं मद्भक्तेष्वा[6]र्ता-द्यवस्थावर्तिष्वभिधास्यति उपदेक्ष्यति, सोऽन्ते[7] मामेष्यति, ब्रह्मैव परमं[8] संपत्स्यत इत्यर्थः । किं कृत्वाभिधास्यति ? मयि परमेश्वरे परां यथोक्तज्ञाननिष्ठात्मिकां भक्तिं सपर्यां कृत्वा निष्पाद्य । किमुक्तं भवति ? स्वयं परभक्तदशा[9]धिरोहपर्यन्तं ज्ञानमिदमात्मीकृत्य यः परस्मै भक्ताय प्रयच्छति, स मां मुख्यं फलमाप्नोतीति ॥

---

१. BS¹ and BS² रहितानां
२. IO and BS² यथावत्
३. BN¹ omits अवगत
४. IO तार्थगीता
५. BN¹ and BS¹ संशयं
६. IO क्तेषु समतायव
७. IO स नु
८. IO and BN¹ परं
९. IO दशारोह

एवंविधा ज्ञानिनः–

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो[1] भुवि ॥ ६९½ ॥**

तस्मात्परमगुह्यज्ञानोपदेशेन मदनुगृहीतभक्तजननिरुपमोपकारकारिणः पुरुषोत्तमात् सर्वमनुष्येषु मध्ये न कश्चिदन्यः प्रियकृत्तमः इष्टवस्तुसम्पादने सातिशयो भविता भविष्यति । एतदेव हि मम प्रियम्, यद्भक्तजनानुग्रहः; तमेव यः पुष्णाति तेन मे सातिशयं प्रियं कृतं स्यात्; किंच न च तस्मात्तथाविधादन्यः कश्चिन्मे प्रियतर[2] इष्टतरो भविता; तस्यैवाहं प्रियकारीत्यर्थः ॥

एवं निष्पन्नस्य योगिनो ज्ञानस्योपदेशफलमुक्त्वा श्रद्दधानस्यारुरुक्षोः पाठफलं प्रदर्शयितुमाह—

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७०½ ॥**

यश्च दैवसर्गभाक् कश्चिद्भक्तिश्रद्धासंस्कृतचित्तोऽपि प्रथमकल्पितत्वात् संप्रत्यनुष्ठानप्रावीण्यं समापन्नस्सन्नध्येष्यते, वस्तुभावनापरतया[3] इममावयोस्तव च मम च संवादं संकथनं धर्म्यं ज्ञानलक्षणात् परस्माद्धर्मादनपेतं पठिष्यति, तेनाहं

---

१. BN[1] प्रियतमः
२. IO omits प्रियतर...वाहं
३. IO तया ममा

यथोक्तज्ञानात्मकेन प्रकृष्टेन योगेनेष्टः सन्तर्पितः स्यामिति मे मतिः[1] निश्चिता प्रतिपत्तिः ॥

इदानीमध्ययनासमर्थस्यापि श्रद्दधानस्य श्रवणफलमाह—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१½ ॥**

योऽप्येतच्छ्रवणमात्रं श्रद्धाभक्त्यादि[2]गुणयुक्तो[3]ऽस्य शास्त्रस्य कुर्यात्, स यज्ञदानादिपुण्यकर्मकृतां सम्बन्धिनो लोकान् भोगभुवनानि प्राप्नुयादित्यस्यात्मज्ञानार्थस्य शास्त्रोपदेशाध्ययनश्रवणभेदेन परसूक्ष्मस्थूलविभागेन श्रद्धादिगुणविशिष्टमनुष्यमात्रसामान्येन त्रिविधं फलमादिशता भगवता सर्वेषां यथोक्तगुणविशिष्टानां ज्ञानाधिकारवतामुपदेशादिष्वधिकारोऽनुज्ञातः ॥

एवं परब्रह्मसमावेशलक्षणपरमसमाधिनिष्ठमात्मानं कृत्वा भगवता यदुकुलावतीर्णेन परमेश्वरेण इयता ग्रन्थसन्दर्भेण परमरहस्यभूतं ज्ञानं यत्प्रतिपादितं तस्य सम्यग्बोधाबोधजिज्ञासया अर्जुनमाह—

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्र[4]नष्टस्ते धनंजय ॥ ७२½ ॥**

---

१. IO विधिः
२. IO श्रद्धादिभक्त्या गुण
३. BN[1] गुणयुक्तस्य
४. BS[2] प्रणष्टः

अपि नामैतद्यथोक्तमेकाग्रेणानन्यविषयेण मनसा[1] त्वया श्रुतं श्रुतिमात्रेण परिगृहीतम्, ततश्च वस्तुभावनावशात् सञ्जातनिश्चयस्य कच्चित्तथा ज्ञानसंमोह अज्ञानात्तत्त्वाप्रतिपत्तेर्यः संमोहः सहजवशानुष्ठेयकर्मविचिकित्सालक्षणं वैचित्र्यं स विनष्टः प्रध्वंसमापन्नो न वेत्युच्यतामिति शेषः ॥

अत्र प्रत्युत्तरम् अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३½ ॥**

हे भगवन् अच्युत! परब्रह्मस्वरूपस्वात्मैकनिष्ठेतिविज्ञातैश्वर्यं भगवन्त मुचितेनाभिधानेनामन्त्र्याह— त्वत्प्रसादात्परस्वरूपप्रदर्शनलक्षणान्मम मोहो विनष्टः, अनात्मन्यात्मप्रत्ययादिरूपमज्ञानं प्रध्वस्तम्, यतः स्मृतिर्लब्धा सत्यात्मानुस्मरणं प्राप्तम्; अतश्च गतसन्देहो निवृत्तसंशयः स्थितोऽस्मि । यद्वशाद्धर्ममप्यधर्मत्वेन युद्धं प्रतिपाद्यमानो निवृत्तोत्सोह[2] आसम्, स संशयो विगलितः । ततस्तव वचनं यथोक्तज्ञाननिष्ठतया[3] स्वकर्मानुष्ठानोपदेशात्मकपरब्रह्मसमापत्तिफलं वाक्यं करिष्ये[4] क्रियया संपादयिष्यामीति ॥

धृतराष्ट्रपरिपृष्टसैन्यसन्निवेशकथनप्रसङ्गे कृष्णार्जुनसंवादद्वारेण परमरहस्य-[6] ज्ञानमर्थं प्रकरणमिदं येनैव प्रक्रान्तं तत्परिसमाप्तं सदुपसंहर्तुं स एव,

---

१. BS[1] त्वया मनसा
२. All except BN[1] उत्साहं
३. IO निष्ठया
४. BN[1] करिष्येति
५. IO सत्य
६. IO रहस्यं

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

स्पष्टार्थः श्लोकः ॥

इत्थमाश्चर्यभूतपरमरहस्यश्रवणे कुतस्तवाधिकार इत्याह—

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतरं महत् ।
योगं योगीश्वरात्कृष्णात् साक्षात्कथयतः स्वयम् ॥ ७५ ॥

एतदत्यन्तरहस्यं भगवतो यदुकुलावतीर्णात् कृष्णाभिधानात्परमेश्वरात् प्रयत्नाहितयोगानां योगिनामीशितुः सहजसिद्धनिरतिशयसमाधेः स्वयमात्मनैव साक्षादव्यवधानेन योगं यथाप्रतिपादितज्ञाननिष्ठतया स्वकर्मानुष्ठानलक्षणं निरतिशयं समाधिमर्जुनायोपदिशतोऽहमश्रृणवम् । कुतो हेतोः ? व्यासप्रसादाद्भगवत्कृष्णद्वैपायनानुग्रहात्; ते हि तस्मै तादृङ्महायोगश्रवणपरमेश्वररूपदर्शनादियोग्यताधानाय दिव्यं ज्ञानमयं चक्षुर्वितीर्णम् । अत्र एतदित्यादिपदानां सामान्योपक्रमविवक्षया नपुंसकत्वम् । वाक्यस्य विशेषाभिधानपर्यवसितत्वाद्योगशब्दः पुंस्यवबोद्धव्यः । योगं कर्मयोगाख्यं समाधिं कथयतो भगवत एतत्प्रकरणं गुह्यतरमहं श्रुतवानिति व्याख्येयम् ॥

---

१. BN[1] लोम
२. IO omits श्लोकः
३. IO योगेश्वरात्
४. All except IO दिश्यतः
५. BN[1] adds बोधं
६. IO एव तत्प्रक-

अत एवाह—

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि[1] च मुहुर्मुहुः ॥ ७६ ॥

तच्च संस्मृत्य परमं रूपमत्यद्भुतं हरेः ।
विस्मयो मे महाराज प्रहृष्ये च पुनःपुनः ॥ ७७ ॥

निरगदव्याख्यातौ श्लोकौ ॥

अथ येनाभिप्रायेण कुरुपाण्डवसैन्ययोः जयपराजयजिज्ञासारूपेण धृतराष्ट्रः पृष्टवान् तत्र निश्चयमाह—

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिः ध्रुवा[स्थिरा] नीतिर्मतिर्मम ॥ ७८ ॥

यत्र पक्षे वैश्वरूप्यदर्शनादिना प्रकटितानन्यसाधारणयोगैश्वर्यमहिमा भगवान् हरिस्तिष्ठति, यत्र चाप्रतिमनिजपराक्रमपरितोषित[2]पशुपतिः पार्थः पृथासूनुः कार्मुकभृत्तिष्ठति, तत्र पक्षे श्रीर्लक्ष्मीः विजयः सकलविपक्षक्षपणात् सर्वातिशायित्वं भूतिर्भवः सत्ता एते[3] स्थिरा इति प्रत्यक्षदृष्टकृष्णार्जुनप्रभावातिशयस्य मे मम बुद्धिरित्योम् ॥

---

१. BN[1] मीति
२. BN[1] तोषितः
३. All except IO च ते

[1]शब्दार्थाभिनवप्रकर्षसरसा सैषा कवीन्द्रस्य वा-
　ग्विस्रब्धैः परिचर्य्यतां सहृदयैस्त्यक्त्वा त्वरामादरात् ।
दिव्यामोदरसार्द्रभूरिकुसुमस्फीता नवोद्यानभूः[2]
　भृङ्गानैव यतस्ततो नयति वा नैषा पुनस्तादृशान् ॥

दधति बहवः श्लाघ्ये कर्मण्यवश्यमहो[3] नवं
　क्वचिदपि पुनस्तन्निर्वाहैः[4] कथां प्रतिपद्यते ।
वियति नियतं तेजोभाजः स्फुरन्ति सहस्रशः
　तिमिरै[5]र्विचलं धातुः सर्गं विधातुमलं रविः ॥

[6]भावः क्वापि विजृम्भते निजगुणौचित्येन जित्वा जग-
　द्दुर्वारः सु[7]मनोविशेषविदुषां वीतव्यपेक्षान्तरः ।
प्रत्यूषे विविधौषधीरसगुणास्वादैकहेवाकिनो
　धावन्त्येव हि पङ्कजे मधुलिहो लुप्तान्यपुष्पस्पृहाः ॥

---

१. All the manuscripts here add the verse अध्यायश्च नगेन्दुकः etc. (see p. 464) which should find a place at the end of adhyāya seventeen. Perhaps a verse referring to adhyāya eighteen is missing.

२. BS[1] and BN[1] भूर्भृङ्गान्

३. IO महोदयं

४. IO तस्मिन्नेकः

५. IO रुचिरविदलं
　BN[1] रुचिरविमलं

६. IO and BN[1] भावे

७. IO प्रसवोविशेष

आमोदो मलयद्रुमस्य पवनैर्विस्तार्यते दक्षिणै-
राघ्रायाप्यलयोऽयमन्यविषये[1] माद्यन्ति मन्दादराः ।
स्फीतोऽपि स्वगुणः स्वयं गुणवता वक्तुं कथं शक्यते
तेनावर्जयितुं जयन्तु स्वजनाः[2] केचित्कृताभ्युद्गमाः ॥

यो नारायण इत्यभूच्छ्रुतनिधिः श्रीकान्यकुब्जे द्विजः
तद्वंशे स्वगुणप्रकर्षखचितो[3] मुक्ताकणाख्योऽभवत्[4] ।
तस्यैषा सदृशानुजेन रचिता रामेण विद्वज्जन-
श्लाघ्यत्वात्सफलश्रमेण भगवद्गीता पदार्थप्रथा ॥

ये सत्यपीन्दुतारानिकरमणिशिखादीपकादिप्रकाशे
सन्तोऽप्यत्यन्तसौक्ष्म्यात् क्वचन विनिगता यान्ति नाशं निशायाम् ।
तन्न्यक्कारप्रगल्भस्वगुणविलसितेनाशु विद्योतयंस्तान्
सर्वान् सम्यक्पदार्थान् जयति दिनपतेः ज्योतिरित्यूर्जितं तत् ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
अष्टादशोऽध्यायः ॥



१. IO and BS² विषयं
२. IO सुजना: केचिच्चकृत्पुङ्गमाः
३. IO खचिते
४. All except IO मुक्तः

## Index of Ardhas

# INDEX OF CITATIONS

# CORRECTIONS AND ADDITIONAL NOTES

| Page | Line | Read |
|---|---|---|
| xxxvi | 21 | add the verse. |
| | | अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । |
| | | परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ |
| 18 | 8 | परयाविष्टः |
| 26 | 5 | यश्शोकं |
| 27 | 8 | मानुष्येणोप |
| 36 | 5 | लब्धृत्व |
| 42 | 2 | मानुष्येण |
| 48 | 9 | एषां |
| 50 | 13 | न्वर्थतया |
| 55 | 2 | आत्मतत्त्व |
| 60 | 11 | सिद्ध्यसिद्ध्योः |
| 66 | 11 | The reading found in the footnote might have been preferred in the body of the text. |
| 77 | 11 | रात्रिः |
| 101 | 5 | प्रवर्ते |
| ,, | 11 | यश्चाम |
| ,, | 16 | वर्तेय |
| 103 | 6 | कैर्म |
| ,, | 7 | तथासक्तः |

| Page | Line | |
|---|---|---|
| 115 | 11 | Vedānta Deśika in his Tātparyacandrikā [Pages 625-626, Venkateshwar Press Edition] remarks— |

"विद्ध्येनमिह वैरिणम्" इत्यस्यानन्तरं यादवप्रकाशीयैः 'इह केचित्पञ्च श्लोकान् पठन्ति' इति विलिख्य व्याख्यातम्—

अर्जुन उवाच—

भवत्येष कथं कृष्ण कथं चैष विवर्धते ।
किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः ॥

भगवानुवाच—

एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैस्सह ।
सुखं तत्र [सुखतन्त्र] इवासीनो मोहयन्पार्थ तिष्ठति ॥

कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः ।
अहङ्कारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥

हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ।
भयं चास्य करोत्येष मोहयंश्च मुहुर्मुहुः ॥

स एष कलुषः क्षुद्रः [छिद्रप्रेक्षी] धनञ्जयः ।
रजःप्रवर्तितो मोहात् [प्रवृत्तो मोहात्मा] मानुषाणामुपद्रवः ॥ इति ।

अत्र च

नानारूपैः पुरुषैर्वध्यमाना विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः शस्त्रैः कृत्ता विविधैः सर्व एव ॥

दिव्यानि कर्माणि तवाद्भुतानि पूर्वाणि पूर्वेऽप्यृषयः स्तुवन्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको धाता विधाता च विभुर्भवश्च ॥
तवाद्भुतं किंनु भवेदसह्यं किं वा शक्यं परतः कीर्तयिष्ये ।
कर्तासि लोकस्य यतः स्वयं विभो त्वत्तस्सर्वं त्वयि सर्वं त्वमेव ॥
अत्यद्भुतं कर्म न दुष्करं ते कर्मोन्मानं[र्मोपमानं] न च विद्यते ते।
न ते गुणानां परिमाणमस्ति न तेजसो नापि बलस्य नर्द्धेः॥ इति।

अत्र "दिव्यानि" इत्यादयः श्लोकाः नारायणार्यैरपि लिखिताः। "प्रजापतिस्त्वं प्रपितामहश्च" इत्यस्यानन्तरमन्यश्च श्लोकः

अनादिमानप्रतिमप्रभावः सर्वेश्वरः सर्वमहाविभूतिः ।
न हि त्वदन्यः कश्चिदस्तीह देव लोकत्रये दृश्यतेऽचिन्त्यकर्मा ॥ इति

एते श्लोकाः सन्ति न वेति देवो जानाति । पूर्वव्याख्यातृभिरनुदाहृतत्वादध्ययनप्रसिध्यभावाच्च भाष्यकारैरनादृताः । न च गीताशास्त्रस्य श्लोकसंख्या व्यासादिभिरुक्ता । अर्वाचीनास्त्वविश्वसनीया इति ॥

| | | |
|---|---|---|
| 120 | 8 | मनो बुद्धि |
| 156 | 11 | तं मे |
| 157 | 12 | द्वेष्टि न काङ्क्षति |
| 166 | 6 | कर्म |
| 167 | 16 | नौ संशयं |
| 197 | 8 | In the commentary on the Vijñānabhairava, II, 45 we find the following alternative reading यत्र यत्र मनो याति स्वतश्चञ्चलमस्थिरम् |
| 202 | 12 | Vijñānabhairava Vyā., 112 has the reading अभ्यासेनैव |

| Page | Line | Read |
|---|---|---|
| 206 | 7 | The Tantrāloka Vyā., XII 423 reads अपि जायते |
| ,, | 9 | The Tantrāloka Vyā., XII, 423 reads जन्म लोके |
| ,, | 14 | The Tantrāloka Vyā., XII, 424 reads प्रसङ्गाद्यतमानः |
| 215 | 10 | शब्दः खे |
| 219 | 9 | Rāmakaṇṭha in the Spandakārikā Vyā., 133 has another reading मायामेतां तरन्ति ते |
| 231 | 12 | For this citation from the Māṇḍūkya-kārikās (II, 12) Rāmakaṇṭha has another reading (i.e.,) स एव बुध्यते भेदात् in his Spandakārikā Vyā., 92. |
| 256 | 16 | स्वभाव |
| 268 | 14 | पिताहमस्य |
| 287 | 17 | Bhaṭṭānanda in his Vijñānabhairava Vyā. 12 has the reading अहं सर्वस्य |
| 298 | 8 | The footnote reading गिरामप्येकं should have been preferred in the text. |
| 301 | 6 | दण्डो |
| 311 | 4 | Instead of योगमैश्वरं Abhinavagupta reads रूपमैश्वरम् |
| 314 | 5 | The manuscripts do not contain, but it would be preferable to have the words अर्जुन उवाच |

| Page | Line | Read |
|---|---|---|
| 320 | 12 | Rāmakaṇṭha's reading was perhaps the one relegated to the footnote. |
| 321 | 8 | त्वच्छरीरं |
| ,, | 15 | विष्णो |
| 323 | 14 | हतांस्त्वं |
| 329 | 3 | Add १/२ to every one of the verses from here to the end of the Adhyāya. |
| 385 | 6 | विमुक्तैस्तु |
| 411 | 9 | विभक्ताः |
| 444 | 17 | All except BN[1] विमुक्तः |
| 465 | | Form a perusal of the Bhāratamañjarī one gathers the impression that according to him adhyāyas 16 and 17 formed together one adhyāya. His seventeenth adhyāya probably began with the beginning of the 18th adhyāya and ended with verse 19 of the same adhyāya. (Page 480). The rest of the adhyāya constituted the 18th adhyāya. See Bhāratamañjarī, 404 |
| 469 | 14 | यश्चात्म, |
| 480 | 7, 8 | संख्याने |
| ,, | 13 | Yogarāja in his Paramārthasāra Vyā. 59, has the reading भावमक्षयं |

In the index of citations, read the following thus :—

कल्पयत्यात्मना 231 Māṇḍūkyakārikā II, 12.

यो विकल्पमिदं 40 Utpaladeva Stotra, 13, 16.

The Bhagavadgītāṅka of the Kalyāṇa Kalpataru, reference to which was already made, mentions a text of the Gītā in 70 verses, inscribed on copper plates. Another text of the Gītā in the same number of verses—referred to as the Bali text is also mentioned in the same place. It may here be pointed out that both the texts are selections from the Gītā, some of the verses being common to both. Both the texts show certain deviations from the Vulgate, though the readings have nothing in common with the Kashmiriyan readings.

—

PRINTED AT SHAKTI PRESS LIMITED BY RAO BROS. (Regd.) MADRAS.

